Registered No. N. 551

॥ श्रीः ॥



## संस्कृतरत्नाकरस्य




संपादकः–

कविशिरोमणिभट्टश्रीमथुरानाथशास्त्री

सहायकसंपादकः

पं० वृद्धिचन्द्रशर्मा शास्त्री व्याकरण-धर्मशास्त्राचार्यः

प्रकाशकः–

म० म० श्रीगिरिधरशर्मा चतुर्वेदः

महाराजसंस्कृतकालेजाध्यक्षः

जयपुरम्

---

॥ श्रीः ॥

संस्कृतशिक्षापद्धतिपरिष्काराय
भारतप्रसिद्धविदुषां परामर्शात्मकः

अ० भा० संस्कृतसाहित्यसंमेलनमुखपत्रस्य

संस्कृतरत्नाकरस्य

# शिक्षाङ्कः

संपादकौ—
कविशिरोमणिभट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः
पं० वृद्धिचन्द्रशर्मा शास्त्री व्याकरणधर्मशास्त्राचार्यः

प्रकाशकः —
म० म० पं० श्रीगिरिधरशर्मचतुर्वेदः

प्रेमप्रकाशमुद्रणालयः जयपुरम्

सन् १९४०

# ❁ विषय-सूची ❁

संस्कृतरत्नाकरस्य 



भारतभविकविधाताऽधिष्ठाता सैष सकलविद्यानाम् ।
पठतां सुधासिषिक्तां शिक्षाङ्कलयतु कलामौलिः ॥ १ ॥

❀ श्रीः ❀




# संस्कृत–रत्नाकरः

# शिक्षाङ्कः

चित्रं द्विजपतिमण्डलकलासमृद्ध्यायमेधमानोऽपि ।
वेलामनतिक्रामन् संस्कृतरत्नाकरो जयति ॥

वर्षम् ६ | जयपुरम्, चैत्रः सं० १९९७ | मासः १२

## ❀ मङ्गलम् ❀

समस्तशास्त्रवारिधेर्विगाहने विपश्चितां
कदापि यत्प्रभावतो भ्रमो न जायते सताम् ।
सुधामयूखविस्फुरत्कलाकलापमञ्जुलां
प्रसन्नवक्त्रपङ्कजां समाश्रये सरस्वतीम् ॥ १ ॥

## 'शिक्षा सुशिक्षा मता'

भक्तिः शूलिनि, शक्तिरात्मदमने, किञ्चैकताना समा–
सक्तिः शास्त्रनिगूढतत्त्वकलने, व्यक्तिः श्रुतेर्मर्मणाम् ।
मुक्तिर्लक्ष्यमथाऽनुरक्तिरनघे धर्म्ये विधौ शाश्वती
भुक्तिर्वीतभया यया भवति सा शिक्षा सुशिक्षा मता ॥ २ ॥
विश्वेषामनुरञ्जनं परिषदि प्रत्यर्थिनां गञ्जनं
मिथ्यामोहविभञ्जनं परिणतौ शान्तेः समासञ्जनम् ।
नित्यं किञ्च निरञ्जने भगवति प्रेमामृतव्यञ्जनं
संज्ञायेत सखे! यया जगति सा शिक्षा सुशिक्षा मता ॥ ३ ॥

राजगुरु–व्याकरणाचार्य–श्रीचन्द्रदत्तशर्ममैथिलमहाभागाः

# ❀ प्रारम्भिकं निवेदनम् ❀

ज्ञानं मानं धनं धर्मं बलं कर्मसु कौशलम् ।
साधयन्ती सुशिक्षाऽसौ कल्पवृक्षायिता न किम् ॥

सर्वेषामेव शिक्षितमहाभागानां नेदमविदितं स्याद्यत् संस्कृतशिक्षाविषयकमिदमान्दोलनं येन केनापि रूपेण सुरसरस्वतीमिमामासेवमानानां सर्वेषामेव मनसि महान्तमेव विचारसंरम्भमुत्पादितवदस्तीति । नेदमनुचितमस्वाभाविकं चापि । सामान्यास्सामान्येऽपि विषये मुहुर्मनसि कृतास्पदे यदा संभवति संरम्भस्य जन्म, तदा शिक्षाविषयिणी संमुखमुपस्थिता सेयं समस्या किमिति न स्याद्विचाराय विचारशालिनाम् । शिक्षा हि न केवलमस्य मानवस्यैव, अपि तु पशुपक्ष्यादीनामपि जीवने महान्तमुत्कर्षमादधाति । शिक्षया ह्यनया तिर्यग्योनिवाही तुरगोऽपि समधिगच्छति धुर्यपदं विबुधेषु । शिक्षैव च सेयं जीवनयात्रोपयुक्तं सामर्थ्यं संपादयतीति सारतः समधिगन्तव्यं स्यात् । अत एव हि प्रोच्यते "धनुषि शिक्षते, धनुर्विषयके ज्ञाने शक्तो भवितुमिच्छतीति" ।

एतस्मिन्काले प्रचलिता सेयं संस्कृतशिक्षा श्रद्धया श्रमेण च सेवमानानामपि समभीष्टं सौविध्यं न संपादयन्ती समयानुकूलं संस्कारमपेक्षत एवेति सुचिरादेव लोकेषु संघटितमान्दोलनम् । बहवो महाभागाः शुद्धां प्राचीनपद्धतिमेव यथाकथंचन निर्वाहयितुं बद्धपरिकरतया नवीनपद्धत्या संजायमानं संस्कारं कदाचन नानुमन्येरन्, किन्तु प्राचीनशैलीभुक्तः संस्कारस्तु तत्राप्यपेक्षित एवेति को वा निराग्रहो न मन्येत ? समतीते हि समये सर्वोपि संस्कारमपेक्षते । समयनियमनाय सर्वेषां प्रमाणभूता स्वयं 'ज्यौतिषसारिणी' अपि समयवशतः साम्प्रतं संस्कारमपेक्षते, किमन्यत् ? शिक्षासंस्कारमवलम्ब्य 'अखिलभारतीयसंस्कृतसाहित्यसंमेलनेना' पि पूर्वं पण्डितमहाभागानां सविधे प्रश्नोत्तरादीन्युपस्थापितानि, परं यथाभिलषितं नाऽवधानमभून्महाभागानाम् ।

समयेस्मिन् शिक्षापरिष्कारस्य सुखदः समीरणः सर्वतोऽपि प्रचलितोऽस्ति परमस्माकमनिर्वचनीयभाग्यवैभवात्सेयं संस्कृतशिक्षैव परिष्कारसौभाग्यं नावाप्नोतीति प्रत्यक्षमीक्ष्यते । 'वर्धास्कीम'मध्ये भारतीयशिक्षाविषयमादाय गान्धिमहोदयप्रमुखैर्भूयान्मनोयोगः कृतोऽभूत् किन्तु तत्रापि 'हिन्दोस्थानी'भाषाविषयक एव विचारः संवृत्तः । एष संस्कारो भारतस्य गौरवाय हिताय भवेदथवा ईदृशसंस्कारापेक्षया वराकया असंस्कार एव वरमासीदिति तु विचारान्तरम् । सति संभवे प्राप्येत सोऽयमपि विचारोऽस्मिन्नङ्के । किन्तु समग्रराष्ट्रस्य शिक्षाविचारेऽपि, आर्यसभ्यतामूलभूतायाः

संस्कृतशिक्षाया उपरि न कस्यापि दृष्टिराकृष्टेति किमतोऽधिकं दौर्भाग्यं स्यात् ।

संस्कृतपण्डितान्विहाय नास्या उपरि कैश्चिदन्यैर्विचारयितव्यम् । ते तु भवितव्यतावशान्नात्र किञ्चिदवदधते । अतएव 'विशेषाङ्क'प्रसङ्गेन पुनरपि संस्कृतशिक्षाविषयकमेव पूजोपहारमादाय 'संस्कृतरत्नाकरो' समुपतिष्ठति संमुखे श्रीमताम् । एतन्निबन्धगताः संमतीः सावधानं विमृशन्तः पण्डितमहाभागा एव शिक्षाविषयिणीमिमां समस्यामवश्यावश्यं पूरयेयुः । निर्धारयेयुश्च सुनिश्चितं पाठ्यक्रममिति दृढं विश्वसन्निबन्धपुष्पोपहारमिममङ्गीकर्तुमतिविनम्रमभ्यर्थयते—

भट्टमथुरानाथशास्त्री

---

# शिक्षाया उद्देश्यम् ।

( महामहोपाध्यायश्रीप्रमथनाथतर्कभूषणभट्टाचार्यमहाभागः )

शिक्षाशब्दस्यार्थो ज्ञानार्जनम् । येन खलु ज्ञानेन दुःखनिवृत्तिः सुखञ्च समुत्पद्यते तादृशस्यैव हि ज्ञानस्य शिक्षाशब्देन व्यपदेशो भवतीति निर्विवादम् । दुःखनिवृत्तये, सुखप्राप्तये, आत्यन्तिकदुःखनिवृत्तये वा यज्ज्ञानमपेक्षितं तद् द्विविधम्—लौकिकमाध्यात्मिकञ्चेति । तत्र लौकिकं यज्ज्ञानं तस्यार्जने नानोपायाः सन्ति । चिकित्साशास्त्रं, वार्त्ताशास्त्रं, राजनीतिशास्त्रं भूतविज्ञानं तथा गणितशास्त्रमित्येवमादिकं लोकेषु सम्यक् प्रचरति प्रयोजनवशेनोत्तरोत्तरमुपचीयते च । आत्यन्तिकदुःखनिवृत्तयेऽपेक्षितमाध्यात्मिकं ज्ञानं यद्यपि साधारण्येन गीर्वाणवाणीवत् भाषान्तरेष्वपि दृश्यते तथापि गीर्वाणवाणीमयशास्त्रेष्वध्यात्मशास्त्रतया प्रथितेष्वात्यन्तिकदुःखनिवृत्तेरुपायतयोपदिश्यमानं यदात्मतत्त्वविज्ञानं तदन्यत्र न तथा प्राचुर्य्येण सामग्र्येण च समुपलभ्यत इत्याध्यात्मतत्त्वविदां गोष्ठीषु सुदृढो निश्चयः । लौकिकसुखस्य समुपार्जनहेतवः सहस्रश उपाया न केवलं शास्त्रेणैव गीर्वाणवाणीमयेन, अपितु भाषान्तरमयैर्निबन्धैः सहस्रशः समुपदिष्टाः लोकेषु समुपदृश्यन्ते ।

एवम्विधानां सर्वेषां ज्ञानानां समुपार्जनाय शिक्षा सर्वथाऽऽवश्यकीत्यस्मिन् विषये यद्यपि नास्ति कोऽपि विप्रतिपत्तिलेशावसरस्तथापि भारतीयानामस्माकं सनातनधर्म्मावलम्बिनां शिक्षाया इदमेव हि उद्देश्यतया प्रतिभाति यत् मानवजन्मसाफल्यम् । मानवजन्मनः साफल्यं कथं भवितुमर्हतीति चिन्तायां भगवता श्रीवेदव्यासेन महर्षिणा विरचितः कश्चन श्लोकः श्रीमद्भागवते महापुराणे समुपलभ्यते यथा—

सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावबोधधिषणं मुदमाप देवः॥

अनेन हि श्लोकेन विस्पष्टतयेदमेव प्रतिपाद्यते यत्तदेव हि मानवजन्मनः साफल्यं यद् देहाद्यात्माभिमानपरित्यागेन निर्म्मलदर्पणोपमे विशुद्धे चेतसि सर्वात्मभूतस्य सच्चिदानन्दघनविग्रहस्य निखिलसौन्दर्य्यमयस्य श्रीभगवतः स्वरूपसाक्षात्कारः। तथाहि–जगत्सृष्टौ तस्य भगवतो या प्रवृत्तिः किन्तस्या मूलमिति चिन्तायामुपनिषत्सु एवं श्रूयते 'स एकाकी नारमतेति' "तदैक्षत बहु स्याम्, प्रजायेय" इति च। अत्र च एकाकित्वेन निखिलसौन्दर्य्यसारस्यानन्दमयस्य श्री भगवतो येयमरतिः श्रूयते, सा कथं संगच्छते इति प्रश्ने अध्यात्मतत्वविदो वर्णयन्ति श्रीभगवतः सर्वसौन्दर्यनिधानस्य स्वे महिम्नि शश्वदवस्थितस्यात्मसौन्दर्यमाधुर्य्यादिविलोकनसमर्थस्य कस्यचिच्चेतनस्य स्वविलक्षणस्य विरहे येयमरतिर्नाम सा तु सर्वथा स्वाभाविक्येव भवितुमर्हति, तदेव हि सौन्दर्य्यं यद्विलोकनेन कस्यचिदन्यस्य परितृप्तिर्जायते। सौन्दर्यं वर्तते तच्चापरिसीममथ च यदि न कोऽपि तस्य द्रष्टा दर्शनेन तृप्तिमवाप्तः नयनयोर्मनसश्च साफल्यम्मन्यमानश्च न स्यात्, तर्हि न तत् कदाचिल्लोके सौन्दर्य्यपदास्पदं भवितुमर्हतीति सुविदितमस्ति प्रेक्षावताम्।

यद्येवं तर्हि सृष्टेरादौ निखिलानन्दसारभूतमूर्त्तेः निखिलसौन्दर्य्यमाधुर्य्यलावण्यवैचित्र्यसारविग्रहस्य सकलश सनात–नाश्रयस्य श्रीभगवतोऽद्वितीयत्वेन द्रष्टुरभावे श्रुतिषु समावेदिताऽरतिः सर्वथा युज्यत एव। तामरतिं प्रतिक्षेप्तुं तस्य 'बहु स्यां प्रजायेयेति' संकल्पो यदैवाजनि तदैव तदीयावितर्क्यस्वरूपशक्तिप्रभावेणाऽविभक्ततयाऽवस्थिताः समिद्धादग्नेर्व्युच्चरन्तः स्फुलिंगा इवासंख्याता जीवाः प्रतिदिशं प्रादुरभवन्नित्यौपनिषदाः समामनन्ति। ते च जीवा भगवतः सौन्दर्य्यमाधुर्य्यादिसाक्षात्कारेणैव तल्लीलाशक्ताः साफल्यं सम्पादयितुमर्हन्ति नान्यथा। स च साक्षात्कारो देहेन्द्रियमनोबुद्धिसम्बन्धमन्तरेण नैव भवितुमर्हतीति अघटनघटनापटीयस्या स्वीयशक्त्यैव श्रीभगवान् तेषां तत्साक्षात्कारोपयोगि देहेन्द्रियादिकं निर्म्मातुमारेभे इति यदुक्तं भगवता श्रीमद्भागवतीये समुद्धृते श्लोके तत् सर्वथा संगच्छत एव। आदौ तामसं ततो राजसम् अनन्तरं सत्त्वप्रधानम् अधममध्यमोत्तमपरिमाणं नानाविधं शरीरं निर्म्माय श्रीभगवान् तृप्तिं न लेभे परन्तु अन्ते मानुषदेहं विधाय स तृप्तिमवाप्तवान्। कुत इतिचेदस्ति मानवदेह एवान्तर्निविष्टा विलक्षणा काचन बुद्धिर्यस्यां प्रागुभवीयसुकृतिकोटिवशाद् भगवत्कृपया च विशुद्धायां निर्म्मलदर्पणकल्पायाम् आनन्दमयस्य रसघनस्य सर्वसौन्दर्य्यमाधुर्य्या–

दिसारविग्रहस्य सर्वात्मभूतस्य श्रीभगवतः सर्वात्मना सम्यक् प्रतिविम्बग्रहणयोग्यता वरीवर्त्ति इति सर्ववेदान्तसारस्य श्रीमद्भगवद्वेदव्यासीयनिर्विकल्पसमाधिचरमपरिणतिरूपस्य सकलपुराणशिरोमणेः श्रीमद्भागवतस्य सिद्धान्तसारः ।

स्थिते चैवं सिद्धान्तसारे इदमेव हि फलति यत् मानुषजन्मनः साफल्यं देहाभिमानमूलकस्य सकलानर्थनिदानस्य रागद्वेषादेः प्रहाणेन स्वच्छस्फटिकायमानायां बुद्धौ अन्ततः प्राणात्ययात् प्राक् तस्यैव श्रीभगवतः साक्षात्कार एव । अन्यच्च, सन्ति अभारतीयास्तथाकथिता विचित्राः सभ्यताः समालम्बमाना नानाजातीया मानवाः परस्परं विवदमानाः प्रापञ्चिकं सुखं क्षणिकञ्च दुःखनिवृत्तिमर्थयमानाः संगिरन्ते यत् मानवसभ्यतायाः समुत्कर्षो धनार्जने वैरिनिपीडने यशोऽर्जने झटितिवैरिनिपातनसमर्थबहुविधशस्त्रसम्पादने, समरपराजितदैन्यदुःखदुर्दशाग्रस्तशत्रुभिः स्वीयासाधारणविजययशःख्यापने च समुल्लसति नान्यथेति ।

तदेतद् भारतीयसभ्यताप्रवर्त्तका महर्षयो नानुमन्यन्ते, भारतीयसभ्यतामयमहाप्रासादस्य इयमेव भित्तिर्मूलभूता यद् देहात्माभिमानविसर्जनेन परमात्मनः साक्षात्पूर्वकं तत्रैवात्मसमर्पणम् । धनार्जनं यशोऽर्जनं प्रापञ्चिकसुखसम्पादनं स्वजनप्रतिपालनञ्चेत्येवमादिकन्तु अस्मिन् संसारे गौणमेव फलं भारतीयानां न तु मुख्यम् । मुख्यन्तु फलं समुद्धृतभागवतीयश्लोके सुस्पष्टतया निर्दिष्टमस्ति । एवं स्थिते शिक्षा नाम सैव भवितुमर्हति यया प्रागुक्तभागवतश्लोकनिर्दिष्टं यन्मानवजन्मनः साफल्यं तत् साक्षात् परम्परया वा सुसाधितं भवेत् । सा च शिक्षा गीर्वाणवाणीसमाश्रयणमन्तरेण भारतीयानां सनातनधर्म्मावलम्बिनां न अन्येन केनाप्युपायेन परिपूर्णतामुपैतुमर्हतीति गीर्वाणवाणीसंसेवनमेव हि सम्यक्शिक्षायाः प्रधानतमं साधनमिति शिक्षामर्मविद्भिः सर्वैरेव भारतीयैः सनातनधर्म्मैकशरणैरवश्यमेवांगीकरणीयम् ।

साम्प्रतं सभ्यजनेषु सर्वत्र जडविज्ञानस्यैव प्राधान्यं समुद्घोष्यते । फिसिक्सितिनाम्ना प्रसिद्धा या विद्या, सैवास्माभिरिह जडविज्ञानशब्देन निर्दिश्यते । तेन खलु जडविज्ञानेन या खलु समुन्नतिर्मानवानां भवितुमर्हति सा कीदृशीति प्रथमतो विचारणीयम् । सुखं दुःखनिवृत्तिश्चेति द्विविधमेव मुख्यं प्रयोजनं सर्वेषां जीवानाम् भवतीत्यस्मिन् विषये नास्ति कस्यापि प्रेक्षावतो विप्रतिपत्तिरिति सुस्थितम् । तदेतत् जडविज्ञानं मानवानां सुखं वर्धयति इति वैज्ञानिकानां मतमिति । तदेतन्मतं सम्यक् भवितुमर्हति न वेति अस्ति अत्र बहूनां प्रेक्षावतां विप्रतिपत्तिः । सुखस्य मुख्यप्रयोजनत्वं सर्वैरङ्गीक्रियते, तस्य च सुखस्य का नाम वृद्धिर्दार्शनिकैः सुखस्य विषयेन्द्रियसंयोगसमुत्पादि-

तस्य क्षणद्वयस्थायित्वमङ्गीक्रियते । तच्च सुखं यस्मिन् क्षण उत्पद्यते तद्द्वितीयक्षणे मानससाक्षात्कारविषयतामापद्यते तृतीये च क्षणे नश्यति । एवम्विधस्य वृद्धिः कथं भवितुमर्हति ? प्रत्येकसुखव्यक्तीनां द्विक्षणमात्रस्थायिनीनामद्रव्यानामवयवोपचयाऽसम्भवात् महत्तरत्वप्राप्तिरूपा वृद्धिः कदापि न भवितुमर्हति इति सेयं वृद्धिः सन्ततधारात्मिकयेवागत्या सर्वैरङ्गीकरणीया । सा च सन्ततधारात्मिका वृद्धिः सुखसामग्रीधारासम्पादनमन्तरेण न सुसाधा भवेत् । का नाम सुखसामग्री तदिदानीं विचार्य्यताम् । बहिरिन्द्रियपञ्चकेन शब्दस्पर्शरूपरसगन्धाख्यानामभीप्सितानां विषयाणां सन्निकर्षः सुखसामग्यामन्तर्भवतीति दार्शनिकानामखण्डनीयः सिद्धान्तः । जडविज्ञानोत्कर्षेण एतादृशविषयेन्द्रियसन्निकर्षघटितसामग्र्याःसातत्यं सम्भवति न वेत्यस्य प्रश्नस्य किमपि सदुत्तरं इदानीमपि जडविज्ञानवादिनां मुखेभ्यः किमपि नाकर्णितमस्माभिः ।

जडविज्ञानस्य हि प्रधानतममवलम्बनं कार्य्यकारणभावतत्त्वम् । स च कार्य्यकारणभावस्त्रिधा व्यवस्थापितः प्रेक्षावद्भिः आरम्भः परिणामो विवर्त्तश्चेति । त्रिविधश्चेदं कार्य्यकारणभावतत्वमज्ञानमूलकमिति सम्यग् विचार्याद्वैतवादाचार्यमुख्यैर्माधवाचार्यापरनामकैः परिव्राजकैर्गुरुभिर्विद्यारण्यमुनिभिः स्वकृतपञ्चदश्यां यथार्थमिदमुक्तम्—"निरूपयितुमारब्धे निखिलैः सकलैरपि । अज्ञानं पुरतस्तेषां भाति कक्षासु कासुचित् ।" निखिलस्य कार्य्यकारणभावप्रपञ्चस्य यदेतदज्ञानमूलकत्वं विद्यारण्यमुनिभिर्निःसंकोचं निराबाधञ्च समुद्घोषितं तदुपरि जडविज्ञानवादिभिः किं समाधानमाविष्कृतं प्रचारितम्वा प्रेक्षावतां गोष्ठ्यां तत्राधुनापि न कोऽपि तमोऽपसारणयोग्य आलोकपातः समजनि ।

स्थिते चैवं कः खलु प्रेक्षावान् विज्ञानवादमात्रावलम्बनेन निखिलमनुष्यजातेः सुखसम्पत्तिप्रसारणमूलिकां समुन्नतिमेकान्तेन निश्चेतुं श्रद्दधीत ? ईदृश्येव गतिर्जडविज्ञानावलम्बनेन दुःखनिवृत्तेरप्युपायचिन्तायां पर्य्यवस्यतीति सुधीभिः स्वयमेवोहनीयम् । तदेवमीश्वराधीनता सर्वेषां कार्य्याणां यैर्नाङ्गीक्रियते मानवबुद्धेः स्वीयसुखसाधन--दुःखनिवृत्तिसाधन—सम्पत्तौ सर्वथाऽसम्यक्त्वं पदे पदे भ्रान्तिपक्षपातित्वञ्च ये नाकलयन्ति च तेषां प्रथितपौरुषाणां सभ्यमानिनां समुद्भावितमेव पन्थानं समवलम्बितुं व्यग्रतया ये प्राचीनतमां भारतीयां सभ्यतां विनिन्दन्तः संस्कृतभाषायां सर्वपुरुषार्थसिद्धौ तदुपयोगितायाञ्च हतादराःते सन्तु देवानां प्रियाः । दूरत एव तान् नमस्कुर्म्मे इतिशम् ।

———

# ❀ आर्ष-शिक्षा-पद्धतिः ❀

( वाराणसेय-विद्वद्वरश्रीचण्डीप्रसादसुकुलमहाशयः )

पुरा * काले किल श्रावणपौर्णमास्यां भाद्रपदपौर्णमास्यां वा उपाकर्म नाम स्मार्तं कर्म यथाविधि अनुष्ठाय सार्द्धचतुरो मासान् केवलान् वेदान् गुरुभ्यः शिष्या अध्यगीषत । पौषमासस्य माघमासस्य वा शुक्लपक्षे पूर्वाह्णे प्रथमेऽहनि उत्सर्गाख्यं स्मार्त्तं कर्म अनुष्ठाय, पक्षिणीं तदेवैकमहर्निशं वा अध्ययनाद् विरम्य, तत ऊर्ध्वं शुक्लपक्षेषु केवलान् वेदान् नियमेनापाठिषुः, कृष्णपक्षेषु च सर्वाणि वेदाङ्गानि शिक्षादीन्यपठन् । तत्र काले वेदप्रामाण्ये कस्यापि विमतिर्नासीत् । वेदाश्चतुर्विधपुरुषार्थसाधनोपदेशपरा इति प्रजामात्रस्य दृढनिश्चयोऽभूत् । अङ्गानामध्ये शिक्षाया अध्ययनं वेदस्योच्चारणपरिशुद्धये, निरुक्तस्य व्याकरणस्य चाध्ययनं वेदार्थपरिज्ञानाय, ज्योतिषोऽध्ययनं यागानुष्ठानकालविज्ञानाय, छन्दसामध्ययनं ऋग्यजुर्भेदपरिज्ञानाय, कल्पस्याध्ययनमस्मिन् यागेऽनेन मन्त्रेण इदं कर्म्मानुष्ठेयमिति विनियोगपरिज्ञानायासीत् । श्रोत्रियाणां पद-वाक्य प्रमाण-निष्णातानां सत्यनिष्ठानां ब्राह्मणानां प्रशासने सर्वाः प्रजाः स्वस्ववर्णाश्रमोचितान् धर्माननुतिष्ठन्त्यः सुखेन शान्त्या च समयमनयन्–

अत्र प्रमाणम्–

'श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्' ॥
म० अ० श्लो० ५ ।

'पुष्ये तु छन्दसां कुर्याद्, बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥'
म० अ० ४ श्लो० १६ ।

'यथाविधानं कृत्वा तु बहिरुत्सर्जनं द्विजः ।
विरमेत्पक्षिणीं वापि तदेवैकमहर्निशम् ॥'
म० अ० श्लो० ९७ ।

'अत ऊर्ध्वं तु छन्दांसि शुक्ले तु नियतः पठेत् ।
वेदाङ्गानि च सर्वाणि, कृष्णपक्षेषु सम्पठेत् ॥
म० अ० ४ श्लोक ९८ ।

इति मनुवचनचतुष्टयमुपाकर्मादिप्रतिपादकपारस्करादिगृह्यसूत्रकदम्बकञ्च । आर्षशिक्षायाः साङ्गाश्चत्वारो वेदा एव विषया आसन्निति मम बुद्धिं प्रति भाति । यस्तु उपनिषत्सु वैश्वानराद्युपासनोपदेशः तत्त्वमस्यादिज्ञानोपदेशश्च, स न समावर्त्तनात् पूर्वं ब्रह्मचर्य्याश्रमेऽनुष्ठेयामार्षशिक्षामध्यास्ते स्म । किन्तु अधुनातनतान्त्रिकमन्त्रोपदेशवत्ततः पृथगेवासीत् इति श्वेतकेतुप्रभृतेराख्यानात्स्पष्टम्प्रतीयते । श्वेतके–

* यद्यपि वेदा अनादयः अपौरुषेयाः, तेषां शिक्षाप्रकारश्चानादिरेव तथापि अनादिप्रवाहपतिता ऋषयः अध्यापकाः ब्रह्मचारिणश्च कुतः कालादारभ्य किंकालपर्यन्तं कान् ग्रन्थान् अध्यगीषत, इत्येव निर्णयो मन्वादिग्रन्थेभ्यः कर्तुं शक्यः ।

तुर्हि पित्रा प्रबोधितः द्वादशवर्षः सन्नाचार्य्यमुपेत्य द्वादशभिर्वर्षैः कृत्स्नं वेदमधीत्य कृतसमावर्तनः गृहं समागमत्। गृहम्प्राप्ताय तस्मै पिता तत्त्वमसीति वाक्यं नवकृत्वः उपदिष्टवान इति छान्दोग्ये ६ अ० २ मन्त्रे आम्नातम *। श्रीमद्भागवते प्रथमस्कन्धे प्रथमाध्याये सूतशौनकादिसंवादात्स्पष्टम्प्रतीयते यद् वेदार्थोपबृंहणार्थं ब्रह्मचारिणः पूर्वाह्णे कृतवेदाध्ययनाः गृहस्थाश्च पूर्वाह्णे कृतयागादिकर्म्माणः अपराह्णे–इतिहासपुराणादेः छान्दोग्ये भूमविद्योपक्रमाम्नातानामन्यासां वाकोवाक्या ( तर्का ) दीनाञ्चाध्ययनमन्वतिष्ठन्।

अध्ययनकालाश्च गर्भाष्टमेऽब्दे उपनीतस्य विप्रस्य षट्त्रिंशद्वर्षाणि, अष्टादशवर्षाणि, नववर्षाणि वा आसन्।

अत्र प्रमाणे—

'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥'
म० अ० २ श्लो० ३६।

'षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥'
म० अ० ३ श्लो० १

इति मनुवचने। तदानीमस्माकं पूर्वजाः श्रोत्रिया ऋषयः चतुर्वेदिनः त्रिवेदिनः द्विवेदिनः शुक्लयजुर्वेदिनः अग्निहोत्रिणः वाजपेयिनः अभवन् इति अधुनातनैरास्माकीनैरन्वर्थहीनशुक्लादिनामभिरनुमीयते। छात्राणामध्ययनप्रकारः, तदानीन्तनव्रतकलापः, शरीरयात्रानिर्वाहप्रकारश्च मन्वादिधर्मशास्त्रेभ्योऽवगन्तव्याः—

इयमेवार्षशिक्षापद्धतिः॥

---

# ❁ पुरातनशिक्षापद्धतिः ❁

( वाराणसेयविद्वत्प्रवरश्रीचण्डीप्रसादसुकुलमहाभागः )

सदा समानि दिनानि न भवन्ति। यान्यस्माकं सुखप्रचुराणि शान्तिमयानि दिनान्यासन्, *तान्येव दुःखमयानि अशान्तिप्रधानानि अभवन्। अस्माकं हृदि वेदस्य

---

* सत्यकामस्य जाबालस्य गुरोः-ब्रह्मचारिणः कामलायनस्य छान्दोग्ये ४अ०६प्र०१०ख०समाम्नाताद् वृत्तान्ताच्च स्पष्टम्प्रतीयते, यदुपासनोपदेशः आर्षशिक्षावहिर्भूत एवेति–सत्यकामो जाबालो हि अन्यान् सब्रह्मचारिणः समावर्तयन्नपि कामलायनं न समावर्तयदित्यादि तत्राम्नातम्। यदि हि उपासनोदेशः आर्षशिक्षान्तर्गतः स्यात्तर्हि कथं महर्षिर्जाबालः आर्षशिक्षाङ्गभूतमुपासनोपदेशमन्तरैव अन्येषां समावर्तनं कृतवान्, कामलायनस्य समावर्तनार्थमपि जायया सोपालम्भं प्रार्थितः स्यात् शिक्षायाः अपूर्णत्वात् प्रश्नोपनिषदः वैश्वानरविद्यायाश्चालोचनेन प्रतीयते। यद् गृहस्थेन श्रोत्रियेण गृहस्थेभ्यः श्रोत्रियेभ्यः ज्ञानाद्युपदेशः अक्रियत इति।

* दिनानां समत्वादैक्याध्यवसायादियमुक्तिः।

कर्मकाण्डे, ज्ञानकाण्डे च दुर्दैवपरिपाकात् शुष्कतर्काः प्रादुरभवन् । प्रतिपदञ्च दौर्भाग्याच्छङ्काः प्रादुर्भूताः । तन्निवृत्तये पूर्वोत्तर-मीमांसयोः, सांख्ययोगयोः, न्यायवैशेषिकयोश्च पठनावश्यकता समजनि । वेदार्थोपबृंहणार्थं च इतिहासपुराणानां धर्मशास्त्राणाम्प्राधान्येनाध्ययनम्प्रावृतत् । पश्चात्-दार्शनिकानां मतभेदात् परस्परं शास्त्रार्थे विजिगीषूणामस्माकं हृदि व्याकरणपाटवस्य तर्कप्रागल्भ्यस्य चोत्कण्ठा प्रादुरभवदिति–"प्रधाने च कृतो यत्नः फलवान् भवति । प्रधानं च षट्स्वङ्गेषु व्याकरणम्" इति महाभाष्यवचनात्, – "सेयमान्वीक्षिकी–प्रदीपः सर्वविद्यानामुपायः सर्वकर्म्मणाम् । आश्रयः सर्वभूतानां विद्योद्देशे प्रकीर्तिता" इति न्यायभाष्याच्च प्रतीयते । पुरा सर्वेषामध्येतव्यानामध्ययनं साम्येनासीत् । एनयोर्वचनयोस्तु–सर्वाण्यप्यध्येतव्यानि विहाय पुरा व्याकरणम् आन्वीक्षिकी च एवाध्येतव्या–पश्चाद् यथासम्भवमन्यदपि अध्येयमित्याशयोऽनुमीयते । दृश्यते हि प्रबल-सिद्धान्तस्यापि पुरुषस्य व्याकरणपाटवहीनस्य तर्कप्रागल्भ्यरहितस्य पराजयः । तथैव व्याकरणान्वीक्षिकीपाटवोत्कण्ठया आचार-वैधुर्य्येण विद्यार्थिनामध्यापकानाम्परस्पर-विद्वेषेण च आर्षशिक्षापद्धतिः लुप्तप्रायाऽभूत् । नाममात्रावशेषौ उपाकर्मोत्सर्गौ जातौ । ब्रह्मचर्यव्यवस्थापि लुप्तप्राया जाता । ग्रामे स्वगृहे एव स्थिता गुरवः छात्रान् स्वग्रामस्थितान् अन्यत आगतान् वा अध्यापिपन् । अन्यत आगतानां छात्राणां शरीरयात्रासम्पादनञ्च ग्रामनिवासिनां धनिनां श्रद्धालूनामधीनमासीत् । ग्रामे च प्राधान्येन व्याकरणं न्यायं वाधीत्य पश्चात् इदानीं काशीमिव–तदानीं काशीं तक्षशिलां वा गत्वा तत्रत्यसंस्कृतविद्याकेन्द्रभूतमहाविद्यालये तत्तद्विद्यानिष्णातेभ्यः तत्तद्गुरुभ्यो यथारुचि एकाम्, द्वे, सर्वा वा विद्या अपठन् इति ।

एष तक्षशिलामहाविद्यालयः बुद्धाविर्भावात् प्राक्काल एव वैदिकैः स्थापितः, अत्राष्टादशविद्यानाम् पृथक् पृथक् विद्यालया आसन् । अत्रैवाधीत्य पाणिनिमुनिर्व्याकरणे, मौर्यचन्द्रगुप्तस्य प्रधानामात्यश्चाणक्यः नीतिशास्त्रे, काशिराजपुत्रो दिवोदासः अन्ये च जीवकप्रभृतयः आयुर्वेदे निष्णाता अभवन्* इति बौद्धग्रन्थानां जातकानामाश्रयेण–१९०९ ईश्वीयवर्षे जनवरीमासे प्रकाशितसरस्वतीपत्रिकायां वैक्रमीय १९७९ वर्षे पौषमासे प्रकाशितमाधुरीपत्रिकायां च तक्षशिलाविश्वविद्यालयविषयक-लेखात् प्रतीयते । यद्यपि तदानीमुपनयनवेदारम्भसमावर्तनाख्यसंस्काराः एकस्मिन्नेव दिने

* अत्र षोडशवर्षाः कृतसमावर्तना एव छात्राः प्रावेश्यन्त । अध्ययनकालनियमश्च स्वुत्पत्त्यधीन एवासीत्–मगधराजबिम्बिसारराजवैद्यो जीवकः सप्तभिरेव वर्षैः स्वाध्ययनं समापिपत् ।

प्रावर्तिषत, तथापि आर्षशिक्षाकालवत् सर्वेषां द्विजानां देवे, गुरौ, शास्त्रे च विश्वासः सम्यगासीत। जीवितादपि अधिकः प्रेयान् धर्म आसीत्। नेदानीमिव धनस्य प्रतिष्ठाया वा लिप्सया द्विजानां हृदि वृन्ताककैङ्कर्यमासीत्। आर्षशिक्षापद्धतेरर्वाचीना इयमेवास्माकं प्राचीनशिक्षापद्धतिः। तस्मिन्नेव मतभेदप्रवाहे प्राचीनशिक्षाकाले "छिद्रेष्वनर्था बहुलीभवन्ति" इत्याभाणकं चरितार्थयतां केषाञ्चिद् हृदि इयं भावना प्रादुरभवत्, नहि जीवत्सु वेदानुयायिदर्शनेषु वेदप्रामाण्यं व्यवस्थापयितुं वयं प्रभवामः, इति ते वैदिकषड्दर्शनप्रतिद्वन्द्वितया—स्वस्वमतानुसारेण षड्दर्शनानि प्रावर्तयन्। एवं वैदिकेष्ववैदिकेषु दर्शनेषु अवान्तराणि अनेकानि दर्शनानि जातानि। अवैदिकैस्तैः विहारप्रान्ते पाटलिपुत्रं समया राजगिरौ महान् विहारः (विद्यापीठः) स्थापितः, यः नालन्दविश्वविद्यालय इति नाम्ना ख्यातिङ्गतः*। तत्र वर्णाश्रमव्यवस्थात्रोटनम्, अनुलोमप्रतिलोमविवाहप्रवर्तनम्, द्विजहरिजनानां सहपाठनसहभोजनव्यवस्था च प्रावर्तिष्ट। एवं वैदिकपुस्तकानां प्रज्वालनं, वैदिकक्रियाकलापे विघ्नकरणं, तेषां प्रधानं धर्मानुष्ठानमासीत् इति नाविदितं विदितबुद्धचरितानामितिहासाभिज्ञानाम्। परन्तु तस्मिन्नपि काले धार्मिकाः शबरस्वामिप्रभृतयो विद्वांसो वैदिकग्रन्थान् कण्ठस्थीकृतान् अरक्षन्। तेष्वपि कालेषु वैदिकानामवैदिकेभ्यः पृथगेव शिक्षा समभवदिति इयमेव बौद्धकालिकशिक्षापद्धतिरपि कथ्यते। तदानीन्तनानि दुःखानि अशान्तिं च स्मारं स्मारं वेपते हृदयम्। वाग्गद्गदा भवति। नेत्रे अश्रुभिराप्लाव्येते। लेखनी हस्तात्पतति इति विरम्यते।

—:***:—

# शिक्षारीतिविवेचना

(ले०-श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामिदामोदरशास्त्री)

कार्ये प्रवर्त्तयति हेयमतिं धुनाति
सौख्यं समानयति दुःखततिं लुनाति।
औन्नत्यमापयति सर्वपथीनमद्धा
सर्वं सुसाधयति कामगवीव शिक्षा॥

शिक्षाशब्दोऽयं नैकविधासु शब्दप्रवृत्तिषु योगरूढिमासाद्य, यो वेदाङ्गविशेषबोधकस्तदर्थो नेहोल्लिलिखिष्यते प्रत्यासत्त्यभावाद्। यश्चैष योगमात्रावलम्बी तदर्थस्यापि

* अयं हि विद्यालयः बुद्धदेवनिर्वाणात्-उत्तरकाले तदनुयायिभिः वृद्धकाश्यपादिभिः स्थापितः, ते हि राजगिरौ पर्णकुटीषु निवसन्तः षड्भिर्मासैः सभां कृत्वा बुद्धमतानुसारेण अनेकान् ग्रन्थान् आरचयन्। पश्चात्तेषां प्रचारार्थं बुद्धभक्तानां राज्ञां सहकारेण महान् केन्द्रभूतविद्यालयः स्थापितः इति १९०६ ईशवीये वर्षे जनवरीमासे सरस्वतीपत्रे प्रकाशितात् नालन्दविद्यालयविषयकलेखात् प्रतीयते।

प्राणिमात्रसाधारणोपयोगित्वाद्, नैसर्गिककल्पत्वाद्, इतरसुसाधोपायनिबन्धनत्वाद्, व्यवहारनिर्वाहप्रधानफलकत्वात, प्रायेणैहिकमात्रप्रयोजनकत्वाच्च, न प्रकृते विवरीतुमिष्यते । भजति च तद्विशेषार्थः समुपादित्सनीयतां विवक्षावाशंवदीतः सामान्यवाचकशब्दानां विशेषपरतायां लक्षणायाः शरणीकरणीयतायाः क्लृप्तत्वात् । साक्षात्परम्परासगणितश्चरममुख्याभीष्टार्थिनां शिक्षधात्वर्थताऽवच्छेदकविद्योपादानात्मकफलस्यैवाभिलषितत्वेनाखिलशास्त्राणामपि तादृगुद्देश्येनैव प्रवृत्तत्वाद् । उक्तोपादानकर्मीभूतविद्यापरिनिष्ठा च किलाधीतिबोधाचरणप्रचारशब्दव्यपदेश्यानामागमस्वाध्यायप्रवचनव्यवहाराणां चतुष्टयेन संपनीपद्यमानतां बिभर्त्तीति भगवत्पतञ्जलिप्रभृतयो निरदीधरन्नातोऽत्र विमतिलेशस्याप्युद्ग्रीविकाऽवसरः ।

इयमेव विवक्षिता तपस्विनी शिक्षा संप्रति विवेकास्पदतां कलयन्ती सुभगम्भावुकतया जातु सारस्वतसाम्राज्यालंकर्मीणचरीदानीं दुर्दैवायत्तदुर्गतावस्थराजमहिषीव स्वपूर्वदशाऽभिज्ञं कं न दुःखाकरोति, हिमानीदूननलिनीव कं वा रसज्ञं न विषादमनुभावयति ।

सेयं विपदास्कन्दिता बाढं शोचनीया दयनीयतमा गुणगृह्यैः स्वमुपचिष्कारयिषुरात्मनीनसंपत्स्वरूपमलंकरिष्णुं परिकरमभिकाङ्क्षन्ती लालाटिकीव परिवृढादेशमनुरूपाभिरूपरूपाणां सद्रूपदकूपातमपेक्षते । युक्तश्चैतेषामप्येनयेदमीयपरिकरं सनाथयितुं महान्संनाहः, सपरिकरत्वन्त्वस्याः स्वविषयताऽऽपन्नविद्यापरिकरेणैव न स्वातन्त्र्येणेति तदीयपरिकर एवालोचनीयः ।

तत्र निर्दिष्टतदीयचतुरवस्थानामपि प्राधान्येन प्रतिस्वं चत्वारि चत्वार्यङ्गान्यदसीयपरिकरात्मकान्यौचित्यभाञ्ज्यनुपदं निर्देक्ष्यमाणानि जाग्रति–

तथाहि–तत्राधीतिनामकागमप्रकारस्याङ्गचतुष्के प्रथममङ्गं 'वाचनशक्ति':–विनैनां पठितुरवैधच्छेदानि श्रूयमाणानि पदानि विज्ञानामरुन्तुदतामादधानानि बोधवतोऽप्युच्चारयितुरज्ञतां ख्यापयन्ति ।

अत्रैव द्वितीयमङ्गम् 'आवृत्तिः', पारायणरूपयैनया प्रथमदोषो निराक्रियते संस्कारद्रढिमा चाधीयते ।

तृतीयमङ्गम् 'अवगतिः'–ययोपदिष्टं वस्तु बोद्धुं शक्यते, वैकल्येनास्या विफलमेवाध्ययनं भवेद् ।

तुरीयमङ्गम्–मेधाऽपरनामा 'स्मृतिः', समेधतेऽस्या महिम्नैव विद्योत्कर्षः ।

द्वितीयः प्रकारो बोधाख्यः स्वाध्यायः-

अस्याद्याङ्गम्–'मननम्' एतद्दतेऽधीतमप्यनधीतदेशीयं केवलं न भवेत् प्रत्युताकिञ्चित्करमेव भवेत् समूलघातं संशयं हन्तुमक्षमतामियात ।

द्वितीयम्– 'उपपादनम्–' एतद्विहीनोऽ

वगतमप्यर्थमवगमयितुमप्रभवन्मूढतानिबन्धनं विगानमश्नुते ।

तार्त्तीयीकं 'लिखनम्-' एतेनैव विप्रकृष्टोऽपि देशतः कालतो वा बोधयितुं सुशको भवति, भङ्गुरं कलेवरमुत्सृज्यापि यशःशरीरेण स्थास्नुतां भजते। वैधुर्य्येणैतस्य कृताभ्यासोऽपि परीक्षणादावनुत्तीर्णतामासाद्य विषादमाप्नोति लभते चोपहसनीयतां तिरस्कृतिपात्रतां च ।

चतुर्थं 'ज्ञापनम्' –एनेनैवात्मसमवेतज्ञानविषयविषयकं ज्ञानं परात्मनि समवाययिषुस्तथा कर्त्तुं पारयेद्, एतत्क्षमतारहितमन्तेवास्यादयोऽवकेशिनं तरुं विहगा इव त्यजन्ति, चिररात्राय चैष विफलयशस्यः स्यात्।

तृतीयः प्रकारस्त्वाचरणपर्य्यायः प्रवचननामा–आदिममस्याङ्गं 'समाधानम्'–समाधायकं हि विचिकित्सामपनोदितुमनसः समुपसीदन्ति, तादृशेतरतया नैराश्यमुपयन्तोऽवजानन्ति; लोके सत्यपि वैदुष्यकीर्त्तिरसमाधातुः सनीस्रस्यते ।

द्वितीयं तद्–'व्यासः'–अयं किलाति संक्षिप्तशास्त्रवाक्यार्थस्य बुभुत्सुयोग्यताऽनुसारेणान्यूनानतिरिक्ताक्षरैर्विवरणात्मा, नैनमन्तरेण तादृशजिज्ञासुजनमानसोल्लासकार्मो व्यपदिश्यते,

तृतीयं तत्- 'समास'ः–एतदनभिज्ञोऽतिविस्तृतविषयग्रहणापटून् नैव संतुष्टतां नेतुं प्रभवेद्, अल्पधारणावतीं जनतां चावर्जयितुमपारयन् सुश्लोकत्वच्च्यवते ।

चतुर्थं तु "प्रतिभा"–एषा हि नवनवभावोन्मेषोल्लासिनी शेमुषीमतल्लिका सारस्वतप्रासादाभ्रंलिहपताकेव कस्य वा कोविदस्य न परिचितचरी, विनैनामदभ्रोपस्थितिमानप्यधिवादादिसंगरं शुकायमानतया निग्रहस्थानेष्वनायासेनापतेत् ।

तुर्य्यः प्रकारः पुनः प्रचारापरपर्यायो व्यवहारपदव्यपदेश्यः । अदसीयाङ्गेष्वाद्यं–"स्फूर्त्तिः"–या किल प्रत्युत्पन्नमतित्वेन जेगीयते । इयमेव वादजल्पवितण्डासु विपक्षोन्माथिनी विजयोल्लासिनी निग्रहमुत्तम्भयति । द्वितीयं च "पराशयोद्भावनम्" इदमन्तरेणोत्तरावसर एव नोदयते, का वार्त्ता दवीयस्याः कथाप्रवृत्तेः ।

तृतीयं 'चोहापोहाख्यम्' अन्वयव्यतिरेकसध्रीचीनस्यानिष्टापत्तीष्टानुपपत्तिपरिहारस्य योग्यतोपोद्बलनम्, एतदेव विचारावद्यमुष्टिन्धममुद्देश्यसिद्धिमुन्मुखयति ।

तुरीयमङ्गम् 'अवधानम्', उत्कृष्टमेधाविकस्वरताऽभिख्यम्, इदमेव परोक्षानुवादप्रयोजकपारिपाट्यसुभगङ्करणम्, इतरथा वाचंयमतैवोररीकरणीया भवेत् । इत्थंकारं षोडशकलाभिः सकलाङ्गाभिरामा शिक्षा समुज्ज्वलप्रकाशतरुणिम्ना राकामप्याहूयमाना जरीजृम्भ्यते ।

अत्र प्रकारचतुष्टयस्य प्रातिस्विकत्वेन निर्दिष्टायां चतुरङ्ग्यां प्राधान्येन तत्तदङ्गिनिरूपितत्वमुक्तम् । अन्याङ्गित्वनिरूपकत्व-

मपि शक्यसंभवं न प्रत्याचिख्यासितव्यत्वेन विवक्षितम् ।

शिक्षाविषये बहुवक्तव्यसत्वेऽपि शरीरासुस्थत्वेनातिक्रान्ते भूयस्यनेहसि संप्रति शिक्षाऽङ्कप्रकाशनसमयस्य नेदिष्ठतयोपढौकयन्नल्पमेवोपरमामीति । शम् ।

---

# संस्कृतप्रचारस्याऽऽशा ।

( श्रीनाथद्वारविद्याविभागाध्यक्षशुद्धाद्वैतभूषणमहामहोपदेशकदेवर्षिरमानाथशास्त्री )

विनोदो व्यसनं लाभो धर्मश्चावगतिर्यतः ।
यथाधिकारं प्राचीनसंस्कृताय नमो नमः ॥
परिहासाय रोषाय निन्दायै, स्वीकृताय च ।
गलग्रहाय विप्राणां संस्कृताय नमो नमः ॥

लिख लिख लिख । किं लिखामि, कुतो लिखामि, कथं लिखामि । तथापि लिख । संस्कृतं लिख । संस्कृते लिख । भोः भोः सर्वा विभक्तयः ! भगोः कारकसर्वस्वम् ! तदर्थाश्च, निविशन्तां संस्कृते । यथा लिख तथा लिख । ब्राह्मणाद् ब्राह्मण्यां जातोसि । कुतो जातोसि । संस्कृतं लिख । रात्रौ जागर्मि, दिने स्वपिमि, गृहिणी खिद्यति । संस्कृतं लिख । गृहे मूषका द्वादशीपारणां प्रतीक्षन्ते संस्कृतं लिख । संध्यावन्दनानि दत्ततिलोदकानि भवन्ति । संस्कृतं लिख । विषयो नोपतिष्ठति । पुनरुक्तिर्भवति चर्वितचर्वणं न स्वदते । संस्कृतं लिख । मस्तिष्कं भ्रमति, नेत्रे तिरमिरायेते । हस्तो वेपते । संस्कृतं लिख । इंग्रेजीविभूतयः परिहसन्ति । सुधारकाभासाः क्रुध्यन्ति । आर्यका निन्दन्ति । संस्कृतं लिख ।

व्यसनमिदं कतिपयानाम्, यत्संस्कृत एव लेखनमिति । अर्थमवगत्य शब्दाभ्यासेन बुद्धिर्ग्रहणशीला भवति । गृहीते शब्दार्थजाते बुद्धौ विषयावभासः स्थानं लभते । बुद्धिस्थितो विषयो बहिर्भवितुं स्वयं यतते । ततश्च ततस्ततः शास्त्रान्तरेभ्यो विविधं संचिता विषया वक्तुं लेखितुं मन उत्साहयन्ति । लिखति वदति वा जनः । अपरत्र दृष्टप्रत्ययोयं विषयः । शिशुर्मूकोऽज्ञश्च भवति । स च मातरं पितरं भ्रातरं स्वसृस्तत्संबन्धिनं वा नित्यपरिचितं चिराय बहुशः शब्दायमानं शृणोति । तदर्थव्युत्पन्नान् मध्यमवृद्धांश्च शब्दोच्चारणानन्तरं परस्परं स्वयमुपस्थितान् पश्यति । शब्दोच्चारणानन्तरमेव तदर्थं वस्तुजातञ्च तैस्तैरुपस्थापितं शतशोऽवलोकते । तेनाऽस्य शनैः शनैर्बुद्धिरुत्पद्यते । बुद्धौ च शब्दास्तदर्थाश्च स्थानं लभन्ते । जिज्ञासा ज्ञानस्थैर्यं च बालविदितमेवं विमृशति । विक्षिप्तो

बालाश्च चेष्टया समानावेव । किन्तु एकस्य जिज्ञासा ज्ञानस्थिरता च नास्ति । परस्य पुनर्जिज्ञासा ज्ञानस्थिरता चोभे अपि भवतः । जिज्ञासा ज्ञानं वर्धयितुं प्रभवति । शिशोरज्ञतमस्यापि चेतनत्वात्सूक्ष्मतमापि मानुषी बुद्धिरन्तःस्वाभाविकी भवति । ज्ञानमस्या भोजनम् । प्रयोज्यप्रयोजकवृद्धैः शतशः सहस्रशश्चोपस्थापितैर्विविधशब्दार्थजातैः प्रत्यक्षतोनुभूयमानैरुपभुक्तैः सुपुष्टेयं शिशोर्मतिरस्तदेतस्य तथा शब्दार्थजातान् बहिर्भावयितुं वाचं प्रेरयति । चिरात्प्रयतमानः सोयं गलबलशब्दान्निरर्थानपि निजहृदयादर्थवतः कदाचित् निःसारयति । तथाव्युत्पन्नश्च निखिलानपि शब्दार्थसमूहान् स्पष्टमुच्चारयति । अन्तः सम्पन्नाया बुद्धेरसौ प्रभावः । अध्ययनमेतत् । अदृष्टानुसारं भगवद्दत्तबुद्धेरन्तर्यथा व्युत्पादनं पोषणं च भवति तथैव बहिरपि । यदन्तरधीतं तदेव बहिरप्यध्येतव्यम् । या बुद्धिरन्तः पोषिता सा बहिरपि पोषणीया । अवस्थानुसारं तत्र लघु न्यूनमेव भोजनमुपलब्धमिह तु महद्विपुलतरं च भोजनमुपलभ्यते । निखिलं जगदेवाध्येयम् । ब्रह्मापीदम् । 'अत्यतिष्ठद्दशाङ्गुलं' इति दशोत्तरमधिकमविज्ञातमव्यक्तं सुबहु ब्रह्म भवतु नाम, किन्तु प्रत्यक्षतो लब्धमुपभोक्तुमपि शक्यमिदं पुनर्ब्रह्म व्यापकं जगदस्माकं लघु किञ्चिदप्यलम् । तदेकदेशाच्छतांशोपि कैश्चिदिह नाधीतो भवति । अस्तु ।

द्विविधमध्ययनम् । ग्रहणं, गृहीतस्याभ्यासश्च । ग्राह्यं महद्विपुलतरं ब्रह्म लघोर्लघुतरं चेदं जगत् च । षट्शास्त्राणि मीमांसा चेत्यादीनि ग्रहणप्रकाराः संभाराश्चास्य । यथा भोजनस्य लवणमरीचनिम्बुखण्डादयः । तत्रार्थवान् शब्दराशिः प्रथमम् । स च काव्यानि वैदर्भीसंदृब्धानि । तत्र निहितोऽर्थः स्वदते गृहीतश्च भवति । नाऽत्र त्वरिततराभ्यसनं घोषणं नाम फलेग्रहि भवति । विशेषतस्तु सांकेतिकगूढार्थराशेर्व्याकरणस्य 'वृद्धिरेचि' इत्यादेरिव । तथाभ्यसतां बुद्धिर्जाड्यमुपगच्छतीत्यनुभूतप्रायम् । शब्दराशिरपि सार्थः शनैः शनैरभ्यासितो बालस्यापि धियं ग्रहणशीलां ग्रहीतुमुत्सुकां च करोति । प्रायेण बहुतरविद्यार्थिसंरुद्धा भृत्याध्यापका नाऽत्राऽवदधते । नापि पुनस्तेषामवधातुमवकाशः श्रद्धा च । श्रद्धा ह्यात्मीयतायां भवति । अत एवोत्तरारणिरुच्यते शिष्यः पूर्वारणिश्चाचार्यः । अध्यापनं तयोः संधानम् । विद्या च संधिः । आत्मीयता ह्येषा । एवं शनैः शनैः सार्थे शब्दराशावगते प्रारम्भापेक्षं तस्य साधुताऽध्यापनीया ।

तस्यां पाणिनीयं व्याकरणम् । साम्प्रतमसन्देहोऽस्य प्रथमं प्रयोजनम् । तत्रापि न घोषणमेव केवलमपि तु ग्रहणमवगतिः । अंतः प्रवेशः । स च स्वभाषायां हिन्दीभाषायां वा भवतु तथा लघु निरायासं च स्यात् । छन्दोवत्सूत्राणि भवन्तीति संस्कृतं, प्राथमिकग्रहणे चूर्णं तिष्ठतु । साध्यावगतेषु नियमेषु क्रत्वर्थेकाध्यापनं पुनर्भवतु नाम । एवं सार्थः साधु-

श्च शब्दराशिः, शाणेन घृष्टं रत्नमिव बुद्धिं ग्रहणशीलां करोति। ग्राह्यं हि जगत् ब्रह्म चेति न विस्मर्त्तव्यम्। सार्थः शब्दराशिः शरीरं विषयस्य। स च सालंकृतिर्भवतु निरलङ्कारो वा। नात्र शास्त्रार्थं चिकीर्षामि। केवलं तु विषयग्रहणे नापेक्ष्यन्तेऽलङ्काराः। माधुर्यं प्रसाद इत्यादीन् गुणान् शरीरं चापेक्षते विषयः स्वादुतायै। यथा व्यायामे खेला। अनित्यामपरिचितां च भाषां स्वदमान एव ग्रहीतुमुत्सुको भवति जनः। अलङ्कारादयः शास्त्रार्थापेक्षिणो विषयाः पुनर्विदुषां विनोदः व्यसनं वा। तत्र तत्र शास्त्रेषु भवन्ति विनोदाः। अधृतचिन्तः सुखी जनोऽन्विष्यति संचिनोति च विनोदान्। गानविद्यायां स्वरालम्बनायोपवीणनमपेक्ष्यते। तत्र वीणा पंचतंत्री वाऽलम्। तत्र विदुषां रसव्याकुलानां विनोदो वेला हारमोनियम् इसराज इत्यादीनि वाद्यानि। तथा विदुषां विनोदः साहित्यदर्पणं काव्यप्रकाशः रसगङ्गाधरश्च। सप्तषोडशपदार्थावगतिः प्रयोजनम्। तत्र न्यायसूत्राणि शास्त्रम्। तत्रापि विनोदा माथुरी जागदीशी परिष्कारसरित्सिन्धुरिति। शब्दराशिग्रहणे साधुताऽसन्देहश्च व्याकरणम्। तत्र सूत्राणि भाष्यं विवृतिर्वालम्। विनोदाः पुनः परिभाषेन्दुशेखरो मञ्जूषा परिष्कारकौस्तुभादयः। एवं सर्वत्र शास्त्रे।

शास्तीति शास्त्रम्। अविज्ञातं हितानुबन्धि वस्तूपदिशतीति शास्त्रम्। तच्च वेदः पुराणानि तदनुकूलान्यन्यानि च। तत्र निहितं ब्रह्म जगत् च पुरुषार्थपर्यवसायीति वस्तुतो ग्राह्यम्। ग्रहणाय हि बुद्धिर्ग्रहणशीला क्रियते। शीलं च वैदर्भीसंदब्धेन शब्दराशिना भवतीत्युक्तम्। तद्विधकाव्यरूपेण तद्विधन्यायादिशास्त्ररूपेण सार्थेन शब्दराशिना बुद्धौ ग्रहणशीलायां, वैदिकान्यङ्गानि मीमांसे चोभे विषयाभिमुखीं धियं विषयपरिनिष्ठितां कुर्वन्ति। ततश्च पुनः पुनरभ्यस्तैर्वेदैः सार्थैर्विषयस्य परोक्षानुभूतिर्भवति। ब्रह्मणो विश्वस्य च परोक्षमवगतिर्भवति। पुरुषार्थलाभश्च भवति। परोक्षानुभूतौ सत्यां विषये रुचिः। ततस्तदर्थानुष्ठाने चित्तशुद्धौ, विषये प्रेम। प्रेम्णा च प्रत्यक्षानुभवः। अलौकिकदृष्टौ लब्धायां प्रत्यक्षदर्शनमपि भवतीत्यास्तिकाः। यथोक्तं गीतासु—

'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।'
'दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम्।'
'मद्भक्तिं लभते पराम्'
'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।'

पुरुषार्थलाभश्च भगवत्प्राप्तिः। तथा च तत्रैवोक्तम्—

'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।'

तत् मत्स्वरूपं, अन्तरं यथा न भवति तथा विशतीति क्रियाविशेषणम्। मत्सायुज्यं लभते इत्यर्थः। अयं मुख्यः पुरुषार्थलाभः। स च द्विविधो लौकिकोऽलौकिकश्च। लौकिको लाभो जीवनम्। याजनाध्यापने, प्रतिग्रहश्चापि। याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो जीवति स्म। योनिः कर्म विद्या चेति संगृह्य ब्राह्मण्यम्। तद्वान् मनुष्यः पुरा वेदैरधिगतै-

जीवति स्मेति प्राचीनसंस्कृतेन लाभः। ब्रह्मणो जगतश्च स्वरूपज्ञानं भवतीत्यवगतिरपि तेनैव च। धर्मश्च प्राचीनसंस्कृतेन। धर्मो नाम स्वकर्त्तव्यं, तस्य च प्राचीनसंस्कृतेन सिद्धिर्भवतीत्युक्तम्। एवं येन विदुषां लाभोऽवगतिर्धर्मो विनोदो व्यसनं च सिद्ध्यति स्म तस्मै प्राचीनसंस्कृताय पुनः पुनर्नमनमिति मङ्गलम्।

विश्वं परिवर्तितम्। जनः परिवर्तितः। समयः परिवर्तितः। रुचिः परिवर्तिता। उद्देश्यं परिवर्तितम्। कर्त्तव्यं परिवर्तितम्। विनोदः परिवर्तितः। सर्वं परिवर्तितम्। ब्रह्मापि परिवर्तितम्। अर्थ इदानीं ब्रह्म। विश्वमर्थः। जनोऽर्थः। अर्थः समयः। रुचिरर्थः। उद्देश्यमर्थः। कर्त्तव्यमर्थः। विनोदोऽप्यर्थः। सम्प्रति युगमर्थस्य। अर्थमिदानीं सर्वं उपासते, सर्वत्रार्थो व्याप्तः इत्यर्थं ब्रह्म वदामः। अर्थमन्तरा जनोऽमनुष्यो भवति। अर्थरहितस्य जगन्न किमपि। अर्थवियुक्तस्य के नाम विनोदाः। अर्थशून्यस्य सर्वं शून्यम्। अर्थरिक्तस्य कर्त्तव्यं न प्रतिभासते। अर्थमुद्दिश्यैव सर्वः प्रवर्तते। अर्थरुचिर्महीपतिः सम्प्रति तोयनीव्याः सर्वस्या अपि पृथिव्या उपभोक्ता। तस्य सर्वोऽपि व्यवहारः सम्प्रत्यर्थानुरोधेनैव प्रवर्तते। भाषापि व्यवहारस्य साधनमेकतमम्। सा संस्कृतरूपा धर्मयुगे पुराऽऽपामरं सर्वप्रजासु साधारण्येनाप्रचरन्त्यपि धर्मव्यवहारे प्रधानतमाऽऽसीदिति तु मन्महे। पुरा हि धर्मो जीवनत्वेनाऽर्थश्चासीद्ब्राह्मणानाम्। ततश्च 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति' श्रुतिः प्रश्रयं प्राप्तवती। अर्थकामौ हि व्यवहारप्रवर्तनस्य मूलम्। यो हि सर्वथा निष्कामः, सर्वथात्र निःस्पृहोऽर्थेषु तस्य नास्त्येव व्यवहारे प्रवृत्तिः। तथा चोक्तं सृष्टिनिर्माणे श्रीमद्भागवते—

... ... .. मनसाऽन्यां ततोऽसृजत्।
सनकं च सनन्दं च सनातनमथाऽऽत्मभूः॥
सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः।
तान् बभाषे स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः॥
तन्नैच्छन् मोक्षधर्माणो वासुदेवपरायणाः।

ततश्च व्यवहारप्रवर्तनमपेक्षमाणेन प्रजापतिनाऽनन्तरप्रभवस्य प्रजासन्तानस्य कामेन (लौकिकसुखेच्छया) सम्बन्धो व्यधायि। इतः परं सर्वे सकामाः, व्यवहारे स्वरसत एव प्रावर्त्तन्त। कामायैवार्थमपि वाञ्छन्ति स्म। न च तयोः काचनाऽर्गला। अप्रतिहतं मन ऐन्द्रियसुखमनर्गलमेव कामयते स्म। कामस्यानियमितत्वादेवैकस्यापि जनस्य सुखसाधनान्यर्था अपि यावन्तो विश्वस्मिन्वर्तन्ते ते सर्वेऽपि नालम्। यथोक्तं समाधिभाषासु—

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य ते॥
न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥

इतः परं सर्वं चेतनं जगदर्थकामयोर्निरर्गलं लग्नम्। ग्राम्याः पशवश्चासन् मनुष्याः। कामाल्लोभो लोभात्क्रोध इति

कामक्रोधलोभाभिभूतैर्जनैरिदं जगत् नरकस्य द्वारमेवाऽऽरचितम् ।

आर्यः कश्चनाऽवशेषितो नासीदिव । सर्वोप्यार्यः कामाऽऽवर्ते निमग्नः । तत एव केनापि तद्रहस्यविदोक्तम्—

येषा द्वेधा भ्रमिं चक्रे कान्तासु कनकेषु च ।
तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥

भ्रमिरावर्तश्चक्रं च । यथा घडीयन्त्रे निरन्तरं समयपरिवर्तनाय चक्रं (फनर) निवेश्यते, तथात्र जगति व्यवहारप्रवर्तनाय कामार्थौ भ्रमी द्वे निवेशिते । ताभ्यां परवशो जनः संसारादामरणं न विरमतीति श्लोकस्य सम्पिण्डितोऽर्थः । अनर्थोऽयमार्यसभ्यतायाः । आर्या विमुक्तिं वाञ्छन्ति, न तु बन्धम् । बन्धश्चायम् । किं च अनर्गलं कामभोगेनार्थसंचयेन च परपीडनं दुःखं सुखनाश आत्महानं च भवति । आत्महानमपुरुषार्थः । तदेतत्प्रत्यक्षमेवेक्षितुं शक्यत इदानीम् । अमेरिका वाञ्छति सर्वस्यापि सुखभोगस्याहमेव भोक्ता भवेयम् । सर्वाण्यपि सुखसाधनानि मदधीनान्येव स्युः । अपरोपि तत्प्रतिपन्थी जर्मनादिस्तथैव वाञ्छति । ततश्च परपीडा दुःखं सुखनाश आत्मपरिमरश्च पुरतः प्रकाशमानः सर्वैर्दृश्यत एव । एकोऽपरस्य निर्दयनाशनायोद्युक्तः । तदेतत्सर्वं भारतस्य मा भवतु । भारतवासिन आर्या भवन्तु । निर्दुःखं सुखिनो भवन्तु । प्राप्तात्मानश्च सन्तु । मा कश्चिदपि पीडितः स्यादिति हृदि निधाय केवलं नियमा स्मर्यन्ते । नियमो नाम धर्मो यज्ञः संयमो वृत्तिसङ्कोचो वा । विधिरपि वृत्तिसंकोच एव पर्यवस्यति निषेधश्च । इदं कुरु इति वृत्तिसंकोच एव । इदं मा कुर्विति च वृत्तिसंकोच एव । मनोवृत्तिसहकृताः प्रतीन्द्रियवृत्तयः कार्यं कुर्वन्ति । ताश्चेदनर्गलं सुखभोगेषु विमुक्ताः सुखनाशं दुःखवृद्धिमित्यादिबहूनेवानर्थान्प्रसुवते । तत्संकोचं नियमनं वा धर्मो विधिनिषेधाद्युक्तः करोतीति सोपि नियम एव, नितरां यमयतीति । एते नियमा धर्मा वाऽस्माकं संस्कृते । वेदाः शास्त्राणि वा संस्कृतभाषायाम् । ततश्च संस्कृतभाषाया अध्ययने लेखनेऽभ्यासे च महदेव प्रयोजनमासीत् । सुखभोगः सुखसाधनसंग्रहश्च लोकतो लोकबुद्ध्यैव च प्राप्तमिति न तत्रापूर्वविधिरासीत् ।यत्रापि 'स्त्रिय उपतिष्ठन्ते' इति वेदादौ वात्स्यायनादौ च विधिरिव दृश्यते तत्रापि संकोच एव, नियम एव, परिसंख्या वा । यथोक्तं समाधिभाषासु—

लोके व्यवायामिषमद्यसेवा
नित्यास्ति जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञ-
सुराग्रहैरासु निवृत्तिरिष्टा ॥

व्यवस्थितिर्नियम इति यावत् । सा चानर्गलेन्द्रियसुखप्रवृत्तिनिवृत्त्यर्था । तया लौकिकसुखभोगसुखसाधनानि रक्षितानि भवन्ति । भारतादन्यत्र धर्मो नास्ति । नियमेषु कियत्सु सत्स्वपि न सन्त इव ते । अस्माकमत्र धर्मो विद्यते तेन नियमानां रक्षणं भवति, अभूत् च ।

°सन्देहादिभिर्हेतुभिरिति व्यासेन वक्तव्यम्।

न जातु कामान्न भयान्न लोभात्
धर्मं जह्यात् जीवितस्यापि हेतोः ॥

इति धर्मो धर्मार्थो धर्मः । सर्व एव वा निष्कामा धर्मा भगवद्धर्मा वा धर्मार्थी धर्मः । धर्मरक्षणार्थो धर्मो, धर्मार्थो धर्मः कथ्यते। युगे युगेऽयं धर्मविप्लवोऽनेकधा भारते प्राप्तो भगवदवतारैः संरक्ष्यते। राजानो वेदाचार्याश्च धर्मरक्षका भवन्ति । मर्यादानामज्ञानविपर्ययसन्देहादिहेतुभिर्दृष्टादृष्टविरुद्धमाचरन्तं जनमाचार्यः शास्त्रेण धर्मरहस्यमुपदिश्य धर्मरक्षणं करोति। विद्यायोनिकर्मवन्तः सर्वे ब्राह्मणा आचार्याः । ये पुनर्धर्मविषये निःसन्देहाः प्राप्तज्ञानाश्चाऽविपर्ययाश्च हठात् स्वार्थवशादासुरस्वाभाव्याद्वा धर्मग्लानिं प्रचारयन्ति तेभ्यो धर्मरक्षणं भूपतिः करोति । तदुक्तं भवभूतिना—

अज्ञो वा यदि वा विपर्ययगतज्ञानोऽथ सन्देहधृक्
दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः ।
निःसन्देहविपर्यये सति पुनर्जाते विरुद्धक्रियं
राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥

आचार्यस्य भूपतेश्चेति द्वयोर्मध्ये बलवान् भूपतिः, शास्ता इति। यतो हि दण्डमूलाश्चतस्रो विद्याः। दण्डभयाज्जनो मर्यादासु तिष्ठति । निर्भयश्च मर्यादां विमुञ्चति । परलोकभयं त्वप्रत्यक्षमितीन्द्रियसुखभोगेच्छासु बलवतीषु शिथिलीभवति । राजदण्डभयं तु प्रत्यक्षमिति जनो राज्ञैव मुख्यतया धर्मे स्थाप्यते । पुरा हि धर्मयुगे धर्म एव राजाऽऽसीत् । धर्मभयादेव जनः स्वस्वमर्यादाः पालयति स्म । ततश्चेन्द्रियवृत्तिषु सुखभोगाय बलवदनियन्त्रणासु जातासु कालेन युगान्तरे धर्मभयं शिथिलमभूत् । जनश्च स्वच्छन्दवृत्तिरासीत् । भौतिकोन्नतिमेव परमपुरुषार्थमैन्द्रियसुखभोगमेव च विमुक्तिं मन्यते स्म । तथाविधजनतानेतारश्च वेनसदृशा अभूवन् । यत्र धर्मं कामयमानो जनस्त्वरिततरां हन्यते स्म । तदा जनविप्लवव्याकुलैर्लोकरक्षाप्रवणैर्ब्राह्मणभूयिष्ठैः प्रजाजनैः प्रजापतिः प्रार्थितः 'धर्मरक्षको राजाऽस्मभ्यं दीयता' मिति । तदा भगवता प्रजापतिना पृथू राजाऽवतारितः । इत्थं भारते वृत्तमिदम् । वेनस्य धर्मविप्लावकत्वं ततो राज्ञः पृथोरादिराजत्वं च समाधिभाषासु चतुर्थेऽप्युक्तम् । एवं नैकशो धर्मविप्लवो भारतेऽभूत् ।

सम्प्रत्यपि केचित् राजानोऽनार्याः । धर्मविप्लावका अधर्मरुचयश्च । तेषां देह एव आत्मा । ऐन्द्रियसुखभोग एव परमा मुक्तिः । सुखसाधनसंग्रह एव परमार्थः । तेषां नियमा इन्द्रियवृत्तिभ्योऽनर्गलगतिदातारः। मन एव तेषां कर्त्तव्याकर्तव्ये प्रमाणम् । असीमा भौतिकोन्नतिरेवैतेषामभ्युदयः । भारतीयधर्मस्य भारतीयसभ्यताया भारतीयभाषाया भारतीयशिक्षायाश्च प्रशिथिलीकरणे भौतिकोन्नतिरनर्गला च ग्राम्यसुखभोगैषणा इत्येवं द्वयमेव प्रधानं हेतुः । अप्रतिहतयैन्द्रियसुखभोगैषणया भौतिकोन्नतिर्दृढमूलं प्रापिता । सर्वोऽपि जनः स्वभावतः सुखं वाञ्छति ।

आत्माऽव्यक्तोऽप्रत्यक्षश्चेति तत्सुखं जनो न पश्यति । इन्द्रियाणि विषयांश्च लोकः प्रत्यक्षमवलोकते तत्सुखं च प्रतिपलमनुभवतीति को नाम तत्प्रतीपमाचरेत् । पद्भ्यां गच्छन् जनो गोशकटेन गमनं सुखं मन्यते । तदभ्यासे सम्पन्नेऽभ्यासवशादेव तत्सुखमदृष्ट्वाऽश्वशकटीं बहुमन्यते स्म । ततश्चाश्वरथैर्गच्छतो जनान् सुखिनो जानाति । स्वयमपि तेन कदाचिद्गच्छन् कृतकृत्यं स्वीकरोत्यात्मानम् । इदानीं बाष्पशकटी प्रचलिता । तया त्वेकेन दिवसेन जनः शतक्रोशीं गच्छति । इदानीमश्वशकटी कस्मा अपि न रोचते । तामेव सुखकरीं विवेचयति । उपलक्षणमेतत् । ऐन्द्रियसुखभोगतृष्णाया गतिरेवैतादृशी । तत्र सुखस्य ध्रुवो नास्त्येव । तत एव भौतिकोन्नतिः प्रत्यहमवस्थामधिकाधिकमुन्नतामारोहति । साधारणोपि जनो मोटरमारोहति । द्विशतक्रोशदूरे गीयमानामपि गीतिकां निजकुटीकोटराभ्यन्तरे तिष्ठन् शृणोति, तदाश्चर्यचकितो भवति। सर्वस्यापि लोकस्य कामनास्ततश्चन्द्रोदयेन सामुद्रा वीचय इव समुद्रे, पर्वताकाराः समुत्तिष्ठन्त्यो हृदि न मान्ति। निरर्गलसुखभोगेच्छां भौतिकोन्नतिं चोद्दिश्यैव साम्प्रतिकः सभ्यो जनश्चेष्टते किमपि । तदनुकूलां सभ्यतां बहु मन्यते। तत्प्रचारकान् ईश्वरवत्पश्यति। तन्नियमान् सुखबहुलान् विजानाति। तद्विद्यामुन्नतिकरीं हितां च वेत्ति । तद्भाषामेव रोचयते । तद्विरुद्धं यत्किमपि तत्सर्वं नापेक्षते। प्रत्युत विरुणद्धि। आध्यात्मिकीमुन्नतिमशक्तसन्तोषकक्षायां निवेशयति। धर्ममीश्वरं चोन्नतिप्रतिपक्षं स्वीकरोति । धर्मप्रचारकान् स्वराज्यविद्रोहिणो जानाति । सदाचारानुष्ठायिनो ब्राह्मणानात्मघातिनः कथयति। संस्कृतभाषां मृतभाषामवगच्छति। तदध्यापकान् तदध्यायिनश्च वृथासमयक्षपणान् चिरं परिहसति । अपरे तु क्रुद्ध्यन्त्यपि । निन्दन्ति च । अपरे तूदासते ।

किमिदानीं प्रतिपत्तव्यम् । धर्मश्वरसदाचारभौतिकोन्नतिमनोवृत्तिविषयेषु यद्गवेषणीयं कथनीयं च तदन्यत्र भाषानिबन्धेषु 'संसारका विश्वव्यापी दैनंदिन महायुद्ध' इत्यादिषु मया विवेचितमुक्तं च । इदानीं प्रसङ्गः संस्कृतभाषायास्तच्छिक्षायाश्च । संस्कृतभाषायाः कथं प्रचारः स्यात् । कथं वैषा व्यावहारिकी भवेत् । तत्र द्वितीयप्रश्नस्योत्तरमनन्तरमुक्तमेव तथापीदमन्यदुच्यते।

व्यवहारश्चतुर्विधः संभाव्यते आर्थिको धार्मिकः शासनार्थः शारीरिकश्च । तत्र वैदेशिकेषु वैदेशिकप्रायेषु स्वभाषाप्रचारव्याकुलेषु तद्भाषाप्रियेषु च शासकेषु कैवाशा संस्कृतभाषायां व्यवहारस्य । शासनसंबन्धी सर्वोपि व्यवहारो वैदेशिकभाषायां क्वचित् हिन्दीभाषायां प्रचलत्येव । तदाहत्य तद्व्यवहारे संस्कृतभाषाप्रचारो दुःशको विधिप्रविचारो वा । एतेनैवार्थिको व्यवहारोपि व्याख्यातः । अर्थः शासनाधीन इति । अवशिष्यते पुनर्धार्मिकः शारीरिकश्च व्यवहारः । धार्मिको द्विविधः । लौकिकोऽलौ-

किकश्च। लौकिकः पुनर्द्विविधः दृष्टफलोऽदृष्टफलश्च। दृष्टफलः सभ्यतासदाचारादिः स्नानदानादिसम्बन्धी च। अदृष्टफलो हवनादिः। अलौकिकस्तु मोक्षसंबन्धी भगवद्भजनादिः।

तत्र सर्वत्र संस्कृतभाषायाः प्रवेशो वर्तते। सभ्यतासदाचारस्नानदानहवनभगवद्भजनमोक्षनिर्वचनादिविषयेषु प्रायः पर्याप्ताः संस्कृतभाषाग्रन्था वर्तन्त एव सनातनाः। तत्राऽनुष्ठानासामञ्जस्यं पाठ्यक्रमविपर्ययः क्वचिज्जातः स्यात्। स एषोऽन्विष्य प्रतिविधेयस्तत्पण्डितैः। तदर्थं काचित्समितिर्निर्मातुं शक्यते। पाठशालाश्च। तदेकदेशकक्षा वा। एतेन संस्कृतं व्यावहारिकं तत्प्रचारश्च स्यात्।

शारीरिको व्यवहारोऽपि द्विविधः—धार्मिको जीवनसंबन्धी च। धार्मिको व्याख्यातप्रायः। जीवितसंबन्धी व्यवहार आयुर्वेदाधीनः। तत्प्रचारः सम्प्रति क्वचित् क्वचित् वृद्धिं गत इव दृश्यते। विशेषतस्तु सर्वोपि प्रचारः शासनाधीन इति परतन्त्रो जनः किमिव यत्नमातिष्ठतु। तथाप्येषा संस्कृतभाषायामर्थकरी विद्या। ये विद्वांसः संस्कृतभाषायाः प्रचारं कामयन्ते, धार्मिकी वा वृत्तिर्येषाम्, ये वा आङ्गलभाषायाः कुसंस्कारेभ्यो बिभ्यति, तैरवश्यमर्थकरविद्यायाः परिग्रहोऽपेक्ष्यः। वेदान्ते धर्मशास्त्रे, व्याकरणे साहित्ये न्याये मीमांसायां वा समधीते समधीतायामपि वा जीवनार्थः सर्वेषामपेक्षितः स्यात्। पूर्वं धर्ममुद्दिश्य संस्कृतभाषाध्ययनाय प्रवृत्तिर्भवति स्म। सम्प्रति प्रायोऽर्थमुद्दिश्यैवाध्ययनं प्रवर्तते। तस्मात् सर्वेष्वपि शास्त्रेष्वध्ययनस्यैकदेशोऽर्थकरविद्याया अपेक्ष्यत एव।

कियतोप्यनेहसः पूर्वं पुराणानि कर्मकाण्डं ज्यौतिषमायुर्वेदश्चेति चतस्रो विद्या अर्थकर्य इति गणितुं शक्यन्ते स्म। सम्प्रति तु तदपि गतम्। अर्थपरिग्रहव्याकुले निर्जीविके धर्मश्रद्धारहिते कर्तव्यविमूढ इव च जगति पुराणानि कः शृणोतु। कुसंस्कारावृतानां व्यवस्थितसंस्कारैः किं प्रयोजनम्। अविश्वस्तानां किं फलितज्यौतिषेण? तथापि जीवनसम्बंधित्वादायुर्वेदस्य, भारतीयजनतायाः सम्प्रत्यपि पूर्वादृष्टश्रद्धालम्बित्वाच्च ज्यौतिषस्याप्यर्थकरत्वं वक्तुं शक्यते।

किं च राजभाषात्वादेवांग्लभाषाया अपि लोका अर्थकरत्वं मन्यन्ते। मम तु सर्वथाऽदृष्टस्येश्वरस्य वाऽर्थकरत्वमिति प्रतिभाति। न तत्र साम्प्रतिको लोकस्तिष्ठते। येषामीश्वर एव नास्ति, उद्योग एव वा सर्वस्वं ते कथमिवैतत्स्वीकुर्वन्तु। शतशोऽपि बी० ए० एम्० ए पदवीधारिणोऽधीताङ्गलविद्या निर्जीविका एव विचरन्ति। तत्रादृष्टमेव कारणत्वेनेश्वरो वा वक्तुं शक्यते। तथापि तयोरदृष्टत्वादेव न विश्वसिति जनः। किं वा न सर्वेषामेवादृष्टं प्रतिकूलमनुकूलो वा महेश्वर इति जानतापि न परिश्रमाद्विरमेत् भवत्युद्योगः। तस्मात् संस्कृतभाषाप्रचारकामुकैरध्ययनवि-

षयेष्वखिलेष्वप्येकदेशत्वेनार्थप्राप्त्युपायविद्याध्ययनं तत्समर्थं स्यादिति हृदि कृत्वाऽध्ययनाध्यापनं प्रवर्तनीयमिति ममाल्पा मतिः । यस्य वेदान्तविषयोऽध्येयस्तस्यायुर्वेदाध्ययनं ज्यौतिषाधिगम आंग्लभाषापरिचयश्चैकतमः कश्चिदप्रतिबद्धो भवत्वेव । येनासौ संस्कृतभाषामवगत्यार्थकष्टमसहमानः संस्कृतभाषाप्रचारमादध्यात् ।

अवशिष्यत इदानीं कलाः साम्प्रतिकं विज्ञानं च । इदमपि द्वारं संस्कृतप्रचारस्य । तत्र तु संस्कृतभाषायां ग्रन्था एव दुर्लभा असंभाविता वा । अयमत्र विधातुमाशावादः स्यात् । परहृदयप्रवेशसमर्थप्रियसंस्कृतभाषाप्रवीणो वैदिकविज्ञानाभिज्ञश्च कश्चिदेकः समर्थो विद्वांस्तथाविधानां वा तेषां काचन समितिर्वा सर्वानपि वैदेशिकभाषानिबद्धान् कलाग्रन्थांश्चाधीत्य तदर्थांश्चानुभूय तद्ग्रन्थानां वैदर्भमार्गपरिष्कृतेन सरलतमेन संस्कृतेनानुवादं कुर्यात् । अनूदितानां च तेषां पठनपाठनप्रचारशीला काचन महाशाला विश्वविद्यालयो वा स्थापितः स्यात् । तदा संस्कृतभाषायाः प्रचारः पूर्णः संभवति, संस्कृतभाषा च कालेन व्यावहारिकी वा कर्त्तुं शक्येतापि । स एष दुर्लभो मनोरथः । न चाऽसंभावित एव वा सर्वथा । इदानीमपि सन्त्येव तथाविधा राजानः कतिथा अपि । येषां भूयो भूयोऽर्थव्ययो विविधविद्याप्रदानप्रस्तारे भवति । तैरिह भारत एव क्वचित्, निजराज्ये वा विज्ञानविश्वविद्यालयो विज्ञानमन्दिराणि कलाभवनानि च प्रतिष्ठापयितुं शक्यन्ते । दुर्लभोऽसंभावित एव वा श्रीमन्मालवीयसदृशो महापौरुषिकस्त्यागी जनः स्वदेशहितकृदिव संस्कृतभाषाहितकृत् कोविदः । सति तस्मिंस्तु मनोरथो न मनोरथः स्यात् । आशया जीवति जनः । विशेषतो धार्मिकाः संस्कृतपण्डिताः दशमशताब्दीसभ्यताज्ञातकाश्च । संभवति वा विधातुर्विचित्रे विश्वरचने सर्वम् ।

स एष मम विजल्पतो जल्पस्य मुष्टीकृतोऽर्थः—प्राचीनसंस्कृतप्रचारः कर्तुं शक्यते नियतक्षेत्रे । क्षेत्राणि पुनस्तानि, विनोदो, व्यसनं, धर्मः, ज्ञानं, जीविकालाभ इत्यादीनि । भवन्ति संस्कृतभाषाव्यसनिनस्तादृशाः सुखिनस्तृप्तोदरा येषां संस्कृतलेखमन्तरा मनो न मनुतेऽपरत्र । तैस्तादृशेषु संस्कृतप्रचारः कर्तुं शक्यते । विनोदोऽपि तद्विधिविध एव वा प्रायः । स्युरेव श्रेष्ठियुवकाः, राजकुमाराः, पैतृकसंपत्तिसुखिनो वा युवानो येषामनवशिष्टकर्त्तव्यत्वादेकत्र निषीदतामेव केवलं दिवसाः कथंकथमपि न व्यतीयन्त एव । तैरिह कालक्षपणाय वाद्यानि क्रीडनकानि वा स्वीक्रियन्ते । यथा वेला सितारः हारमोनियमः शतरञ्जं ताशः चतुष्पटी ( चौपड ) वा । तथैवैते जागदीशी-गादाधरी-खण्डनखाद्यावच्छेदकत्वनिरुक्ति-रसगंगाधरादयो ग्रन्था अपि बुद्धिवादरूपाः कुलपतिसदृशैर्महाराजसमाश्रितैः संपन्नविद्वद्भिर्निर्माय

किकश्च । लौकिकः पुनर्द्विविधः दृष्टफलो-ऽदृष्टफलश्च । दृष्टफलः सभ्यतासदाचारादिः स्नानदानादिसम्बन्धी च । अदृष्टफलो हवनादिः । अलौकिकस्तु मोक्षसंबन्धी भगवद्भजनादिः ।

तत्र सर्वत्र संस्कृतभाषायाः प्रवेशो वर्तते । सभ्यतासदाचारस्नानदानहवनभगवद्भजनमोक्षनिर्वचनादिविषयेषु प्रायः पर्याप्ताः संस्कृतभाषाग्रन्था वर्तन्त एव सनातनाः । तत्राऽनुष्ठानासामञ्जस्यं पाठ्यक्रमविपर्ययः क्वचिज्जातः स्यात् । स एषोऽन्विष्य प्रतिविधेयस्तत्पण्डितैः । तदर्थं काचित्समितिर्निर्मातुं शक्यते । पाठशालाश्च । तदेकदेशकक्षा वा । एतेन संस्कृतं व्यावहारिकं तत्प्रचारश्च स्यात् ।

शारीरिको व्यवहारोऽपि द्विविधः—धार्मिको जीवनसंबन्धी च । धार्मिको व्याख्यातप्रायः । जीवितसंबन्धी व्यवहार आयुर्वेदाधीनः । तत्प्रचारः सम्प्रति क्वचित् क्वचित् वृद्धिं गत इव दृश्यते । विशेषतस्तु सर्वोपि प्रचारः शासनाधीन इति परतन्त्रो जनः किमिव यत्नमातिष्ठतु । तथाप्येषा संस्कृतभाषायामर्थकरी विद्या । ये विद्वांसः संस्कृतभाषायाः प्रचारं कामयन्ते, धार्मिकी वा वृत्तिर्येषाम्, ये वा आङ्गलभाषायाः कुसंस्कारेभ्यो बिभ्यति, तैरवश्यमर्थकरविद्यायाः परिग्रहोऽपेक्ष्यः । वेदान्ते धर्मशास्त्रे, व्याकरणे साहित्ये न्याये मीमांसायां वा समधीते समधीतयामपि वा जीवनार्थः सर्वेषामपेक्षितः स्यात् । पूर्वं धर्ममुद्दिश्य संस्कृतभाषाध्ययनाय प्रवृत्तिर्भवति स्म । सम्प्रति प्रायोऽर्थमुद्दिश्यैवाध्ययनं प्रवर्तते । तस्मात् सर्वेष्वपि शास्त्रेष्वध्ययनस्यैकदेशोऽर्थकरविद्याया अपेक्ष्यत एव ।

कियतोप्यनेहसः पूर्वं पुराणानि कर्मकाण्डं ज्यौतिषमायुर्वेदश्चेति चतस्रो विद्या अर्थकर्य इति गणितुं शक्यन्ते स्म । सम्प्रति तु तदपि गतम् । अर्थपरिग्रहव्याकुले निर्जीविके धर्मश्रद्धारहिते कर्तव्यविमूढ इव च जगति पुराणानि कः शृणोतु । कुसंस्कारावृतानां व्यवस्थितसंस्कारैः किं प्रयोजनम् । अविश्वस्तानां किं फलितज्यौतिषेण ? तथापि जीवनसम्बंधित्वादायुर्वेदस्य, भारतीयजनतायाः सम्प्रत्यपि पूर्वादृष्टश्रद्धालम्बित्वाच्च ज्यौतिषस्याप्यर्थकरत्वं वक्तुं शक्यते ।

किं च राजभाषात्वादेवांग्लभाषाया अपि लोका अर्थकरत्वं मन्यन्ते । मम तु सर्वथाऽदृष्टस्येश्वरस्य वाऽर्थकरत्वमिति प्रतिभाति । न तत्र साम्प्रतिको लोकस्तिष्ठते । येषामीश्वर एव नास्ति, उद्योग एव वा सर्वस्वं ते कथमिवैतत्स्वीकुर्वन्तु । शतशोऽपि बी० ए० एम० ए पदवीधारिणोऽधीताङ्गलविद्या निर्जीविका एव विचरन्ति । तत्रादृष्टमेव कारणत्वेनेश्वरो वा वक्तुं शक्यते । तथापि तयोरदृष्टत्वादेव न विश्वसिति जनः । किं वा न सर्वेषामेवादृष्टं प्रतिकूलमननुकूलो वा महेश्वर इति जानतापि न परित्याज्यो भवत्युद्योगः । तस्मात् संस्कृतभाषाप्रचारकामुकैरध्ययनवि-

षयेष्वखिलेष्वप्येकदेशत्वेनार्थप्राप्त्युपायविद्याध्ययनं तत्समर्थं स्यादिति हृदि कृत्वाऽध्ययनाध्यापनं प्रवर्तनीयमिति ममाल्पा मतिः । यस्य वेदान्तविषयोऽध्येयस्तस्यायुर्वेदाध्ययनं ज्यौतिषाधिगम आंग्लभाषापरिचयश्चैकतमः कश्चिदप्रतिबद्धो भवत्वेव । येनासौ संस्कृतभाषामवगत्यार्थकष्टमसहमानः संस्कृतभाषाप्रचारमादध्यात् ।

अवशिष्यत इदानीं कलाः साम्प्रतिकं विज्ञानं च । इदमपि द्वारं संस्कृतप्रचारस्य । तत्र तु संस्कृतभाषायां ग्रन्था एव दुर्लभा असंभाविता वा । अयमत्र विधातुमाशावादः स्यात् । परहृदयप्रवेशसमर्थप्रियसंस्कृतभाषाप्रवीणो वैदिकविज्ञानाभिज्ञश्च कश्चिदेकः समर्थो विद्वांस्तथाविधानां वा तेषां काचन समितिर्वा सर्वानपि वैदेशिकभाषानिबद्धान् कलाग्रन्थांश्चाधीत्य तदर्थांश्चानुभूय तद्ग्रन्थानां वैदर्भमार्गपरिष्कृतेन सरलतमेन संस्कृतेनानुवादं कुर्यात् । अनूदितानां च तेषां पठनपाठनप्रचारशीला काचन महाशाला विश्वविद्यालयो वा स्थापितः स्यात् । तदा संस्कृतभाषायाः प्रचारः पूर्णः संभवति, संस्कृतभाषा च कालेन व्यावहारिकी वा कर्तुं शक्येतापि । स एष दुर्लभो मनोरथः । न चाऽसंभावित एव वा सर्वथा । इदानीमपि सन्त्येव तथाविधा राजानः कतिथा अपि । येषां भूयो भूयोऽर्थव्ययो विविधविद्याप्रदानप्रस्तारे भवति । तैरिह भारत एव क्वचित्, निजराज्ये वा विज्ञानविश्वविद्यालयो विज्ञानमन्दिराणि कलाभवनानि च प्रतिष्ठापयितुं शक्यन्ते । दुर्लभोऽसंभावित एव वा श्रीमन्मालवीयसदृशो महापौरुषिकस्त्यागी जनः स्वदेशहितकृदिव संस्कृतभाषाहितकृत् कोविदः । सति तस्मिंस्तु मनोरथो न मनोरथः स्यात् । आशया जीवति जनः । विशेषतो धार्मिकाः संस्कृतपण्डिताः दशमशताब्दीसभ्यताज्ञातकाश्च । संभवति वा विधातुर्विचित्रे विश्वरचने सर्वम् ।

स एष मम विजल्पतो जल्पस्य मुष्टीकृतोऽर्थः—प्राचीनसंस्कृतप्रचारः कर्तुं शक्यते नियतक्षेत्रे । क्षेत्राणि पुनस्तानि, विनोदो, व्यसनं, धर्मः, ज्ञानं, जीविकालाभ इत्यादीनि । भवन्ति संस्कृतभाषाव्यसनिनस्तादृशाः सुखिनस्तृप्तोदरा येषां संस्कृतलेखमन्तरा मनो न मनुतेऽपरत्र । तैस्तादृशेषु संस्कृतप्रचारः कर्तुं शक्यते । विनोदोऽपि तद्विधिविध एव वा प्रायः । स्युरेव श्रेष्ठियुवकाः, राजकुमाराः, पैतृकसंपत्तिसुखिनो वा युवानो येषामनवशिष्टकर्त्तव्यत्वादेकत्र निषीदतामेव केवलं दिवसाः कथंकथमपि न व्यतीयन्त एव । तैरिह कालक्षपणाय वाद्यानि क्रीडनकानि वा स्वीक्रियन्ते । यथा बेला सितारः हारमोनियमः शतरञ्जं ताशः चतुष्पटी ( चौपड़ ) वा । तथैवैते जागदीशी-गादाधरी-खण्डनखाद्यावच्छेदकत्वनिरुक्ति-रसगंगाधरादयो ग्रन्था अपि बुद्धिवादरूपाः कुलपतिसदृशैर्महाराजसंमानितैः संपन्नविद्वद्भिर्निर्माय निर्माय

वाद्यन्ते स्म समयनिर्यापणाय। अपर इदं न क्षमन्ते, वदन्ति च मूर्खोयं तदनभिज्ञत्वादिदं वदतीति। सत्यमिदं तथापि तेषां विनोदत्वं न व्यावर्त्तयितुं शक्यम्। शास्त्रमन्यत् विनोदोऽन्यः। ततश्च तद्विषेष्वेव तैः संस्कृतप्रचारः सुशकः। प्राचीनसंस्कृतेन शास्त्रेण श्रुतिस्मृतिपुराणरूपेण धर्मः संपद्यत इति सर्वसुप्रतिपन्नोऽर्थः। किन्तु तस्य नियत एव भूविभागे प्रचारः संपद्यते, न तु सर्वत्र। जीविकापि बहूनां संस्कृतेन प्रचलत्येव यथायथम्। भिषजो दैवज्ञाः पौराणिका याजकाश्च संस्कृतमेवोपजीवन्ति। तेन च तस्मिन् क्षेत्रे संस्कृतप्रचारः प्रचलत्येव। लाभस्तु दैवाधीनः। स च संस्कृतेनापि क्वचिद्भवत्येव। याजकादीनां स प्रसिद्ध एव। ज्ञानेनापि संस्कृतप्रचारो जायते। ज्ञानप्रयोजनत्वादेवासौ विरलः। विरला एव ज्ञानार्थमेव संस्कृतमधीयते। प्राचीनसंस्कृतप्रचारस्यैतानि क्षेत्राणि। तत्र प्रवर्तते तदधुनापि। यद्यपि प्राचीनसंस्कृतस्य भूयानेवातिमात्रो भागो विलुप्तस्तथापि विलोपसमयादितः परं भाष्यटीकास्वतन्त्रग्रन्थादिभिः पूरितोपि लभ्यते। सोऽयं भागो नवीनसंस्कृतमिति वक्तुं शक्यते।

साक्षात्कृतधर्मणामवताराणामृषिप्रायाणामृषीणामेव वा संस्कृतं परमं प्रमाणं भारतीयमैहिकपारलौकिकहितमावहतीति यशस्करं पुरुषार्थपर्यवसायि च। भाष्यटीकाव्याख्यादिविभागः प्राचीनसंस्कृताशयस्पर्शी तदन्तर्भूतत्वान्नवोप्यनवः। ये पुनरागमा जैनबौद्धागमाश्च श्रुतिसिद्धाशयप्रतिकूलास्ते प्राचीनसंस्कृतानुहारिणोपि नवा एव। ये चातिनवाः सामाजिका ग्रन्थास्तेऽभिनवं संस्कृतम्। तेषां तस्य च प्रचारस्त्वनभिमत एव। तथापि तत्तत्स्वभावपरवशैः स्वीकृताः स्वीकृतानि च प्रवर्त्तन्ते। तानि मन्ये विप्राणां तत्प्रायाणां वा गलग्रहत्वात्सनातनधर्मिणामुपरि रोषाय, तेषां परिहासाय, निन्दायै वा भवन्तीति तस्मै नवाय संस्कृताय तु नमः। अलमित्यर्थः।

अपरे पुनः कथयन्ति, प्राचीनमेव वा संस्कृतं किं न भवतु तद्यदि दुःशिक्षितमव्याकृतिपरिष्कृतमयथायथं वा परिगृहीतं केवलछान्दसगणकभिषग्गायकयाजकशाकुनिकादिप्रचारितं गलग्रह एव विप्राणाम्। ततश्च रोषनिन्दापरिहासभाजनमपि भवतीति तादृशाय भूयस्यो नमस्कृतयो भवन्तु। अलं तत्प्रचारेण। ये पुनः प्राचीनतामात्रविद्वेषिणो धर्ममसहमानाश्च भौतिकोन्नतिभिर्मोहमेव गताः स्वगृहमनिरीक्षमाणा अध्यात्मं न विश्वसन्ति, तेपि संस्कृतं विद्विषन्ति निन्दन्ति च। न किञ्चिदेतत्। तत्प्रातिकूल्येन संस्कृतप्रचारोऽवरुद्धो न भवति। जीवनोपायस्तु प्रातिकूल्यमाचरति प्रचारे। शिक्षा नाम संप्रति जीवनोपायतामेव गता। प्रायः सर्वे एव जीवनार्थमेव शिक्षां परिगृह्णन्ति। जीवनं तु संस्कृतेन यावतां यस्मिन् परिमिते क्षेत्रे यावद्वा निर्वहति, तावतामेव तस्मि-

सं० र० शिक्षाङ्कः



महाराजसंस्कृतकालेजः, जयपुरम्

वाद्यन्ते स्म समयनिर्यापणाय। अपर इदं न क्षमन्ते, वदन्ति च मूर्खोऽयं तदनभिज्ञत्वादिदं वदतीति। सत्यमिदं तथापि तेषां विनोदत्वं न व्यावर्तयितुं शक्यम्। शास्त्रमन्यत् विनोदोऽन्यः। ततश्च तद्विधेष्वेव तैः संस्कृतप्रचारः सुशकः। प्राचीनसंस्कृतेन शास्त्रेण श्रुतिस्मृतिपुराणरूपेण धर्मः संपद्यत इति सर्वसुप्रतिपन्नोऽर्थः। किन्तु तस्य नियत एव भूविभागे प्रचारः संपद्यते, न तु सर्वत्र। जीविकापि बहूनां संस्कृतेन प्रचलत्येव यथायथम्। भिषजो दैवज्ञाः पौराणिका याजकाश्च संस्कृतमेवोपजीवन्ति। तेन च तस्मिन् क्षेत्रे संस्कृतप्रचारः प्रचलत्येव। लाभस्तु दैवाधीनः। स च संस्कृतेनापि क्वचिद्भवत्येव। याजकादीनां स प्रसिद्ध एव। ज्ञानेनापि संस्कृतप्रचारो जायते। ज्ञानप्रयोजनत्वादेवासौ विरलः। विरला एव ज्ञानार्थमेव संस्कृतमधीयते। प्राचीनसंस्कृतप्रचारस्यैतानि क्षेत्राणि। तत्र प्रवर्तते तदधुनापि। यद्यपि प्राचीनसंस्कृतस्य भूयानेवातिमात्रो भागो विलुप्तस्तथापि विलोपसमयादितः परं भाष्यटीकास्वतन्त्रग्रन्थादिभिः पूरितोपि लभ्यते। सोऽयं भागो नवीनसंस्कृतमिति वक्तुं शक्यते।

साक्षात्कृतधर्मणामवताराणामृषिप्रायाणामृषीणामेव वा संस्कृतं परमं प्रमाणं भारतीयमैहिकपारलौकिकहितमावहतीति यशस्करं पुरुषार्थपर्यवसायि च। भाष्यटीकाव्याख्यादिविभागः प्राचीनसंस्कृताशयस्पर्शी तदन्तर्भूतत्वान्नवोप्यनवः। ये पुनरागमा जैनबौद्धागमाश्च श्रुतिसिद्धाशयप्रतिकूलास्ते प्राचीनसंस्कृतानुहारिणोपि नवा एव। ये चातिनवाः सामाजिका ग्रन्थास्तेऽभिनवं संस्कृतम्। तेषां तस्य च प्रचारस्त्वनभिमत एव। तथापि तत्तत्स्वभावपरवशैः स्वीकृताः स्वीकृतानि च प्रवर्तन्ते। तानि मन्ये विप्राणां तत्प्रायाणां वा गलग्रहत्वात्सनातनधर्मिणामुपरि रोषाय, तेषां परिहासाय, निन्दायै वा भवन्तीति तस्मै नवाय संस्कृताय तु नमः। अलमित्यर्थः।

अपरे पुनः कथयन्ति, प्राचीनमेव वा संस्कृतं किं न भवतु तद्यदि दुःशिक्षितमव्याकृतिपरिष्कृतमयथायथं वा परिगृहीतं केवलछान्दसगणकभिषग्गायकयाजकशाकुनिकादिप्रचारितं गलग्रह एव विप्राणाम्। ततश्च रोषनिन्दापरिहासभाजनमपि भवतीति तादृशाय भूयस्यो नमस्कृतयो भवन्तु। अलं तत्प्रचारेण। ये पुनः प्राचीनतामात्रविद्वेषिणो धर्ममसहमानाश्च भौतिकोन्नतिभिर्मोहमेव गताः स्वगृहमनिरीक्षमाणा अध्यात्मं न विश्वसन्ति, तेपि संस्कृतं विद्विषन्ति निन्दन्ति च। न किञ्चिदेतत्। तत्प्रातिकूल्येन संस्कृतप्रचारोऽवरुद्धो न भवति। जीवनोपायस्तु प्रातिकूल्यमाचरति प्रचारे। शिक्षा नाम संप्रति जीवनोपायतामेव गता। प्रायः सर्वे एव जीवनार्थमेव शिक्षां परिगृह्णन्ति। जीवनं तु संस्कृतेन यावतां यस्मिन् परिमिते क्षेत्रे यावद्वा निर्वहति, तावतामेव तस्मि-

सं० र० शिक्षाङ्कः



महाराजसंस्कृतकालेजः, जयपुरम्

# ❀ जयपुर-महाराज-संस्कृत-कालेजस्य ❀

## संक्षिप्तमितिवृत्तम्

( लेखकः-श्रीवृद्धिचन्द्रशर्मा शास्त्री व्याकरणाचार्यः, जयपुरम् )

राजपुत्राणां प्रदेशे जयपुराख्यमेकं दर्शनीयं नगरमस्तीति को वा न विजानीयात् ? अस्य निर्मापयिता महाराजः श्रीजयसिंहदेवो न केवलं विदुषामनुरागी अपि तु स्वयमपि विशिष्टो विद्वानासीत्। अनेन हि ज्यौतिषे विषये महती योग्यता संपादितासीत्। अनेन भारतवर्षस्य जयपुरोज्जयिनी-मथुरा-वाराणसीन्द्रप्रस्थ-प्रभृतिषु प्रसिद्धप्रसिद्धस्थलेषु ज्यौतिषयन्त्रशाला निर्मापिताः, याः अद्यापि महाराजस्यास्य विद्यानुरागं प्रकटयन्त्यः समुज्जृम्भन्ते। विद्यानुरागिणा धार्मिकेण महाराजेनानेन अस्मिन् करालेपि कलिकालेऽश्वमेधेनेष्टम्। अश्वमेधयज्ञावसरे भारतस्थाः प्रसिद्धप्रसिद्धा विद्वांसस्तेन समाहूताः। तेषु व्याकरणाटवीपञ्चाननस्य महावैयाकरणश्रीनागेशभट्टस्य शिष्यो मन्त्रशास्त्रे पटिष्ठः श्रीरत्नाकरपौण्डरीकः; ज्यौतिषशास्त्रे कृतभूरिपरिश्रमः सिद्धान्तसम्राड्ग्रन्थकर्ता श्रीजगन्नाथसम्राट् च गणनार्हौ। अयं हि महाराजः १७५० वैक्रमाब्दे आमेरराज्यसिंहासनमधिरूढः। तस्मादेव कालाद् विरलविबुधेस्मिन् प्रदेशेपि विदुषां समवायः समवस्थितोऽभूत्।

अस्यैव विद्याव्यसनिनो वंशे याचकानां कल्पतरुः कलासु कुशलो, विद्यानुरागी महाराजश्रीरामसिंहदेवः प्रादुरासीत्। जयपुरराज्यस्येतिहासे श्रीरामसिंहवर्मणः शासनसमयः पुरावृत्तविदां दृष्ट्यातिमहत्त्वशाली। तस्मिन् समये न केवलं राज्यस्यास्य बाह्योन्नतिरेव संजाता, अपि तु आभ्यन्तरसमुन्नतिरपि पर्याप्तमात्रायां समजनि। यद्यपि जयनगरनिर्माणं महाराजश्रीजयसिंहदेवेन कारितम्, किन्तु तस्य परिष्कारः श्रीरामसिंहदेवशासनसमय एव संवृत्तः। भौतिकोन्नत्या समं कलात्मककार्य्याणामपि समजायत आशातीता वृद्धिः। यथैव तेन नगरशोभावृद्ध्यर्थं निर्मापिताः पाषाणखचिता राजमार्गाः, द्योतिता दीपावली, यन्त्रितानि जलयन्त्राणि, विस्तारितानि वार्तायन्त्रीबाष्पयानादीनि, रचितो रामनिवासारामः, तथैवात्रनिवासिनां नागरिकताप्राप्त्यर्थमपि प्रचुरं प्रयतितम्। जयनगरनागरिकपरिष्कारयुगेस्मिन् विद्याप्रचारस्यापि कथं न भवेत् प्रगतिः ? कलानां विद्यानां च प्रचाराय तेन देशेभ्यो विदेशेभ्यो विचक्षणा विद्वांसो महतादरेण समाहूय स्वराज्येस्मिन् रक्षिताः। किञ्च समयमनुरुन्धानेन महाराजेनानेन प्राच्य-प्रतीच्योभयविद्याविभागयुक्तस्यैकस्य महाविद्यालयस्य वप्रमप्यव-स्थापितम्। किन्तु भिन्नलक्ष्ययोर्भिन्नसंस्कृतिप्रचारिकयोश्च प्राच्यप्रतीच्यविद्ययोरेकत्रासन-संस्थितिः प्रकाशान्धकारयोः स्थितिरिव दुःशकेति मत्वा ईशवीयस्य १८६५ संवत्सरस्याष्टममासस्य षड्विंशतारिकायां भिन्नतां नीतौ विद्यालयोऽस्मिन्दिनधनं प्र-
म सृष्टिकाले प्रकृतिपुरुषयोरिव पार्थक्येनाँ-

# ❀ जयपुर-महाराज-संस्कृत-कालेजस्य ❀

## संक्षिप्तमितिवृत्तम्

( लेखकः-श्रीवृद्धिचन्द्रशर्मा शास्त्री व्याकरणाचार्यः, जयपुरम् )

राजपुत्राणां प्रदेशे जयपुराख्यमेकं दर्शनीयं नगरमस्तीति को वा न विजानीयात् ? अस्य निर्मापयिता महाराजः श्रीजयसिंहदेवो न केवलं विदुषामनुरागी अपि तु स्वयमपि विशिष्टो विद्वानासीत्। अनेन हि ज्यौतिषे विषये महती योग्यता संपादितासीत्। अनेन भारतवर्षस्य जयपुरोज्जयिनी-मथुरा-वाराणसीन्द्रप्रस्थ-प्रभृतिषु प्रसिद्धप्रसिद्धस्थलेषु ज्यौतिषयन्त्रशाला निर्मापिताः, याः अद्यापि महाराजस्यास्य विद्यानुरागं प्रकटयन्त्यः समुज्जृम्भन्ते। विद्यानुरागिणा धार्म्मिकेण महाराजेनानेन अस्मिन् करालेपि कलिकालेऽश्वमेधेनेष्टम्। अश्वमेधयज्ञावसरे भारतस्थाः प्रसिद्धप्रसिद्धा विद्वांसस्तेन समाहूताः। तेषु व्याकरणाटवीपञ्चाननस्य महावैयाकरणश्रीनागेशभट्टस्य शिष्यो मन्त्रशास्त्रे पटिष्ठः श्रीरत्नाकरपौण्डरीकः; ज्यौतिषशास्त्रे कृतभूरिपरिश्रमः सिद्धान्तसम्राड्ग्रन्थकर्ता श्रीजगन्नाथसम्राट् च गणनार्हौ। अयं हि महाराजः १७५० वैक्रमाब्दे आमेरराज्यसिंहासनमधिरूढः। तस्मादेव कालाद् विरलविबुधेस्मिन् प्रदेशेपि विदुषां समवायः समवस्थितोऽभूत्।

अस्यैव विद्याव्यसनिनो वंशे याचकानां कल्पतरुः कलासु कुशलो, विद्यानुरागी महाराजश्रीरामसिंहदेवः प्रादुरासीत्। जयपुरराज्यस्येतिहासे श्रीरामसिंहवर्म्मणः शासनसमयः पुरावृत्तविदां दृष्ट्यातिमहत्त्वशाली। तस्मिन् समये न केवलं राज्यस्यास्य बाह्योन्नतिरेव संजाता, अपि तु आभ्यन्तरसमुन्नतिरपि पर्याप्तमात्रायां समजनि। यद्यपि जयनगरनिर्माणं महाराजश्रीजयसिंहदेवेन कारितम्, किन्तु तस्य परिष्कारः श्रीरामसिंहदेवशासनसमय एव संवृत्तः। भौतिकोन्नत्या समं कलात्मककार्य्याणामपि समजायत आशातीता वृद्धिः। यथैव तेन नगरशोभावृद्ध्यर्थं निर्मापिताः पाषाणखचिता राजमार्गाः, द्योतिता दीपावली, यन्त्रितानि जलयन्त्राणि, विस्तारितानि वार्तायन्त्रीबाष्पयानादीनि, रचितो रामनिवासारामः, तथैवात्रनिवासिनां नागरिकताप्राप्त्यर्थमपि प्रचुरं प्रयतितम्। जयनगर-नागरिकपरिष्कारयुगेस्मिन् विद्याप्रचारस्यापि कथं न भवेत् प्रगतिः ? कलानां विद्यानां च प्रचाराय तेन देशेभ्यो विदेशेभ्यो विचक्षणा विद्वांसो महतादरेण समाहूय स्वराज्येस्मिन् रक्षिताः। किञ्च समयमनुरुन्धानेन महाराजेनानेन प्राच्य-प्रतीच्योभयविद्याविभागयुक्तस्यैकस्य महाविद्यालयस्य वप्रमप्यत्र स्थापितम्। किन्तु भिन्नलक्ष्ययोर्भिन्नसंस्कृतिप्रचारिकयोश्च प्राच्यप्रतीच्यविद्ययोरेकत्रासन-संस्थितिः प्रकाशान्धकारयोः स्थितिरिव दुःशकेति मत्वा ईशवीयस्य १८६५ संवत्सरस्याष्टममासस्य षड्विंशतारिकायां भिन्नतां नीतोसौ विद्यालयोऽनादिनिधनं ब्रह्म सृष्टिकाले प्रकृतिपुरुषयोरिव पार्थक्येनाँ-

ग्लविद्यालयस्य संस्कृत-विद्यालयस्य च रूपं जग्राह । तावेव विद्यालयौ संप्रति 'महाराजाँग्लकालेज'—'महाराज-संस्कृत-कालेज' नाम्ना प्रसिद्धौ जनतायाम् । तयोः संस्कृत-विद्यालयोयं विद्यालयविभागावसरे जयपुरस्थसुप्रसिद्ध-राजभवने सुन्दरे श्रीरामचन्द्रमन्दिरे प्रतिष्ठापितोऽद्यावधि तत्रैव वर्तमानः समेधते।

श्रीमता महाराजेन प्राच्य-प्रतीच्यविद्यालययोः पार्थक्यं विधाय स्वप्रखरप्रतिभायाः परिचय एव प्रत्तः । अन्यथा मायावादयुगेस्मिन् संख्यातीताः संस्कृत-पाठशालास्तासां प्रतीच्य-पाठशालानामुदरेषु विलीनतां गता इति वराकस्यास्यापि किं न स्यात् सा गतिरिति नात्र विशेषतो वक्तव्यम् ।

यद्यपि तस्मिन् समये संपूर्णेऽपि भारते वर्षे गौराङ्गाणां राज्यं प्रसृतमभूत् । तेषां प्रेरणया गतानुगतिकतया वा स्वतन्त्रेष्वपि क्षत्रियादिराज्येषु भौतिकीयं समुन्नतिर्यथाकथञ्चित् समेधमानासीदिति सोयं समयप्रभाव एवेति शक्यते वक्तुम् । किन्तु यदा लार्ड-मेकालेमहोदयस्य महत्यानुकम्पयाखिलेपि आङ्गलभारते आँग्लभाषाप्रचारार्थं प्रयत्नः प्रचलित आसीत् ; राजपुत्राणां प्रान्तेपि राजधानीषु आङ्गलविद्यालयस्थापनाय तत्रत्याः क्षत्रियतज्जजाः प्रयत्नशीला आसन्; तस्मिन् समये संस्कृत-विद्यालयमिमं संस्थाप्य महाराजश्रीरामसिंहेन स्वधर्मपरायणतायाः स्वसंस्कृतिरक्षायां बद्धपरिकरतायाश्च परिचयः प्रत्त एवेति को वा न मन्वीत ! अस्तु.

सोयं विद्यालय आङ्गलविद्यालयतः पार्थक्यावसरे अष्टभिरध्यापकैरलङ्कृत आसीत् । षण्णां विषयाणां चात्राध्यापनं प्रचलति स्म । ते च विषयाः—वेद—व्याकरण-न्याय-साहित्य-ज्यौतिषायुर्वेदाः । प्रत्येकस्य विषयस्यैकैको विद्वानध्यापक इति षट् प्रधानाध्यापकाः, द्वौ च प्रवेशिकाविभागे संस्कृत-गणिताध्यापकाविति संभूयाष्टौ विद्वांसः पाठशालाकार्यमतिवाहयन्ति स्म । किन्तु नैतावता कार्यं सुचारु चलितमिति सन् १८६९ ईशवीये अध्यापका वर्द्धिताः । तत आरभ्य सोयं विद्यालयः समेधमान एव वर्तमानरूपतामाप ।

भारतेस्मिन् देशे सत्यपि विद्यायाः प्रचारेऽतिप्राचीने सेयं परीक्षा-प्रणाली अतीवार्वाचीनेति प्रायः सर्वेपि विद्वांसो जानन्त्येव । आँगलपाठशालासु यदा सोयं परीक्षा-प्रचारः प्रारभ्यत, तदा संस्कृतपाठशालास्तेन कथं वञ्चिताः स्युरिति विद्यालयस्यास्यापि स्वतन्त्रा परीक्षाप्रणाली प्रचलिताभूत् । प्रवेशिकोपाध्याय-शास्त्र्याचार्येति विभागचतुष्टयं परिकल्प्य क्रमशः प्रचलितासु तासु ईशवीयसंवत् १८८९ तमे वर्षे शास्त्रिपरीक्षा प्रारब्धा, १८९५ तमे चाचार्यपरीक्षा प्रारभ्यत । सर्वतः प्रथममाचार्यपरीक्षायामत्रत्यः श्रीलक्ष्मीरामस्वामिमहोदयः साफल्यमभजतेति स्मरणार्हमेतत् । तत आरभ्याद्यावधि ताः परीक्षास्तैरेव नामभिः प्रचलिता वर्तन्ते । ग्रन्थानां बाहुल्येन, परीक्षकाणां च मार्मिकैः प्रश्नैः अधिकारिवर्गस्य नावधानतया च यद्यपि नासां परीक्षाणां प्रचुरः प्रचारः समभूत्, किन्तु आसु परीक्षासु उत्तीर्णाः प्रायो योग्या एव विद्वांसः समभूवन्निति सोयं सन्तोषावसरः सुधियाम् ।

विद्यालयस्यास्य प्रारम्भादद्यावधि पञ्च महापुरुषा अध्यक्षतामभजन्त। अस्य प्रारम्भकाले स्वनामधन्याः श्री-एकनाथशर्ममैथिल-महाभागाश्चौधरीत्युपाह्वाः प्राधान्यमलभन्त। येषां हि धन्यतमे कुले सुरसरस्वतीयं धूर्जटिजटायां सुरसरिदिव नावच्छिन्न-प्रवाहाद्यापि तथैव खेलति। एतेषां पुत्र-पौत्र-पपौत्रादयश्चास्यामेव पाठशालायामध्यापयामासुरध्यापयन्ति च। अद्यत्वेपि तेषां कनिष्ठपौत्राः सुप्रसिद्धा विद्वांसोस्मद्गुरुचरणाः श्रीचन्द्रदत्तशर्ममहाभागा उपाध्यक्षपदमधितिष्ठन्तो व्याकरणशास्त्रप्रधानाध्यापका वर्तन्ते। अयमपि नाल्पीयसः प्रमोदस्यावसरो यदेषां द्वितीयस्तनयः श्रीदुर्गादत्तशर्ममहाशयोपि पाठशालायामस्यां व्याकरणाध्यापकत्वेन नियुक्तः सुचारु कार्यं संचालयति। अस्तु, यात्राप्रसङ्गेन पुण्यनगर्यां वाराणस्यां गतेन महाराजश्रीरामसिंहदेवेन सबहुमानमानीतायां श्रीरामभजन-शिवरामशर्मसारस्वतनाम्न्यां पण्डितद्वय्यां वार्धक्यात् श्रीचौधरीमहाभागैर्गृहीतेवकाशे, प्रान्तेस्मिन् विख्यातयशसो विद्वांसः श्रीरामभजनसारस्वतमहाभागाः पाठशालाया अस्याः प्रधानपदमलञ्चक्रुः। तदनन्तरं च व्याकरणशास्त्रे परिष्कारयुगप्रवर्तकानां भारतप्रसिद्धविदुषां श्रीबालशास्त्रिणां प्रमुखशिष्येष्वन्यतमाः, श्रीशिवकुमारशास्त्रिसतीर्थ्याः, श्रीलक्ष्मीनाथशास्त्रिणो विद्यालयस्यास्य अध्यक्षपदे नियुक्ताः। एषामध्यक्षत्वसमये विद्यालयस्यास्य स्नातकास्तथा निरसरन्, ये भारत-प्रसिद्ध-विद्वत्सु अन्यतमाः पर्यगण्यन्त। तेषां नामानि तु अधस्तान्निर्देक्ष्यन्ते।

श्रीमत्सु शास्त्रिचरणेषु दिवं गतेषु म० म० श्रीदुर्गाप्रसादद्विवेदमहाभागाः पाठशालाया अस्याः प्राधान्यमगृह्णन्। एते हि महाभागा गणितशास्त्रस्य विशिष्टा विद्वांसस्त्वासन्नेव, किन्तु साहित्यदर्शनतन्त्रशास्त्रादिष्वप्येतेषां बुद्धिरकुण्ठिता वरीवर्तते स्म। एभिरनेके खलु ग्रन्था भिन्नभिन्नविषयाणां निर्मिताः। तेषु 'चातुर्वर्ण्य-शिक्षा' नामको ग्रन्थो विशेषतो गणनार्हः। तैर्वार्धक्यवशाद् गृहीतेवकाशे ख्रीस्ताब्दे १९२६ तमे महा० महो० श्रीगिरिधरशर्मचतुर्वेदमहाभागा अध्यक्षपदमारूढाः। एषां हि समये विद्यालयस्यास्य स्वरूपं विशेषतः प्रवृद्धम्। पूर्वं किल केवलस्य यजुर्वेदस्यैवाध्यापनमत्राभवत्। किन्त्वेषां काले चतुर्णामपि वेदानामध्यापका नियताः। आङ्ग्लाध्यापकस्य, हिन्दी-साहित्याध्यापकस्य च नियुक्तिः संजाता। आयुर्वेदस्य स्वरूपमपि एष्वेव दिवसेषु विशेषतः प्रसृतम्। प्रतीच्यायुर्वेदा-(डाक्टरी)ध्यापनार्थमेकस्य डाक्टरमहोदयस्यापि नियुक्तिः समजायत। आयुर्वेदाध्यापकश्चैकः प्रवर्द्धितः, रसायनशालाकार्यसंचालनार्थमेकस्यायुर्वेदाचार्यस्य नियुक्तिरपि समभवत्। व्यायामकार्यसंचालनार्थमेकस्य व्यायामकार्यकुशलस्यापि नियुक्तिरिति सुबहु स्वरूपमस्योपबृंहितमेतैः।

आयुर्वेदादिशास्त्राध्ययनार्थमत्र सुदूर-दूरदेशेभ्यश्छात्राः समागच्छन्ति। तेषां कृतेऽध्यापनव्यवस्था त्वासीदेवास्यां पाठशालायाम्, किन्तु निवासादीनां सुव्यवस्था पुरा नासीत्। तदर्थं कृतेन प्रयत्नेन माधवविला-

सनाम्नि सुप्रसिद्ध राजभवने छात्रावासस्य स्थापनापि संजाता। यत्र आसन्नत्रिंशाश्छात्रा अधुना निवसन्तोऽत्र पठन्ति । तदेवं विद्यालयस्यास्य महती क्षतिपूर्तिरेका संजाता ।

यद्यपि पाठशालाया अस्या बहवः स्नातका भारतस्यान्यान्येषु प्रान्तेषु स्व-स्व-कर्मणि प्रसिद्धाः सन्तो योगक्षेमं वहन्ति, किन्तु कतिपये तु स्वकीय-विशिष्टयोग्यतया भारत-प्रसिद्धाः संजाताः, तेषु लवपुरीय-प्राच्य-विद्यालयस्य प्रधानाध्यापकाः, नैकग्रन्थटिप्पणीकर्त्तारो बहूनां ग्रन्थानां संशोधयितारो व्याकरणशास्त्रे कृतभूरिपरिश्रमाः ख्यातनामानः सुविदितयशसो महामहोपाध्यायाः श्रीशिवदत्तशर्ममहाभागाः; आयुर्वेदमार्तण्डाः पीयूषपाणय आयुर्वेदीयग्रन्थानां मर्मविदोऽपि सन्तः शास्त्रान्तराणामपि मर्मवेदितारः स्वनामधन्याः श्रीलक्ष्मीरामस्वामिमहोदयाः; मायापुर-(हरिद्वार) लवपुराद्यनेकेषु प्रसिद्धस्थलेषु शास्त्राण्यध्याप्य संप्रति विद्यालयस्यास्य प्राधान्यं भजमानाः, सनातनधर्मस्य महामहोपदेशकाः, शास्त्रमर्मज्ञा महोमहोपाध्यायाः श्रीगिरिधरशर्मचतुर्वेदमहाभागाः; ज्ञातन्यायशास्त्रमर्माणोऽपि प्रतीच्यविद्यापारङ्गताः लक्ष्मणपुरीयविश्वविद्यालये संस्कृत-व्याख्यातारः श्रीबदरीनाथशास्त्रिण एम्. ए.महाशयाः; काशीगवर्नमैण्ट-संस्कृत-कालेजे प्राग्वेदाध्यापकपदवीकाः स्वर्गीयवेदाचार्यश्रीविजयचन्द्रचतुर्वेदमहाशयाः; विशेषतो गणनार्हाः । किं बहुना, वेदसमीक्षाचक्रवर्तिनो द्वीपान्तरेष्वपि प्रख्यातयशसोऽखिलशास्त्रमर्मज्ञाः, विद्यावाचस्पतयः श्रीमधुसूदनशर्ममैथिलमहाभागा अपि व्याकरणादीनि शास्त्राण्यस्यामेव पाठशालायामपठन् । विशेषतश्च स्मरणार्हमेतत्—यदद्यत्वे यावन्तः सन्ति सुधियोऽत्र पाठशालायां वेदवेदाङ्गादिसंस्कृताध्यापने नियतास्ते सर्वेऽपि प्रायोऽस्या एव पाठशालायाः स्नातकाः ।

आयुर्वेदातिरिक्तविषयाणामध्यापनमन्यास्वपि पाठशालासु बहुत्र प्रचलतीति तदर्थं प्रायः सुदूरस्थाश्छात्रा नात्रागच्छन्ति; किन्तु आयुर्वेदाध्ययनार्थमानर्मदातः, आ पञ्चाम्बुप्रान्तात, आ च गुर्जरप्रदेशाच्छात्राः समागत्य छात्राः साफल्यमवाप्य स्वेषु स्वेषु देशेषु गत्वा चिकित्सन्तः सुप्रसिद्धा वैद्या भवन्तीति प्रत्यक्षचरम् ।

सम्प्रत्यस्मिन् विद्यालये पञ्चत्रिंशदध्यापकाः सन्ति । पञ्चशती च्छात्राणां चाध्ययनार्थमायाति । केवलस्य विद्यालयस्यास्य कृते रूप्यकाणां त्रिंशत्सहस्रीपरिमितो व्ययो भवति राज्यस्य । मन्ये, भारते वर्षे द्वित्राः पञ्चषा वैतादृशाः संस्कृत-महाविद्यालयाः स्युः । आङ्गलशिक्षायाः प्रवर्द्धमानप्रचारेऽस्मिन् समयेऽपि संस्कृतशिक्षणोन्निनीषा जयपुरमहाराजस्य भारतीयसंस्कृतौ प्रेमातिशयं प्रकटयति । यदि नाम प्रान्तस्यास्य अन्येऽपि राजानः, येषां पूर्वजैः प्राणपणेनापि स्वसंस्कृतिरक्षायै प्रयतितम्, महान्तं कष्टमनुभूयापि स्वधर्मक्षतिर्न सोढा, आदर्शमिमं परिगृह्य स्व-स्व-राज्ये संस्कृत-विद्यालयान् संस्थाप्य वर्णाश्रमाचार-धर्म-रक्षणे बद्धपरिकरा भवेयुरवश्यं तैः स्वक्षात्रधर्मः परिपालितः स्यात् । आर्य्यसंस्कृति-रक्षया रक्षितेन धर्मेण तेऽपि रक्षिताः स्युरिति—शम् ।

न्नैव क्षेत्रे तावदेव च निर्वाहमावश्यत्यग्रेपीति पश्यन्ति सचेतसो जनाः। वैदेशिके वैभाषिके राजशासने म्लेच्छप्राये च जने जनपदे च कैव नामाशा केवलसंस्कृतेन जीवनस्य, तदर्थक-संस्कृतप्रचारस्य चेति परस्ताद्विशदीकृत्य विवेचितमेव।

तस्माद् यावद्विशेषविशेषं संस्कृतप्रचारमाकाङ्क्षद्भिः सर्वेष्वपि शास्त्राध्ययनेषु जीविकोपयुक्तविद्याभ्यसनसहकारोऽवश्य-माधेयः, राजभाषासहयोगश्च। यद्यपि विदेशीयभाषाभ्यसनं प्राचीनसभ्यतासंस्कारान् धर्मग्रहमास्तिकतामात्मविशुद्धिं च समूलकाषमुन्मूलयति, तथापि किं क्रियतां प्रतिकूलतामुपगते हि विधौ। विद्रुते पुनः समयप्रातिकूल्ये जागरूके वा दैवे भगवति राजनि कस्मिन्नपि तथाविधे सर्वं समंजसं स्यादिति तथात्वाय भगवाञ्जगदीश्वरः श्रीकृष्णः प्राथ्यते साञ्जलिबन्धम्।

---

## ❀संस्कृतभाषा च वर्तमानकाले तच्छिक्षा च।

(ले० साहित्याचार्यः-राजगुरुपं० गोपीनाथशास्त्री द्राविडमहाभागः, M. A., L L. B.)

संस्कृतं मृतभाषाणां कक्षासु पाश्चात्यैः प्रक्षिप्तमिति भारतीयविद्वज्जनस्य पाश्चात्यविदुषां विषये महानाक्षेपः। अत्र किञ्चिद्विचार्यते—पश्चिमे भूमण्डले संस्कृतमन्येन भाषासमुच्चयेन सह 'क्लासिक' इत्याख्यां भजते। क्लासिकशब्दश्चाऽन्यतमेन पाश्चात्यविदुषैवं व्याख्यातः—

"Classic may be simply defined as a book, which has stood the best of time, and by its stability and permanence, and the universality and persistency of its appeal has given unmistakable assurance of immortal life." *An Introduction to the studies of lit.....by W. H. Hudson. page 411*

भारतीयेषु विश्वविद्यालयेषु संस्कृतमरेबिकफारसीभाषाद्वयं च क्लासिकशब्देन व्यवह्रियते। क्लासिकशब्दान्तर्भावेनैव पाश्चात्यैः संस्कृतस्यामरताऽङ्गीकृता भवति। इतोऽप्यधिकः संस्कृतस्य कीदृशो बहुमानः पाश्चात्येभ्यः संस्कृतप्रेमिभिरपेक्ष्यते? महता जनसमुदायेन लौकिकव्यवहारेषु संस्कृतं नोयुपज्यते इति तस्मिन्मृतत्वारोपः। यथा यूरोपद्वीपेऽपि 'ग्रीक' 'लेटिन' भाषाद्वयमपि मृतभाषासु गण्यते। संस्कृतस्यामरत्वमन्यथाऽपि सिध्यति। संस्कृतम्' 'प्राकृतमिति भाषाविभागो भारते वर्षे बहोः कालात् प्रचलितः। संस्कृतभाषा सर्वसाधारणजनसमाजस्य भाषा कदापि नासीदित्यनुमीयते। अत एव भगवता बुद्धेनाऽखिलजनसमाजावबोधाय निजधर्मस्तात्कालीनायां साम्प्रतं पालीति विश्रुतायां भाषायामुपदिष्टः। तेन पालीभाषया अपि अमरत्वमेव चिन्तितं भवेत्। अत एव तेन सा भाषाऽङ्गीकृता!

---

❀ जयपुरराजकीयसंस्कृतमहाविद्यालयस्योपाधिवितरणोत्सवे या वक्तृताऽजायत तदुपकरणकोयं निबन्धः। संपादकः।

परमिदानीं पालीभाषाया लोकव्यवहारे अनुपयुक्तता विख्याता। संस्कृतमपि पाली-भाषेव लोकव्यवहारे नोपयुज्यते। परं पाली-भाषा यथा प्राणहीना तथा संस्कृतं नेति अत्र कस्यापि मतभेदो न भविता। संस्कृतं हि भारते वर्षेऽद्यापि पण्डितैर्व्यवह्रियत एव। पाली तु बौद्धधर्मानुयायिभिरपि न व्यवह्रियते। संस्कृते च विविधानि साप्ताहिकानि, पाक्षिकाणि, मासिकानि पत्राणि लभ्यन्ते। पालीभाषायामेकमपि पत्रं विरलम्। वर्षाकाले गर्तेषु सञ्चितं विपुलमपि पयः अन्तः स्रोतसोऽभावाद्यथा वर्षात्यये शुष्यति, तथा अनिबद्धमूला पाली लुप्ता। वर्षाजलानपेक्षं सर इव संस्कृतमद्यापि तथैव सरसम्। एतदपि संस्कृतस्य सजीवतायाः द्योतकम्। संशोधनविषये पाश्चात्यविदुषां दृष्ट्या संस्कृतस्य महत्त्वमधस्तनो लेखो विशदयति-

'The origin of the comparative philology dates from the time when European scholars became accurately acquainted with the ancient language of India. Before that time classical scholars had been unable through centuries of learned research to determine the true relation between the known languages of our stock. This fact alone shows the importance of Sanskrit for comparative research. Though its value in this respect has perhaps at times been over-rated, it may be still considered as the eldest daughter of the old mother tongue. Indeed so far as the direct documentary evidence goes it may rather be said to be the only surviving daughter. For none of the other six principal members of the family have left any literary monuments and their original features have to be reproduced, as best they can, from the materials supplied by their own daughter-languages. Such is the case as regards the Iranic, Hellenic, Italic, Celic; Teutonic and Letho-slanic languages. To the Sanskrit, the antiquity and extent of its literary documents, the transparancy of its grammatical structure the comparatively primiture state of its accent system and the thorough grammatical treatment, it has received at the hands of the native scholars, must ever secure the foremost place in the comparative study of Indo-Germanic speech.'

*(Encyclopidea Britanica.)*

भारते वर्षे यवनाधिकारकालादारभ्य संस्कृतस्यावनतिः क्रमेणाऽऽरब्धा इत्युक्तौ मिथ्याभाषणारोपो न शङ्कनीयः। राजाश्रयाभावस्य तन्नैसर्गिकं फलम्। द्वादशशततमस्य शतकस्य तृतीये पादे भारतावनिर्यवनैराक्रान्ता। तस्मिन्नेव शतके श्रीहर्षेण नैषध-महाकाव्यं निर्मितम्, भास्कराचार्येण सिद्धान्तशिरोमणिर्निर्मितः, भामतीकारो वाचस्प-

तत्र । न्यायसूचीनिबन्धोयमकारि सुधियां मुदे। श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥ इति तेनैव नवमे शतके स्वस्य सत्ताया ख्यापितत्वात् ।



तिमिश्रोऽपि तस्मिन्नेव शतके आसीत्। हेमचन्द्रेण अभिधानचिन्तामणिः, अनेकार्थसंग्रहः, प्राकृतव्याकरणं च तदैव निरमायि। त्रयोदशे शतके हेमाद्रेश्चतुर्वर्गचिन्तामणिस्तथा चतुर्दशशततमे शतके विश्वनाथस्य साहित्यदर्पणः प्रादुरभूत । पञ्चदशशततमे च नागोजीभट्टेन परिभाषेन्दुशेखरो जीमूतवाहनेन च दायभागो निर्मितः।

षोडशशततमे शतके केशवमिश्रेण अलङ्कारशेखरस्तथा अप्पैय्यदीक्षितेन कुवलयानन्दो निर्मितः। एवं पण्डितराजेन श्रीजगन्नाथेन च रसगङ्गाधरादयो अलङ्कारग्रन्थास्तथा विविधानि काव्यानि रचितानि। अष्टादशशततमे अन्येन नागेशभट्टेन अनेके अलङ्कारग्रन्था रचिताः । राजाश्रयो विद्यावृद्धेरपरिहार्यो हेतुरित्यत्र नास्ति मतद्वैविध्यम्। अन्वयव्यतिरेकाभ्यां तयोः कार्यकारणभावः साधयितुं शक्यते। राजाश्रय एव तस्यां प्राणानाधत्ते। एतदभावस्तस्या मरणाय कल्पते। भारते वर्षे द्वादशशततमे शतके यवनैरार्यावर्त आक्रान्तः। ततः प्रभृति प्रत्यक्षाप्रत्यक्षरूपेण यवनाधिकारिपरम्पराभिः संस्कृतस्यावनत्यै परिकर इव बद्ध आसीत। परं तदा माण्डलिकै राजभिः संस्कृताय महानाश्रयो वितीर्णः। उपरिदर्शिता ग्रन्थनिर्मातारो माण्डलिकानां राज्ञां संसदामलङ्कारभूता आसन्। राजकीया भाषा यद्यपि यावनी भाषाऽऽसीत् तथापि गीर्वाणवाणीयं माण्डलिकानां तेषां राज्येषु पर्याप्तां पुष्टिं लेभे। परमिदानीं तथा नास्ति। इदानीं सामन्तराज्येष्वपि आङ्गलविद्यैव प्रभवति । आङ्गलविद्यायाः साम्राज्येन व्यापित्वं सर्वजनविदितम्। यद्यपि इत एकस्माच्छतकाद् गीर्वाणवाण्या वृध्यै भूयान् हस्तावलम्बो वितीर्यते, पर्याप्तोऽर्थव्ययोऽप्यस्याः कृते विधीयते, योग्या विद्वांसस्तत्तदुचितेषु पदेषु नियुक्तीरपि लभन्ते, तथाप्यस्या अपेक्षिता वृद्धिर्न दृश्यते। अत्र किञ्चित्समालोचनीयम्।

यवनसाम्राज्ये हिन्दवो माण्डलिका राजानो गीर्वाणवाणीमेवापूपुषन्। तदानीन्तने साम्राज्ये एका यावनी भाषैव गीर्वाणवाण्याः प्रतियोगिन्यासीत्। गीर्वाणवाण्यपि साम्राज्येणासम्बद्धे भूदेवसमाजे एकमेव आराध्यदैवतमासीत्। इदानीमाङ्गलभाषा ततोऽपि बलवत्तरा तस्याः प्रतियोगिन्यस्त्येव । परं तत एव लब्धजन्मान आधुनिक्यः। प्रान्तीयभाषा अपि तया सह बद्धस्पर्धा इव लक्ष्यन्ते। एतेन प्रान्तीयभाषाणामुज्जीवनं संस्कृतानुरागिणां नानुमतमिति न शङ्कनीयम्। संस्कृताधिकारघातेन तदुज्जीवने तेषामाक्षेपः। संस्कृते कौशलं कियताप्यायासेनार्जयितुं शक्यते। वस्तुतः संस्कृतमाङ्गलभाषापेक्षयाऽतीव सरलम्। आङ्गलभाषाभ्यासे यावतः श्रमस्यावश्यकता वर्तते, तस्य दशमोप्यंशः संस्कृते पाटवार्जनाय पर्याप्तः। परं तावन्तमपि श्रमं विधातुमशक्तैः प्रान्तीयभाषाणामुज्जीवनाय कियन्तमपि यत्नं विधाय पाण्डित्यख्यातिः

सम्पाद्यते। मूलस्य सुरक्षिततामविगणय्य यदि शाखानां समृद्धिर्भवितुं शक्या, तर्हि संस्कृतानपेक्षया ततो लब्धजन्मनां प्रान्तीय-भाषाणां समृद्धिराशंसनीया। हिन्दीभाषैव गृह्यतां तावत्। आङ्गलभाषातो गृहीतानां शब्दानां हिन्दीभाषायामनुवादः संस्कृतैरेव शब्दैर्विधीयते। तत्र हिन्दीभाषायां पर्याप्तानां शब्दानामभाव एव कारणं भवितुमर्हति। त एव संस्कृतशब्दाः हिन्दीशब्दा इति हिन्दीभाषाभिमानिभिर्गृह्यन्ते। यथा 'वि-चारविनिमयः—' for exchange of thoughts 'निकट–भविष्य'–for near future,'दृष्टिकोण'–for angle of vision, 'उत्तरदायि–शासन'–for responsible Goverment, 'प्रतियोगिता'–for competition, 'सहयोग' for co-operation, 'प्रतिनिधि' Representative, इत्यादयः शब्दाः संस्कृतादेव गृहीताः। हिन्दवः संस्कृतमधीयतां न वा परं संस्कृते निर्मितो विविधो ग्रन्थसमुदाय एव हिन्दूसंस्कृतेर्नीवी इत्युक्तौ अतिशयोक्तिर्न भवति। हिन्दुजात्यै संस्कृतमपरिहार्यम्। लौकिकेष्वपि व्यवहारेषु पदे पदे प्रत्यक्षाप्रत्यक्षरूपेण संस्कृतशब्दानां उपयोगोऽपरिहार्यः।

प्रथमं तावद्वैयक्तिकान्येव नामानि गृ-ह्यन्ताम्। प्रायो हिन्दुजनस्य नामानि संस्कृतैः शब्दैरेव निर्मितानि भवन्ति। संस्कृतान-भिज्ञैस्तानि लघूनि नामान्यपि शुद्धानि न लिखितुं शक्यन्ते, न वा उच्चारयितुं शक्यन्ते। उदाहरणार्थं ललिताप्रसादशब्द एव गृह्य-ताम्। प्रसादशब्दस्याशुद्धानि बहुविधानि रूपाणि श्रीमतां चिरपरिचितानि सन्त्येव। परं ललिताशब्दोऽपि शुद्धो न लिखितुं पार्यते। ललिताशब्दस्थ इकारो लुप्यते। लुप्तेकारोऽयं शब्द आङ्गललिप्यां लिखितो लाल्ता-परशाद इत्युच्चार्यते, अयं शब्दो डित्थडवि-त्थादिशब्दवन्निरर्थकः। अयं शब्दोऽस्मिन् रूपे यदि केनचिन्निरक्षरेणाशिक्षितेन वा व्य-वहृतो भवेत्तर्हि तस्य निरक्षरताऽशिक्षितता वा स्खलने कारणीभूता स्यात। परं हिन्दी-भाषायामुत्तीर्ण( M. A. )परीक्षेण भार-तीयेऽन्यतमस्मिन् विख्याते विश्वविद्यालये हिन्दीभाषाध्यापकेनाऽयं शब्दोऽस्मिन्नशुद्धे रूपे व्यवह्रियते। हरिद्वारसमीपे हृषीकेशा-भिधं पुण्यक्षेत्रं वर्त्तते। हृषीकाणामिन्द्रिया-णामीश इत्यस्य शब्दस्य व्युत्पत्तिः। भग-वतो नारायणस्येदं नाम। हिन्दीभाषा-यामयं शब्दो ऋषीकेशइति लिख्यते मुद्र्यते पठ्यते च। अस्मिन रूपे व्यव-ह्रियमाणस्यास्य शब्दस्य ऋषेः ऋषीणां वा केशा इत्यर्थो भवति, यः किलानर्थकल्प एव। गढवालप्रान्तस्य देशालेख्ये (Map) हिमालयान्निर्गतानां नदीनां नामानि मुद्रि-तानि सन्ति, तत्र 'केदार'समीपे निर्गतो गङ्गाप्रवाहो मन्दाकिनीत्याख्यया विख्यातः। एष प्रवाहस्तस्मिन्देशालेख्ये मन्दाग्निनाम्ना दर्शितः। अपूर्वा विद्वत्तेयम्। अस्यापि प्रमाणं मत्सविधे वर्तते। शिवशब्दादयः

शवशब्दाऽदिषु परिवर्त्य लिखितानि बहुत्र दृष्टिगोचरीभवन्ति। एकस्या भाषायाः स्तुतिपराः शब्दा अपरस्यां भाषायामन्यथाऽर्थं बोधयन्तीति श्रूयते। परं एकस्यामेव भाषायां स एव शब्दः शिक्षितैरशिक्षितैश्च व्यवहृतः पृथक्पृथगर्थं बोधयति। नवग्रहस्तोत्रे चन्द्रस्तुतिपरः—

दधिशंखतुषाराभं क्षीरोदार्णवसंभवम्।
नमामि शशिनं सोमं शंभोर्मुकुटभूषणम्॥

इति श्लोको वर्तते। नवग्रहजपविधातृभिर्ब्राह्मणकुमारैरशिक्षितैरस्मिँश्च्छ्लोके 'शशिनं' अयं शब्दो मात्राविपर्ययेण 'शिशनं' इत्युच्चार्यते लिख्यते च। उच्चारणे शकारोत्तरवर्त्यकारः समीचीनतयाऽश्रूयमाणो महान्तमनर्थम्बोधयति। सूतिकागृहे गृहशब्दो, नवग्रहे ग्रहशब्दो व्यवह्रियते। परमज्ञानादस्य शब्दद्वयस्य विपर्यासो बहुधा विलोक्यते। मद्रासप्रान्ते तकारान्ताः सरस्वती—गणपतीत्यादयः शब्दाः थकारान्ता लिख्यन्ते मुद्र्यन्ते च। अचां हल्सु हलामच्सु तथा ह्रस्वदीर्घयोरेवमल्पप्राणमहाप्राणयोः परस्परं स्थानरूपविपर्ययः संख्यातीतः। मात्राणामप्यशुद्धावुपयोगानुपयोगौ प्रत्यहं दृश्येते। यदि संस्कृतानां शब्दानामयमशुद्धो व्यवहारः अप्रतिहतोऽनुमोद्यते, तर्हि कियता कालेन तेषामशुद्धमेव रूपं शुद्धत्वेन ग्रहीष्यते। शुद्धं तु रूपं विस्मृतप्रायं भविष्यति। यतो मुद्रणे तथा संशोधनेऽनाघ्रातसंस्कृता एव प्रायो नियुज्यन्ते। मुद्रितो विषयः प्रायः शुद्धत्वेन गृह्यते। ब्राह्मणजनः पर्याप्तं संस्कृतं ज्ञानमसम्पाद्यैव पौरोहित्यमाचरति। शुद्ध्यशुद्धिज्ञानाभावात्सर्व एव वैदिको विधिरवैधतां गच्छति। एषु दिवसेषु कल्याणाभिधेन हिन्दीमासिकपुस्तकेन भगवद्गीताया महल्लोकप्रियत्वं सम्पादितम्। धार्मिकैर्मारवाडीश्रेष्ठिभिर्हिन्दीभाषाटीकालङ्कृतानि परस्सहस्राणि पुस्तकानि मूल्यं विनैव वितीर्यन्ते। एतेन संस्कृतानभिज्ञे महति जनसमाजे गीतापाठस्य प्रचारः संवृत्तः। परं प्राथमिकव्याकरणानभिज्ञैः संस्कृतापरिचितैः क्रियमाणोऽशुद्धो गीतापाठः शृण्वतां हास्याय कोपाय च कल्पते। एतदपेक्षया संस्कृतानभिज्ञैर्यदि गीताया हिन्दीभाषायां केवलमनुवाद एव पठ्यते तर्हि वरम्। गीतायाः कथा दूरे आस्ताम्। रामाय रामभद्राय ... अयं श्लोकोऽपि शुद्धो न पठितुं शक्यते। एतादृशी दीनावस्था हिन्दुसमाजस्य दृश्यते। जीवन्त्या एव गीर्वाणवाण्या अन्त्राणीव छिद्यन्ते। हिन्दीभाषायां पाटवं संस्कृताभिज्ञैः सुखेनार्जयितुं शक्यते। पुरातनानि हिन्दीभाषायां निर्मितानि काव्यानि संस्कृताभिज्ञैरनायासेन स्वल्पेन वाऽऽयासेन बोद्धुं शक्यन्ते। तदनभिज्ञानां तदवगमे भूयानायासः। हिन्दीभाषायां पर्याप्तविहितश्रमा अपि विद्यार्थिनः बहुशः संस्कृतानभिज्ञतया परीक्षासु विफलप्रयत्ना दृश्यन्ते। हिन्दीभाषायां काठिन्यापादनाय आङ्ग्लभाषातः संस्कृताद्वा अनूदितानि पुस्तकानि परीक्ष्यपुस्तकेषु

+ प्रातिपदिकान्तनुम्विभक्तिषु चेति णत्वविकल्पः।



नियुज्यन्ते। अनुवादविधातुरकौशलात्तानि पुस्तकानि, दुरवगमानि भवन्ति। मूलतो यानि पुस्तकानि हिन्दीभाषायां लिखितानि, तानि तथा न दुरवगमानि भवन्ति, यथा इतरभाषातोऽनूदितानि। उदाहरणार्थं साहित्यदर्पणस्यैव कथा गृह्यताम्। हिन्दीभाषाया M. A. परीक्षायां हिन्दी-साहित्यदर्पणः परीक्ष्यत्वेन नियतः। स चानुवादः संस्कृतसाहित्यदर्पणस्य। तमवगन्तुमशक्ताः पण्डितानुपसरन्ति। पण्डितास्तु मौलिकस्य संस्कृतस्य साहित्यदर्पणस्याध्ययनमुपदिशन्ति। एवमन्ततो गत्वा मौलिके साहित्यदर्पणेऽधीतेऽनूदितः साहित्यदर्पणः सुखावगमो भवति। यदि पर्याप्तं संस्कृतज्ञानं सम्पाद्य मूलग्रन्था एवाऽधीयन्ते, तर्हि ईदृशानामनुवादानामावश्यकतैव नास्ति। आङ्गलभाषातोऽक्षरशोऽनूदिता ग्रन्था हिन्दीभाषायां सत्यमेव दुरवगमा भवन्ति। तदपेक्षया मूलग्रन्थाः भृशं सुखावगमाः। एवं कृत्रिमैः प्रकारैः प्राकृतभाषासु काठिन्यमुत्पाद्य तासां महत्त्वं वृद्धिं नीयते। वस्तुतो विचार्यमाणे न केवलं हिन्दीभाषायाः, अपि तु सर्वासामेव प्रान्तीयानां भाषाणां नैसर्गिकी वृद्धिः संस्कृतमेवाऽवलम्बते। हिन्दुजातिमात्रस्य संस्कृतेन सहाऽनादिकालक्रमागतः सम्बन्धः छेत्तुं सुतरामशक्यः। संस्कृतशब्दानां व्यवहारो हिन्दुजात्यै अपरिहार्यः। संस्कृतभाषायाः परिचयं विना तेषां शुद्धो व्यवहारोऽशक्यः। अतः हिन्दूबालकानां प्राथमिकशिक्षाक्रमे संस्कृतस्य स्वल्पोंऽशोऽवश्यं पाठ्यत्वेन विधेयः। एवं कृते केवलं संस्कृतस्यैव न, अपितु ततो लब्धजन्मनां प्रान्तीयानां भाषाणामपि अपशब्ददादूषितोद्धृतिर्भविष्यति। प्रान्तीयभाषाः अलङ्कारहीनाः, गीर्वाणवाण्यैव स्वकीया अलङ्कारास्ताभ्यो वितीर्यन्ते। यतः प्रान्तीया भाषा गीर्वाणवाण्या गृहीतजन्मानः। मातुर्गुणदोषावपि तासु दृश्यन्ते। एवं सत्यपि यदि ता भाषा मात्रा सह स्पर्धन्ते, तर्हि तासामकृतज्ञता स्फुटीभवति।

इदानीं प्रायः संस्कृतविद्यालयेषु काव्यसाहित्यमधीयानानां विद्यार्थिनां संख्या दर्शनादीनि शास्त्राण्यधीयानेभ्यो नितरां भूयसी विलोक्यते। भाषात्वेन रूपेण संस्कृते औचित्यादधिकाऽऽदृतिः, शास्त्रेषु च पूर्णा अनास्थेव दृश्यते। भारते संस्कृतविद्यालयानां सङ्ख्यायाः परिमिततया, आङ्गलविद्यालयानां च भूयस्तया, लब्धाचार्यपदवीकानां विदुषां तास्वेव नियुक्तिलाभस्याऽधिकसंभावनया, तत्र च शास्त्रज्ञानस्याऽनावश्यकतया, काव्यसाहित्ये व्युत्पत्त्याः पर्याप्तया तदध्ययने विद्यार्थिनामधिका प्रवृत्तिर्नैसर्गिकी। शास्त्राणामैहिक उपयोगो लुप्तप्राय एव। यद्ययमेव क्रमोऽप्रतिहतः प्रवर्तेत, तर्हि कियतापि कालेन प्राचीनपण्डितपरम्पराऽऽगततया शैल्या शास्त्राण्यध्यापयितुं प्रभूनां विदुषां संख्याऽतितरां तनिमानं भजिष्यते। तानि शास्त्राण्यपि कालान्तरेण नामशेषाणि भविष्यन्ति। अतः शास्त्राणा-

मध्ययनं प्रोत्साहनीयम् । संस्कृतविद्यालयेषु दर्शनादीनि शास्त्राणि अधीयानानां छात्राणां कृते विशिष्टाश्छात्रवृत्तयो निर्मेयाः। सविशेषं प्रतिभाशालिनो विद्यार्थिनोऽध्यापकैः शास्त्राणामध्ययने प्रोत्साहनीयाः । शास्त्राणामुत्तेजनाय विविधानि न्याय्यानि प्रलोभनानि देयानि । विद्यालयेष्वध्यापकानां नियुक्तिसमये शास्त्रिणि लभ्यमाने शास्त्रबाह्या नैव नियोक्तव्याः। एवं कृत्रिमैरुपायैः शास्त्राणां लोकप्रियत्वं सम्पाद्य तेषां विस्तृतिर्महति परिमाणे यथा भवेत्तथा विधातव्यम् । दर्शनशास्त्रं भारतीयानां पैतृकं रिक्थम् । पित्र्यस्य रिक्थस्य वृद्धिः सन्ततेर्बुद्धिमत्ताया द्योतकम् । यदि तस्योपचयोऽस्माभिरसुकरस्तर्हि अपचयोऽपि नाम न मर्षणीयः । भारतवर्षस्य पाश्चात्येषु देशेषु गौरवमपि दर्शनशास्त्रमूलकमेव । भारतीयाः पाश्चात्यां वर्धिष्णुमाधिभौतिकतामनीश्वरवादितां निरोद्धुं यदि कदाचित्प्रभवन्ति, तर्हि दर्शनशास्त्रैकसहाया एव प्रभवन्ति । अतोऽस्मिन्विषये पुरातनैः शास्त्रिभिः सविशेषमवहितैर्भवितव्यम् । साम्प्रतं भारतवर्षे धर्मो धर्म इति उच्चैराघोषः समन्ताच्छ्रूयते । स धर्मोऽपि ज्ञानमेवावलम्बते । ज्ञानं हि शास्त्राध्ययनाल्लभ्यते । दृष्टादृष्टोभयविधफलदायिषु शास्त्रेषु विद्यमानेषु केवलं दृष्टफले काव्यसाहित्ये श्रमो न प्रशस्यः ।

इदानीं संयुक्तप्रान्तीयशिक्षाविभागेन तत्प्रान्तीयसंस्कृतविद्यालयेषु कालानुसारमध्ययनविधेः संशोधनार्थं काचित्सभा निर्मितास्तीति श्रूयते । अस्मिन्विषये इतोऽधिकं किमपि नास्माकमवगतम् । अस्याः सभायाः सभासदानां नियुक्तिविषये पौरस्त्यविदुषामसन्तोषो न्याय्य एव । यतः काश्यामेव विख्यातेषु पौरस्त्यपण्डितेषु विद्यमानेषु पाश्चात्यविद्यापण्डितस्तस्याः सभाया अध्यक्षपदे नियुक्तः । अस्याध्यक्षस्य विद्वत्ताविषयेऽस्माकं न कोऽपि विवादः । परमनया नियुक्त्या पौरस्त्यविदुषां योऽधिकारघातः समजनि, तमुद्दिश्यास्माकमाक्षेपः । यद्यध्यक्षपदनियुक्त्यै आङ्ग्लभाषाज्ञानमप्यावश्यकमासीत्तदा महामहोपाध्यायपण्डितडा० गङ्गानाथझा एम्० ए० डी० लिट् तथा महामहोपाध्यायपण्डितगोपीनाथकविराज एम्० ए० महोदयसदृशाः पाश्चात्यपौरस्त्योभयविद्यापारदृश्वानो वर्तन्त एव । तेषु विद्यमानेषु इयमध्यक्षपदनियुक्तिर्नियोक्तॄणामगुणज्ञतां स्फुटीकरोति । एतेन वर्तमानाध्यक्षेण सहाऽस्माकं कोऽपि विरोध इति नाऽऽशङ्कनीयम्, प्रत्युताऽस्माकमादर एव । प्राच्यविद्याया उद्धृतये संशोधनात्मकं तस्या आलोचनं वर्तमानकालदेशानुसारमतीवाऽऽवश्यकम् । तत्किल पाश्चात्यविदुषां दृष्ट्याकर्षणार्थमवश्यकर्तृत्वेनाऽऽपतितम् । अन्यथा पुरातन्यध्ययनशैल्येव शास्त्राणां तत्त्वावगत्यै श्रेयसी आसीदस्ति च । पाश्चात्यसम्मताऽऽलोचनात्मिकाऽध्ययनपद्धतिः तत्तद्ग्रन्थकर्तॄणां ग्रन्थेभ्योऽध्येतृसिद्धा-

न्तसमर्थकानि प्रमाणान्युद्धृत्य ग्रन्थनिर्माणदेशकालादीनां प्रकाशनमन्तरेणान्यत्किमपि कर्तुं शक्येत्यत्र साऽशङ्कं मे मनः। ग्रन्थकर्तृणां देशकालादिज्ञानं संस्कृतवाङ्मयेतिहासस्य पोषाय कल्पतां नाम।

उदाहरणार्थं व्युत्पत्तिवादशक्तिवादादयो ग्रन्था गृह्यन्ताम्। आधुनिकीं संशोधनशैलीमवलम्ब्यैव तेषामालोचनं तन्निर्मातॄणां देशकालादिज्ञानाय प्रभविष्यति। किमेतावता ग्रन्थकारस्य ग्रन्थनिर्माणायासः साफल्यमेष्यति? ग्रन्थतत्त्वावगमो वाऽनेन भविष्यति? ग्रन्थतत्त्वावगतिं विना केवलं ग्रन्थकारस्य देशकालादिज्ञानेनैव कृतार्थम्मन्यता नारिकेलफलभक्षनाशक्तौ तस्य बाह्यभागस्पर्शानुभव एव तदास्वादनसुखानुभव इव भवति। ज्यौतिषशास्त्रे गणिते तथाऽऽयुर्वेदे च पाश्चात्यपद्धत्याऽध्ययनं तेषां संरलीभावाय कल्पयित्वा सातिशयफलदायि भवेत। परं शब्दशास्त्रे तथा दर्शनेषु तस्या अकिञ्चित्करत्वं सर्वसम्मतम्। प्राय एषु विषयेषु पाश्चात्यानां मतिः कुण्ठितगतिः। छित्रास्तत्रापवादात्मका भविष्यन्ति। अत्रोदाहरणत्वेनैको व्यतिकर उपन्यस्यते। प्रयागनगरे सङ्गतायां Oriental conferenceनाम्न्यां प्राच्यविद्यापरिषदि उत्तरामेरिकाद्वीपस्थyale विश्वविद्यालयस्य प्रतिनिधित्वेन प्रेषितेन तत्रत्यसंस्कृतविभागाध्यक्षेण महताऽर्थव्ययेन अमेरिकातो भारतवर्षमागत्य हितोपदेशस्य आलोचनपरः कश्चन निबन्धस्तत्र पठितः। तस्मिन्नेव प्रसङ्गे पूर्वोक्तेनैव विदुषा तस्मिन्नेव नगरे द्वादशवारं त्रयोदशवारं वा पृथक्पृथक्स्थलेषु सभाप्रसङ्गे व्याख्यानं दत्तम्। तेषु सर्वेष्वपि तेन हितोपदेशपञ्चतन्त्रातिरिक्तो विषयो विवेचित एव न। पाश्चात्यविदुषां प्राच्यविद्याविषयकं पाण्डित्यं प्रायः पल्लवग्राहि। हितोपदेशकथायां करटकदमनकाभिधशृगालद्वयस्य काचित्कथा वर्तते। अरबीभाषायां कलीलादमनाभिधमेकं पुस्तकं विद्यते। करटकदमनकशब्दयोः कलीलादमनशब्दाभ्यां महत्साम्यम्। तदेवालम्ब्य तेन विदुषा महान्निबन्धो लिखितः। कलीलादमनो हितोपदेशस्याथवा हितोपदेशः कलीलादमनस्य वाऽनुवादो भवतु। पक्षद्वयेऽपि नाऽस्माकं हानिलाभौ। हितोपदेशो हि अल्पवयसां संस्कृते प्रविविक्षूणां बालानां पाठ्यपुस्तकम्। तस्मिन्विषये एतावतो महतः शास्त्रार्थस्य काऽऽवश्यकता। कियता महताऽर्थव्ययेन कियदल्पीयः कार्यं सम्पादितम्। पर्वतं खनित्वा मूषिक इव समासादितः। पाश्चात्यानां भारतसम्बद्धेषु विषयेषु कियज्ज्ञानं वर्तते तद्दर्श्यते। आङ्ग्लद्वीपे प्रवसन् सर तेजबहादुरसप्रूमहोदय एकेनाङ्ग्लविदुषाऽनुयुक्तः—हिन्दवो रायबहादुरपदं यवनाश्च खानबहादुरपदं लभन्ते। भवाँस्तेजबहादुरः, ततो न हिन्दुर्न वा यवनः। भारते प्रामुख्येन हिन्दुयवनात्मकं जातिद्वयं वर्तते। यदि तयोर्द्वयोरपि भवतो नाऽन्तर्भावस्तर्हि कतमां जातिमलङ्करोति भवान्।

अयं व्यतिकरः सम्पूर्णमहोदयेन स्वयमेव उक्तः। पाश्चात्यरीत्याऽऽलोचनशैल्याः परिचायकोऽन्यो व्यतिकरो भवतां पुर उपस्थाप्यते। वाल्मीकिर्कविः शैशवे तथा यौवने व्याध आसीदेतत्सुविदितम्। व्याधधीवरयोर्भेदया-भक्ष्यविवेकाभावात्स्वल्पो भेद एतदपि सुविदितम्। वाल्मीकिनिर्मिते गङ्गास्तवे-[त्वत्तीरे तरुकोटरान्तरगतो गङ्गे विहङ्गो वरं त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः] अयं द्वितीयः श्लोकः। (शिष्टपरम्परागतोऽस्यायमर्थः-हेगङ्गे त्वत्तीरे पक्षी त्वन्नीरे मत्स्यः कच्छपो वा इतरत्रैश्वर्यस्य परां काष्ठामारूढस्य नरपतेरपेक्षया भाग्यशालीति। वाल्मीकेरप्ययमेवाभिप्रायः इत्यत्र नास्ति संशयलेशः। पाश्चात्यरीत्याऽधीतसंस्कृतेनैकेन विदुषास्य पद्यस्याधस्तनोऽर्थः सूचितः। स्वादूदके जातानां मत्स्यकच्छपादीनां तथा स्वादूदकसम्बद्धेन वायुना वीजितानां पक्षिणां च मांसोदकं क्षारोदके जातानां मत्स्यकच्छपादीनां तथा तत्सम्बद्धेन वायुना वीजितानां पक्षिणां च मांसापेक्षया मधुरतरं भवति। व्याधेन वाल्मीकिना अनुभूतमांसद्वयास्वादेनाऽवश्यं भवितव्यम्। स्वकीयेनानुभवेन तेन गाङ्गे स्वादूदके जाता मत्स्यकच्छपाः प्रशंसिताः। यतस्तेषां मांसं तस्मै बहुरोचिष्ट। पश्यन्तु भवन्त इमामालोचनवैदग्धीम्। (भगवद्गीतायां प्रथमेऽध्याये-दृष्ट्वा तु पाण्डवानीकं····· इत्येकः श्लोकः। अत्र पाण्डवानामनीकमिति समासः। अनीकशब्दश्च सेनार्थे उपयुक्तः। 'नीकम्' इति महाराष्ट्रीयक्षत्रियेषु एकं कुटुम्बनाम। नीकंवंशजेनैकेन विदुषा पाण्डवाः नीकं इति पदद्वयं कृत्वा नीकंवंशजाः क्षत्रिया महाभारतयुद्धेऽपि अयुध्यन्नित्यर्थो निष्कृष्टः। अयं वृत्तान्तः स्वर्गीयेण रावबहादुर चिन्तामणि-विनायकवैद्यमहोदयेन पत्रेषु प्रकाशितः। पाश्चात्यरीत्या शास्त्राणामध्ययनं मुरारिकवेरधस्तनं पद्यं स्मारयति-

'अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गंभीरतामापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः॥' पौरस्त्यशास्त्राणां सफलमध्ययनं पौरस्त्यरीत्यैव कर्तुं शक्यते नान्यथा।

संस्कृते एम्. ए. पदभाजां शास्त्रेषु कुण्ठितां गतिं विलोक्यैव स्वर्गीयेण कलकत्ता-विश्वविद्यालयस्य वाइस-चान्सलर सर आशुतोषमुखोपाध्यायमहोदयेन Dr. M. A. इत्यादिपदभूषितेषु सत्स्वपि बहुष्वध्यापकेषु, अनाघ्राताङ्गलभाषाः पौरस्त्यशास्त्रे कृतश्रमाः विद्वांसः कलिकाताविश्वविद्यालये नियुक्ताः। ढाका-विश्वविद्यालये च Dr. शहीदुल्लाभिधः कश्चिद्यवनजातीयो विद्वान् संस्कृतविभागाध्यक्षपदमलङ्करोत्येतदपि न तिरोहितं विद्वद्भ्यः। अस्य महानुभावस्य विद्वत्ताविषये नास्माकं कश्चन विवादः, परमुपर्युक्तविश्वविद्यालयद्वयेऽयं नियुक्तिभेदो गुणज्ञतामूल एतदपि न विस्मरणीयम्। ज्ञानप्राप्तिरेव विद्यार्जनस्य प्रथमेनोद्देश्येन भवितव्यम्। 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते'

इत्येषा भगवदुक्तिः। तस्य प्राप्तिमार्गस्तु 'तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति' इत्यपि तेनैवोक्तम्, 'योगः कर्मसु कौशलम्' इत्यपि तत्रैव दृश्यते। ज्ञानपदेन किं ग्राह्यमित्याकाङ्क्षा नवीनानां विद्यार्थिनां मनस्सु नैसर्गिकी। ज्ञानस्य लक्षणमपि श्रीमद्भगवद्गीतायां लभ्यमानं नाऽन्यत्राऽन्वेषणीयम्। तद्यथा—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।
विविक्तदेशसेवित्वमरतिर्जनसंसदि॥
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥

परं केवलं ज्ञानलाभेनोदरपूर्तेर्जटिला समस्या सरलीभावं न गच्छति। आदिभौतिके इदानीन्तने समये जीवनकलहे तीक्ष्णतायाः परां कोटिमारूढे यावती मानवसृष्टिः प्रथमं स्वकीयोदरपूर्तिमुद्दिश्य हस्तपादं सञ्चालयति। विद्याध्ययनमपि प्रायस्तदर्थमेव। केवलं ज्ञानलाभाय विद्याध्ययनं विरलम्। अधीतविद्याः उदरपूर्तेः साधनानि मानेनार्जयितुं यतन्ते। स विद्याध्ययनस्य स्वाभाविकः संस्कारः। आङ्ग्लभाषाया राजभाषात्वेन लौकिके व्यवहारे तस्या अपरिहार्यत्वेनोदरपूर्तिसाधनभूताया भृतेश्च सौलभ्यापादकत्वेन आङ्ग्लविद्याभ्यासे एव जनताया दैनन्दिनी प्रवृत्तिः। तदध्ययनं चाऽर्थसापेक्षम्। अत्यर्थं दुर्गतानां पुनः संस्कृतमेव शरणम्। प्राच्यविद्याविदुषां क्षेत्रमतीव सङ्कुचितम्। केवलं विद्याविभाग एव पण्डितानां परिमिता संख्याऽपेक्ष्यते। शासनविभागेष्वाङ्ग्लभाषाया एकातपत्रात्प्रभुत्वात् पण्डितानां च प्रायः आङ्ग्लभाषानभिज्ञत्वात्स देशस्तेषामगम्यः। विद्याविभागं विहायाऽन्यत्र पण्डितानामवकाशलाभस्याऽसंभवः। एवं गते स्वल्पं वा बहु वा यत्किमपि सादरमनादरेण वा प्राप्यते, तदेव ग्राह्यतामुपगच्छति। अन्यथा तावदप्यलभ्यं भवति। पौरस्त्यविद्याविदुषां केवलमाङ्ग्लभाषानभिज्ञताया महाननुचितो लाभोऽधिकारिभिर्गृह्यते। प्राच्यविद्यार्थिनां कार्यक्षेत्रस्येदृशेन सङ्कोचेनापि तेषामल्पमूल्यत्वे हेतुना भवितव्यमिति प्रतिभाति। अतस्तेषां क्षेत्रविस्तारविषये किञ्चिदालोचनीयम्।

एषु वत्सरेषु हिन्दीभाषायां साहित्यस्य बहुविधा विस्तृतिः जाता दृश्यते। दैनिकानि साप्ताहिकानि तथा मासिकानि अर्धवार्षिकाणि पुस्तकाणि वर्षाकाले कीटसन्ततिरिव प्रत्यहमाविर्भवन्ति। हिन्दीभाषायाः संस्कृतोत्पन्नत्वात् संस्कृते निष्णातानां हिन्दी-भाषायां प्रभुत्वसम्पादनमतीव सुकरम्। हिन्दीभाषायां शुद्धलेखनादिकं यथा संस्कृतज्ञानां सुकरं तथा इतरेषां नेति पूर्वमप्युपन्यस्तम्। अतः परिसमाप्तविधैः संस्कृत—

विद्यार्थिभिरेषु हिन्दीसाहित्यकार्यालयेषु नियुक्तिरन्वेषणीया । तत्र यशोलाभाय किञ्चित्कालपर्यन्तं हिन्दीभाषायां निबन्धलेखनाभ्यासादिकमावश्यकम् । तत्त्वतीव सुकरम् । यदि निखिलासु संस्कृतपरीक्षासु हिन्दीभाषायां निबन्धलेखनाद्यप्यपरिहार्यो परीक्ष्यविषयो भवेत्तदा त्वतीव समीचीनं स्यात् । अयं मार्गो विद्याविभागे क्षेत्रस्य सङ्कोचाद् घनीभूतेभ्यः संस्कृतविद्वद्भ्यः परीवाहमिव वितीर्य तान् विरलयिष्यति । तत्र तेषां मूल्यवृद्ध्यै तन्मूलकादरवृद्ध्यै च प्रभविष्यति । सर्वेभ्यः सुखोदर्कश्च भविष्यति । लोकव्यवहारे स्वातन्त्र्येण प्रभविष्णुतामर्जयितुं पर्याप्तमाङ्गलभाषोपयोगनैपुण्यमपि केवलमपरिहार्यम् । तदपि संस्कृतज्ञानां सुकरम् । संस्कृतस्यायमप्येको गुणो न विस्मर्तव्यः । संस्कृतज्ञाः आङ्गलभाषां तथा कामपि प्रान्तीयां भाषामस्खलितं तथा कटूच्चारणदोषरहितं व्यवहर्तुं प्रभवन्ति । परमाङ्गलभाषाविदग्धाः तथा प्रान्तीयभाषापण्डिताः संस्कृतं तथा व्यवहर्तुं न समर्थाः । आङ्गलभाषानैपुण्यं नापेक्षते संस्कृतज्ञानम् । भारतीयानामाङ्गलभाषायां प्रभुत्वविषये भूतपूर्वसम्राट्प्रतिनिधेः लार्ड्-कर्जनमहोदस्य निग्रहानिग्रहसमर्थाया लेखन्या निःसृता अधस्तनाः पङ्क्तयः श्रीमतां पुरत उपस्थाप्यन्ते ।

One of the most remarkable experiences in India is the astonishing command of the English language, to them a foreign tongue, that is acquired by the better educated Indians, enabling them not merely to write but to speak it with an accuracy and fluency at which I never ceased to wonder" (A viceroy's note book by Lord Curzon Page 50 )

पाश्चात्यविदुषां संस्कृतभाषोपयोगनैपुण्यविषये कस्यापि पौरस्त्यविदुष ईदृशी उक्तिः केषामपि न दृष्टिगोचरी न वा श्रुतिगोचरी ।

भारतवर्षे उच्चेषु पदेषु नियुज्यमाना आङ्गलदेशीयाः प्रायः I. C. S. परीक्षायामुत्तीर्णा भवन्ति । तस्यां परीक्षायां भारतीयासु भाषासु अन्यतमस्या ज्ञानमपरिहार्यः परीक्ष्यो विषयः । एकेनाङ्गलदेशीयेनाधिकारिणा I. C. S. परीक्षायां हिन्दी-भाषायामात्मनः पाटवं प्रदर्शितमासीत् । तत्सम्बद्धोऽयमधस्तनो लेखो हिन्दीभाषायां तस्य कौशलं प्रकटयति–

"That was the question, he was considering when his orderly Surju prasad gave him a chit from Dr. Cleghoru, "My dear Ironside, I am very sorry that I could not secure a nurse for baby. Ass's milk is equally good. See to the feeding, give her oats twice a day. I will see Mrs. Ironside to-morrow unless I am wanted meanwhile. Yours truly, Dr.... David Cleghoru. Col Ironside thought it would be very easy to get an ass as he saw dozens of them in the street सरजू-एक गधा मांगता, जो हुकुम, हम चलव जाता ।

तुम गधा अच्छा दाना दो। जो हुकुम replied the obedient orderly. When leaving for the club, Col.... Ironside told his wife it was all right, the baby would have ass's milk that very evening.

He jumped into his buggy and rode to his club. There he had a game of billiards and abused the natives. (After night fall he entered his banglow and called Sarju, जो हुकुम, गधा लाया ? हां, हुजूर, Col-Ironside took the hurricane lantern from the verandah and went to have a look at the animal. 'Why, it is a jack ass ? That Sarju ought to be flogged,' he shouted in a rage, हम गधा नहीं, मेम साहब गधा, you dam fool (I wanted not an ass like me, but a lady ass like my wife.) हम गरीब आदमी हुजूर कैसा बोले said the orderly. He had never dreamt of addressing a lady as a donkey. Besides she had always been kind to him. She allowed her husband's military orderly eight pence a month for perambulating her little child for an hour every evening when he was off duty as orderly. Col Ironside sent a chit to the Subedar of the regiment to reduce the rank of Sarjuprassad for insubordination. Sarju, rather thans ub-mit to the injustice left the Bengal infantry and went home to his village. The next day Col... Ironside sent for Hushmat Khan and told him, he wanted an ass for milk for baby. There was no difficulty, an ass was there in half an hour. This confirmed Col...... Ironside's conviction, that Sarju Prasad was an impudent fellow, who did not even know his own language. It did not occur to him that Hashmat Khan understood him because he refered to the milk for the baby. This was his belief for a good ten years when he repeated the incident to Mr. Harvey at Karimabad. The latter could not help smiling as he replied your orderly was not to blame. In Hindustani गधा means a jack ass and गधी means she-ass. That one letter makes all the difference "Confound the genders' exclaimed Ironside. The fellow ought to have known I did not want a donkey to ride. He knew well enough what meant Col...Ironsides ignorance of trifling distinction between a गधा and गधी, turned a loyal native soldier into a dissaffected subject of the king (A peep behind the Indian unrest by S. M. Mitra. Page 206.

संस्कृतविद्यार्थिनः प्रायो वक्तृत्वविकला भवन्ति। वक्तृत्वं किमपि वक्तव्यमपेक्ष्यते। तदभावो निसर्गेणैव मूकत्वे परिणमेत।

वक्तव्यविषयज्ञानसम्पादनाय, रामायणश्रीमद्भागवतमहाभारतादयो ग्रन्था वारेण नियतं पठनीयाः। न केवलं मूलमात्रमपि तु सार्थम्। श्रोतारो भवन्तु न वा। प्रथमं श्रोत्रभावेन निरुत्साहैर्न भवितव्यम्। यदि व्याख्यानं श्रोतॄनाकर्षयिष्यति, तर्हि पुराणश्रवणाभ्यासो वक्तृतायाः विकासाय प्रभविष्यति। परं केवलेन पुराणवाचनेनैव वक्तृतायां यशोलाभो दुष्करः। आधुनिकैः समवाप्तपाश्चात्यशिक्षैस्सह वक्तृकक्षामवगाहितुं वर्तमानदेशकालादिज्ञानमप्यत्यावश्यकम्। तदर्थं दैनिकानां वृत्तपत्राणामन्वीक्षणमपरिहार्यम्। उत्तरे भारते वर्षदशकात्पूर्वं विद्यार्थिषु वृत्तपत्रनिरीक्षणाभ्यासोऽतीव स्वल्प आसीत्। तन्निमित्तमेव समकक्षास्वधीयानेभ्यो दक्षिणभारतीयविद्यार्थिभ्य उत्तरभारतीयविद्यार्थिनो बहुष्वंशेषु हीनतरा आसन्। उत्तरभारतीयेष्वाङ्गलविद्यालयेषु स दोष इदानीं लुप्तः। परं संस्कृतपाठशालासु सैव दशाऽद्यापि वर्तते। अपवादात्मका द्वित्रा भवन्तु नाम। संस्कृतविद्यार्थिनां वृत्तपत्रनिरीक्षणे तथा प्रवृत्तिर्न दृश्यते यथाऽपेक्षिता। एष दोषो मानसिकदृष्टेर्विकासं रुणद्धि। संस्कृतविद्यालयसञ्चालकैरल्पेषु दिवसेषु यत्र तत्राऽस्य दोषस्य निरासाय यत्नो विधीयमानो दृश्यते। परं यावत्पर्यन्तं विद्यार्थिन आत्मनि गुणानाधाय बद्धपरिकरा न भवन्ति तावत्पर्यन्तं केवलं परेषां यत्नः कियत्साफल्यमेष्यति? सम्पादितवाक्पाटवैर्विद्यार्थिभिः प्रथमं प्रतिमासमवकाश सन्निहितेषु ग्रामेषु गत्वा ग्रामीणेषु पुराणकथाश्रवणरुचिरुत्पादनीया। एतद्द्वयोरपि श्रेयस्करं भविष्यति। अत्रत्यो ग्रामीणजनो रामायणमहाभारतसम्बद्धाभिर्जगद्विख्याताभिः कथाभिरपि अपरिचितो दृश्यते। कथाश्रवणेन साक्षराणां कथावाचनेऽपि रुचिरुदियात्। एवम्परम्परया साक्षरता तथा धर्माभिरुचिर्महति परिमाणे उत्तेजिता भवेत्। निरक्षरे वन्ये जनसमुदाये साम्प्रतं या धर्मविषये अज्ञानमूला उदासीनता दृश्यते साऽपि लोपमियात्। पुराणवाचकस्यापि स्वल्पो महान्वाऽऽर्थिको लाभोऽप्यवश्यमेव भवेत्। नैतिको लाभस्त्वस्त्येव।

केन्द्रशासनसम्बद्धे शिक्षाविभागे Oriental Language Teachers' Examination पौरस्त्यभाषाध्यापकानां परीक्षासम्बद्धः कोऽपि नियमो नवीन एव विहितोऽस्ति। यथाऽऽङ्गल-विद्यालयेषु L. T. पदधारिण एव नियुज्यन्ते तथा राजकीयेषु संस्कृतविद्यालयेष्वप्यचिरादेवाऽस्यां परीक्षायामुत्तीर्णा एव नियुक्तिं लप्स्यन्त इत्यनुमीयते। एतदर्थं संस्कृतविद्यार्थिभिः प्रथमत एव बद्धकक्षैर्भवितव्यम्।

पुरातने समयेऽस्य राजपुतानादेशस्य शान्त्या सह परिचितिः क्षणस्थायिन्येवाऽऽसीत्। प्रायोऽष्टादशशतकपर्यन्तमयं देशो रणक्षेत्रमासीदित्युक्ते अतिशयोक्तिर्न भवेत्। सयुक्तप्रान्ते वाराणसी, वङ्गदेशे नवद्वीपम्, महाराष्ट्रदेशे वाई, द्राविडदेशे कुम्भघोणम्,

काश्मीरदेशे श्रीनगरं यथा विद्यायाः प्रधानकेन्द्राणि विख्यातानि, तथाऽस्मिन् राजपुतानादेशे विद्याकेन्द्रं किमपि न प्रसिद्धम्। रणक्षेत्राणि तु बहूनि प्रसिद्धानि वर्तन्ते। जयपुरनगरारम्भमूलस्तम्भेन सुगृहीतनामधेयेन प्रातःस्मरणीयेन स्वर्गीयेण महाराजजयसिंहेनाऽऽसेतुहिमालयमासिन्धुब्रह्मपुत्रनदं भारतवर्षस्याऽखिलेभ्यः प्रान्तेभ्यः पण्डितान् सबहुमानमानीयाऽत्र विद्याया बीजावाप इव विहितः। तत ऊर्ध्वं प्रत्येकेन जयपुरनरेशेन विद्यावृद्ध्यै कयाऽपि विधया हस्तावलम्बो दत्तो दीयते च। इयं संस्कृतपाठशाला तेषामुदारताया मूर्तिमत्फलम्। विद्यावृद्ध्यै कर्तव्यक्षेत्रसीमा शासकैरासादिता एव। इतोऽधिकं तैरस्मिन्क्षेत्रे किमपि कर्तुं न शक्यते। यत इतोऽपि महत्तरा राज्यशासनविषयास्तेषामवधानमाकर्षन्ते। विद्यावृद्ध्यै अधिकस्यार्थस्यापेक्षा धनिभिर्वणिग्भिः पूरणीया भवति। उत्तरे भारते विशेषतोऽस्मिन् राजपुतानादेशे परःशताः कोट्यधीशास्तथा परःसहस्रा लक्षाधीशा विद्यमानाः श्रूयन्ते। तेषु बहुभिः स्वकीयेषु ग्रामेषु संस्कृतविद्यालयाः स्थापिताः श्रूयन्ते। याश्च दरिद्राणां मनोरथा इवोत्पद्यन्ते स्वल्पेनैव कालेन विलीयन्ते च। श्रेष्ठिगौरीशङ्करगोयनकामहोदयेन प्रतिष्ठापिता संस्कृतपाठशाला काश्यामुत्कर्षशालिनी। अपरा बिडलाश्रेष्ठिस्थापिता संस्कृतपाठशाला काश्यामपरश्चाङ्गलविद्यालयस्तस्य स्वकीये पिलानीग्रामे समृद्धिमन्तौ श्रूयेते। Dr. रासबिहारी घोष, तारकनाथपालितप्रभृतिभिः कालिकातानगरवास्तव्यैर्धनिभिर्निजश्रमार्जितमनल्पं धनं कलिकाताविश्वविद्यालयाय वितीर्य निजनाम्नोऽमरता सम्पादिता।

द्राविडदेशीयेन अन्नामलैनाम्ना श्रेष्ठिनेतरसहायानपेक्षिणैको विश्वविद्यालयः स्थापितः, यः किल चिदम्बरक्षेत्रे अन्नामलैविश्वविद्यालयनाम्ना विलसति। स च भारतसाम्राज्येनाऽपि प्रत्यभिज्ञातः। अत्र जयपुरनगरेऽपि दादूमहाविद्यालयः, खण्डेलविप्रविद्यालयः, जैनविद्यालयः, पारीकविद्यालयश्चैवमादयो विद्यालया उदारमनस्कैर्नागरिकैर्वितीर्यमाणेनाऽर्थसाहाय्येन सञ्चाल्यन्ते। एतदत्रत्यानां परमप्रमोदास्पदं मानावहं च। परं संस्कृतस्योन्नत्यै एतावन्न पर्याप्तम्। अत्रत्यैर्धनिभिः कुटुम्बे परिणयमरणावसरेषु क्रियमाणमनल्पमर्थव्ययं रुद्ध्वा स एवाऽर्थो यदि विद्यावृद्धिकार्ये विनियुज्येत, तदाऽनन्तं श्रेयः सम्पादितं स्यात्। छात्रवृत्तिवितरणं, विशिष्टाध्यापकनियुक्तिः, सौवर्णराजतपदकादिदानं, विद्यावृद्धेरन्यतमे प्रकाराः। अत्रत्यायां संस्कृतपाठशालायामेषु वर्षेषु विद्यार्थिनां सङ्ख्यायाः क्रमिका वृद्धिरिति एतद्विद्यालयाध्यक्षमहोदयानां महानानन्दः। परं किम्मूलेयं वृद्धिरिति किञ्चिद्विचारणीम्।

परिणीता विद्यार्थिनः शिक्षाविभागेन प्रत्यभिज्ञातेभ्यो विद्यालयेभ्यो हाई-स्कूल-

परीक्षायां प्रवेशं न लप्स्यन्त इत्यात्मकः कोऽपि नियमो राजपुताना-सेन्ट्रल-इण्डिया-बोर्डेन विहितोऽस्तीति श्रूयते । साधारणो विद्यार्थी षोडशे वर्षे प्रवेशपरीक्षां दातुं प्रभवति । अत्रत्यश्च जनः अपरिणीतां स्वसन्ततेः शैशवापक्रान्ति द्रष्टुं न समर्थः । विवाहात्पूर्वं विद्यार्थिनः आङ्ग्लविद्यालयेषु प्रवेश-परीक्षाकक्षामपि गाहितुं न शक्नुवन्ति । स्फुटीभूतपरिणयवृत्तान्ताश्चाऽऽङ्ग्लविद्या-लयेभ्यो निष्कास्यन्ते, गृहेष्वधीत्य प्रवेश-परीक्षायाममोघप्रयत्ना विरलाः । केषाञ्चि-त्तावद् धनसामर्थ्यं केषाञ्चिच्च बुद्धिसामर्थ्यं नास्ति । आङ्ग्लविद्यालयेभ्यो निष्कासिता निष्कासनभीता वा विद्यार्थिनः संस्कृतवि-द्यालये संख्यावृद्ध्यै कारणत्वमुपयान्ति । ईदृशानां विद्यार्थिनां पितरौ निजशिशूनुत्प-थगमनादवरोद्धुं तथा यावच्छक्यं साक्षरत्वं सम्पादयितुं संस्कृतपाठशालायां निदधति । वस्तुतोऽध्ययनविषये तेषां लेशतोऽपि अभि-निवेशो न भवति । बोर्डसदृशे विवाहप्रति-कूले नियमेऽत्रापि सम्वृत्तेऽस्मन्माननीया एतद्विद्यालयाध्यक्षमहोदयाश्छात्राणां संख्यां पश्यन्तु । यद्येतादृशो नियमोऽत्रापि क्रियेत तर्हि संस्कृतविद्यार्थिनां संख्यैव तनुतामेष्यति । बालविवाहप्रतिबन्धस्तु तदाऽपि न भविता । यदि विद्याभ्यासविवाहयोरन्यतरः पक्षो ग्राह्यत्वेनात्रत्यहिन्दुसमाजस्य पुरतो निधी-येत, तर्हि विवाह एव ग्राह्यत्वमेष्यति न विद्याभ्यासः । बाल्यविवाहेन राष्ट्रब-लमनल्पे परिमाणे क्षीयते । अस्मिन्वि-

षयेऽत्रत्या अधिकारिणोऽप्युदासीना दृश्यन्ते । पुरुषाणां बालविवाहप्रतिबन्धकं कमपि नि-यमं विधातुमत्रत्या अधिकारिण उपस्थातव्या इत्येतद्विद्यालयाध्यक्षमहोदया मया सविनय-मभ्यर्थ्यन्ते । पुरुषाणां बाल्यविवाहप्रति-बन्धके नियमे विधीयमाने धर्मसम्बद्धेषु विषयेषु राजकीयहस्तक्षेपशङ्काऽपि नोदेति ।

विद्यार्थिन आङ्ग्लभाषामधीयतामुत सं-स्कृतं वा, पक्षद्वयेऽपि विद्यार्थिजीवनस्य सा-फल्यं ब्रह्मचर्यावलम्बि । परीक्षासु विद्यार्थिनो बहुशो मोघप्रयत्ना दृश्यन्ते । तत्र बहुनांऽशेन ब्रह्मचर्याभावेन हेतुना भवितव्यम् । विद्या-र्थिदशायां ब्रह्मचर्यक्षतिरेकैव जीवनवैफल्या-यालम् । कुटुम्बभरणचिन्ता, सन्तानोपला-लनादिक्लेशैरनुगता चेतसा किमु वक्तव्यम् । अत्र विद्यार्थिनां पितरावेव तेषामहिताय प्रभवतः । विशेषतोऽत्र राजपुतानादेशीयः स्वसन्ततेः परिणयमेव तस्याः प्रत्यात्मनो मुख्यं कर्तव्यं मन्यते । परिणेयायां व्यक्तौ गार्हस्थ्ययोग्यता कुटुम्बपोषणभारवहनक्षम-ताऽस्ति नास्ति वेत्यात्मको विचारः पित्रोर्म-नोऽपि न स्पृशति । तादृशयोग्यताभावे तस्याः सम्पादनाय प्रयत्नस्तु दूरापास्तः । शारीरिक-बलविषयेऽपि तावत्येवोदासीनता दृश्यते यावति मानसिकबलविषये ।

यूरोपदेशेऽतीते महायुद्धे पुरुषाणामप-रिमिता क्षतिर्जाता । मनुष्यसंख्याया वृद्धि-मपेक्षमाणैः 'इटली' आदिदेशशासकैर्विवि-धैरुपायैर्विवाहाय प्रोत्साहनं वितीर्णं विती-

र्यते च। विवाहेच्छवे दरिद्राय युवजनायाऽऽर्थिकं साहाय्यमपि दीयते। नीरोगाञ्छिशूनुत्पादयितृभ्यः स्त्रीपुरुषेभ्यः पुरस्काराणि च वितीर्यन्ते। शिशूनां भरणे पोषणे चाऽसमर्थेभ्यो मातापितृभ्यस्तदर्थमप्यर्थसाहाय्यं दीयते। संक्षेपतो वक्तव्ये प्रजोत्पादनं तत्र राष्ट्रानुग्रहरूपेण गण्यते। विशेषतः पुरुषप्रजोत्पादनं तु सत्यमेव राष्ट्रानुग्रहः। अत्रत्यबालविवाहप्रथानभिज्ञः दाक्षिणात्यः कश्चिद्वैवाहिके ऋतौ यद्यत्राऽऽयाति, तर्हि वरयात्रासु संख्यातीतान्बालान्वरान् विलोक्य 'इटलीदेशसदृशो विवाहप्रोत्साहकः कोऽपि राजकीयो नियमोऽत्राऽपि वर्तत इति' चिन्तयेत्। दारिद्र्यपीडितेऽस्मिन्देशे बहुभिर्जीवनपर्याप्तमन्नं न लभ्यते। तत्रैव पुनरनावश्यकप्रजोत्पादनेन दारिद्र्यपङ्के मग्नाः सीदन्ति। बालविवाहस्यापि सबलं कारणमत्र दृश्यते। अस्मिन्देशे प्रायो गृहस्थ एव ब्राह्मणो देवकार्यपितृकार्ययोर्भोजनार्थं प्रतिग्रहार्थं चाऽऽहूयते। यजमानः कुमारं ब्राह्मणं न वाञ्छति। ब्राह्मणाः प्रायो दरिद्रा भवन्त्येव। बहुकालपर्यन्तं विवाहाकरणे उपरिनिर्दिष्ट आयो न भविता। अतः केवलं कौमारदोषापनयनार्थमायवृध्यर्थं च ब्राह्मणबालकाः परिणीयन्ते। एतन्मूलैवाऽस्मिन्देशे कन्यानां बहुमूल्यता।

भारतवर्षे प्रायः सर्वत्र वराणां बहुमूल्यत्वम्। तद्विरुद्धमत्र वधूनां महर्घतायां तासां प्रमाणातीतायाः प्रार्थनाया एव हेतुत्वमवगम्यते। यदि नागरिकैर्दैवे पित्र्ये कार्ये कुमारा न परिह्रियन्ते तर्हि ब्राह्मणेषु बालविवाहपद्धतिः किमपि शैथिल्यमेष्यतीत्याशास्यते। अतो यदि विद्यार्थिभिर्विद्यार्जने साफल्यमाकांक्ष्यते तर्हि असमाप्तविद्यैर्विवाहायानुमतिरेव न देया। तत्र यदि पितृभ्यां विरोधसंभावना, साऽपि मर्षणीया। एवमार्थिका गार्हस्थ्यसम्बद्धास्तथा शिक्षासम्बद्धाः विषयाः परस्परं स्यूता इव। यावत्पर्यन्तमेको विशकलितो न भवति, तावदपरस्य विशकलनसंभावना दुर्वारैव। 'सर्वारम्भास्तण्डुलप्रस्थमूलाः' इतिन्यायेन सर्वे आरम्भा द्रव्यमूलाः। विद्यार्जनाय च द्रव्यमावश्यकम्। अधीतविद्यैरपि द्रव्यार्जनायाऽपरिमितः प्रयत्नो विधीयते। तत्र दैवात्केचिद्यशस्विनो भवन्ति। सम्पदो द्वैविध्यं हि भगवद्गीतायां वैशद्येन प्रतिपादितम्। तद्यथा—

अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीमभिजातस्य भारत॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्॥
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता॥

अत्र सम्पद्द्वये कतरा ग्राह्या कतरा च हेया, तत्सर्वेषां सुविदितम्। अतो गृहीतागमैर्ब्राह्मणैर्दैव्याः सम्पदोऽर्जने सततं जागरूकैर्भवितव्यम्। अनल्पे प्रमाणे धनस्याऽर्जनमुख्यवेतनवति पदे नियुक्तिर्ब्राह्मणविदुषां

मोदावहं भवतु नाम । परं स खलु राजसः प्रमोदः । दारिद्र्यं पाण्डित्यस्य ब्राह्मण्यस्य च भूषणावहम् । अस्मिन्विषय एकस्याऽऽङ्ग्लविदुष उक्तिर्मननीया—

"To give our men of letters stipends endowments and all furtherevence of cash will do little towards the business. On the whole one is weary of hearing about the omnipotence of money. I will say rather, that for a geuine man it is no evil to be poor, that there ought to be literary man poor to show whether they are genuine or not? Mendicant ardess bodies of good men doomed to beg where instituted in Christian church a most natural & even neccessary development of the spirit of Christianity. It was itself founded on poverty, on sorrow, contradiction, crucifixion, every species of wordly distress and degredation. We may say that he, who has not known those things and learnt from them the priceless lessons they have to teach, has missed a good opportunity of schooling. To beg and go bare footed in coarse woolen cloak with a rope round your lions and be despised of all the world, was no beautiful business, nor an honourable one in any eye, till the noblemen of those who did so had made it honoured of some." (Hero- and Hero-worship Carlyle Lecture 5th. Page 154)

परं दारिद्र्यं कियदपि स्तुतं कृच्छ्रेणैव स्पृहणीयतामेति । दारिद्र्यस्याऽनेके गुणाः सन्तु नाम, तथाऽपि कोऽपि तस्मै न स्पृहयति । अतोऽधीतविद्यैर्गुणार्जनाय यत्नो विधेयः । कस्मिन्नपि शास्त्रे कस्यामपि कलायां वा वैशिष्ट्यमावश्यकम् । तेन विना यशोलाभो धनावाप्तिश्चाऽसुकरः । अस्मिन्नपि विषये एकस्याऽऽङ्ग्लविदुष उक्तिर्मननीया—

'There is a Russian proverb which says that misfortune is next door to stupidity and will generally be found that men, who are constantly lamenting their ill luck are only reaping the cousequences of their own neglect mismanagements improvidence or want of application. Dr. Jhonson, who came upto London with a single guinea in pocket and who once accurately described himself in his signature to a letter addressed to a noble Lord as ( ........ ) or dinnerless has honestly said 'All the complaints which are made of the world are unjust. I never knew a man of merit neglected, it was generally by his own fault that he failed of success. (Smiles)'

संस्कृतविद्यार्थिषु दैष्टिकता तथा दैवावलम्बता ग्रामीणजनसाधारणी विलोक्यते । बुद्धिबलयोर्लाभाय तथा विकासाय बहुभिर्विद्यार्थिभिर्हनूमानाराध्यते । यदि ब्रह्मचर्यं

र्यंते च। विवाहेच्छवे दरिद्राय युवजनायाऽऽर्थिकं साहाय्यमपि दीयते। नीरोगाब्छिशूनुत्पादयितृभ्यः स्त्रीपुरुषेभ्यः पुरस्काराणि च वितीर्यन्ते। शिशूनां भरणे पोषणे चाऽसमर्थेभ्यो मातापितृभ्यस्तदर्थमप्यर्थसाहाय्यं दीयते। संक्षेपतो वक्तव्ये प्रजोत्पादनं तत्र राष्ट्रानुग्रहरूपेण गण्यते। विशेषतः पुरुषप्रजोत्पादनं तु सत्यमेव राष्ट्रानुग्रहः। अत्रत्यबालविवाहप्रथानभिज्ञः दाक्षिणात्यः कश्चिद्वैवाहिके ऋतौ यद्यत्राऽऽयाति, तर्हि वरयात्रासु संख्यातीतान्बालान्वरान् विलोक्य 'इटलीदेशसदृशो विवाहप्रोत्साहकः कोऽपि राजकीयो नियमोऽत्राऽपि वर्तत इति' चिन्तयेत्। दारिद्र्यपीडितेऽस्मिन्देशे बहुभिर्जीवनपर्याप्तमन्नं न लभ्यते। तत्रैव पुनरनावश्यकप्रजोत्पादनेन दारिद्र्यपङ्के मग्नाः सीदन्ति। बालविवाहस्यापि सबलं कारणमत्र दृश्यते। अस्मिन्देशे प्रायो गृहस्थ एव ब्राह्मणो देवकार्यपितृकार्ययोर्भोजनार्थं प्रतिग्रहार्थं चाऽऽहूयते। यजमानः कुमारं ब्राह्मणं न वाञ्छति। ब्राह्मणाः प्रायो दरिद्रा भवन्त्येव। बहुकालपर्यन्तं विवाहाकरणे उपरिनिर्दिष्ट आयो न भविता। अतः केवलं कौमारदोषापनयनार्थमायवृध्यर्थं च ब्राह्मणबालकाः परिणीयन्ते। एतन्मूलैवाऽस्मिन्देशे कन्यानां बहुमूल्यता।

भारतवर्षे प्रायः सर्वत्र वराणां बहुमूल्यत्वम्। तद्विरुद्धमत्र वधूनां महर्घतायां तासां प्रमाणातीतायाः प्रार्थनाया एव हेतुत्वमवगम्यते। यदि नागरिकैर्दैवे पित्र्ये कार्ये कुमारा न परिह्रियन्ते तर्हि ब्राह्मणेषु बालविवाहपद्धतिः किमपि शैथिल्यमेष्यतीत्याशास्यते। अतो यदि विद्यार्थिभिर्विद्यार्जने साफल्यमाकांक्ष्यते तर्हि असमाप्तविद्यैर्विवाहायानुमतिरेव न देया। तत्र यदि पितृभ्यां विरोधसंभावना, साऽपि मर्षणीया। एवमार्थिका गार्हस्थ्यसम्बद्धास्तथा शिक्षासम्बद्धाः विषयाः परस्परं स्यूता इव। यावत्पर्यन्तमेको विशकलितो न भवति, तावदपरस्य विशकलनसंभावना दुर्वारैव। 'सर्वारम्भास्तण्डुलप्रस्थमूलाः' इतिन्यायेन सर्वे आरम्भा द्रव्यमूलाः। विद्यार्जनाय च द्रव्यमावश्यकम्। अधीतविद्यैरपि द्रव्यार्जनायाऽपरिमितः प्रयत्नो विधीयते। तत्र दैवात्केचिद्यशस्विनो भवन्ति। सम्पदो द्वैविध्यं हि भगवद्गीतायां वैशद्येन प्रतिपादितम्। तद्यथा—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीमभिजातस्य भारत॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्॥
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता॥

अत्र सम्पद्द्वये कतरा ग्राह्या कतरा च हेया, तत्सर्वेषां सुविदितम्। अतो गृहीतागमैर्ब्राह्मणैर्दैव्याः सम्पदोऽर्जने सततं जागरूकैर्भवितव्यम्। अनल्पे प्रमाणे धनस्याऽर्जनमुच्चवेतनवति पदे नियुक्तिर्ब्राह्मणविदुषां

मोदावहं भवतु नाम । परं स खलु राजसः प्रमोदः । दारिद्र्यं पाण्डित्यस्य ब्राह्मण्यस्य च भूषणावहम् । अस्मिन्विषय एकस्याऽऽङ्ग्लविदुष उक्तिर्मननीया—

"To give our men of letters stipends endowments and all furtherevence of cash will do little towards the business. On the whole one is weary of hearing about the omnipotence of money. I will say rather, that for a geuine man it is no evil to be poor, that there ought to be literary man poor to show whether they are genuine or not ? Mendicant ardess bodies of good men doomed to beg where instituted in Christian church a most natural & even neccessary development of the spirit of Christianity. It was itself founded on poverty, on sorrow, contradiction, crucifixion, every species of wordly distress and degredation. We may say that he, who has not known those things and learnt from them the priceless lessons they have to teach, has missed a good opportunity of schooling. To beg and go bare footed in coarse woolen cloak with a rope round your lions and be despised of all the world, was no beautiful business, nor an honourable one in any eye, till the noblemen of those who did so had made it honoured of some." (Hero-and Hero-worship Carlyle Lecture 5th. Page 154)

परं दारिद्र्यं कियदपि स्तुतं कृच्छ्रेणैव स्पृहणीयतामेति । दारिद्र्यस्याऽनेके गुणाः सन्तु नाम, तथाऽपि कोऽपि तस्मै न स्पृहयति । अतोऽधीतविद्यैर्गुणार्जनाय यत्नो विधेयः । कस्मिन्नपि शास्त्रे कस्यामपि कलायां वा वैशिष्ट्यमावश्यकम् । तेन विना यशोलाभो धनावाप्तिश्चाऽसुकरः । अस्मिन्नपि विषये एकस्याऽऽङ्ग्लविदुष उक्तिर्मननीया—

'There is a Russian proverb which says that misfortune is next door to stupidity and will generally be found that men, who are constantly lamenting their ill luck are only reaping the cousequences of their own neglect mismanagements improvidence or want of application. Dr. Jhonson, who came upto London with a single guinea in pocket and who once accurately described himself in his signature to a letter addressed to a noble Lord as ( ........ ) or dinnerless has honestly said. 'All the complaints which are made of the world are unjust. I never knew a man of merit neglected, it was generally by his own fault that he failed of success. (Smiles)'

संस्कृतविद्यार्थिषु दैष्टिकता तथा दैवावलम्बता ग्रामीणजनसाधारणी विलोक्यते । बुद्धिबलयोर्लाभाय तथा विकासाय बहुभिर्विद्यार्थिभिर्हनूमानाराध्यते । यदि ब्रह्मचर्यं

रक्ष्यते, व्यायामो विधीयते, प्राकृतिका नियमाः पाल्यन्ते, स्वास्थ्यविधातका आहारविहारादयो वर्ज्यन्ते, तर्हि हनूमदाराधनं विनाऽपि शारीरिकमानसिकबलयोर्वृद्धिर्भवति, परं पौगण्डावस्थायामेव बहुशः खण्डितब्रह्मचर्यैर्व्यायामानभिज्ञैः प्रतिपदं प्रकृतिनियमानुल्लङ्घयद्भिर्यद्यामरणं हनूमानाराध्यते, तदापि दृष्टफलप्राप्तिराकाशपुष्पसदृशी । ईदृशानां सेवया देवताऽपि न प्रसीदति । यतो हनूमान् ब्रह्मचर्येण यथा तुष्यति, तथा नेतरैर्बाह्यैः साधनैः । चिरकालपर्यन्तमाराधनयाऽपि दृष्टफललाभाभावः सेवकानां मनसि देवतानामनस्तित्वशङ्कां जनयति अस्मिन् विषये माघकवेरधस्तनं पद्यं स्मरणीयम्-

> नाऽऽलम्बते दैष्टिकतां न निषीदति पौरुषे ।
> शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥

प्रसङ्गापतित एको व्यतिकरोऽत्र निवेद्यते । ऋणभारपीडितायैकस्मै अत्रत्याय ग्रामाधिपतये तस्य हितेच्छुना केनचिन्मङ्गलग्रहाराधनमुपदिष्टम् । ग्रामाधिपतिना महति ताम्रपट्टे मङ्गलग्रहचक्रम् उल्लेखितम् । ताम्रमयानि पूजोपकरणानि निर्मितानि । मङ्गलमन्त्रजपायैको ब्राह्मणो नियुक्तः । विविधः पूजासंभारश्च प्रतिमङ्गलवारमपेक्ष्यते । अत्र समष्टिरूपेण व्ययस्य वृद्धिरेव जाता, आयस्तु दूरापास्तः । वर्षावसाने यदा तेन स्वकीयावायव्ययौ समालोचितौ, तदा ऋणस्य वृद्धिर्दृष्टा, न क्षयः । प्रयत्नेन किमपि कार्यं सिध्यति, केवलं देवाराधनया दैवावलम्बनेन वा न । अतो विद्यार्थिभिः शारीरिकमानसिकोभयविधबलवृध्द्यै यत्नोऽवश्यं विधेयः । देवाराधना स्वेच्छया विधीयताम् ।

भारते वर्षे स्त्रीणां कृते आङ्ग्लविद्यालयाः परःशता वर्तन्ते, परं संस्कृतविद्यालयस्य कथा विरला । पुण्यपत्तने कर्वेमहोदयेन स्त्रीणां कृते एको विश्वविद्यालय उद्घाटितः । तत्र विद्यार्थिनीभिर्मातृभाषायां विद्याभ्यासो विधीयते, परं यतः संस्कृतं कासामपि मातृभाषा नास्ति, तस्मै तत्रापि तदेव गौणं पदं वितीर्यते यदाङ्ग्लविद्यालयेषु तत्कृतेऽस्ति । गुरुकुलकांगडीविद्यालये च हिन्दीभाषैव प्रधानीभूता, तत्रापि संस्कृतस्य गौणमेव पदम् । हैदराबादस्थ-उस्मानिया-विश्वविद्यालये किं पृच्छ्यते, तत्र उर्दूभाषायाः प्राधान्यं निसर्गसिद्धम् । संस्कृतेन तत्र यदि गौणं पदमपि लभ्यते तर्हि महते सौभाग्याय । स्त्रीषु संस्कृतप्रचाराय जालन्धरनगरस्थार्यसमाजीयकन्यामहाविद्यालयेन तत्रत्यासु सर्वासु परीक्षासु संस्कृतमपरिहार्यं विधाय तस्योन्नत्यै भूयान्हस्तावलम्बो वितीर्णः । अनया कृत्या तेन विद्यालयेन संस्कृतानुरागिजगन्महदुपकृतम् । एतदर्थं स विद्यालयः धर्मनिर्विशेषतया भारतीयानां धन्यवादास्पदम् । उदरपूर्तिकृते धनार्जनाय पुरुषेभ्य आङ्ग्लविद्याभ्यासोऽपरिहार्यो भवतु नाम । परं स्त्रीणां विषये तथा वक्तुं न शक्यते । भारतीये जीवने धर्मस्य भूयानंशोऽनुस्यूत इव ।

प्रायो भारतीयायाः स्त्रीजातेर्निसर्गेणैव धर्माभिमुखी प्रवृत्तिः । तासामज्ञानेन धर्मस्य वास्तविकं स्वरूपं ताभिर्न ज्ञायते, तेन हेतुना न केवलं तासामेव, न च केवलं वर्तमानस्य भारतीयस्य पुरुषजातेरपि तु भाविनः स्त्रीपुरुषजातिद्वयस्यापि महती हानिर्भवति, भविष्यति च । संस्कृतप्रवेशेन स्त्रीणां धर्मानपेक्षाया उन्नतेर्महती आशंसा वर्तते । तेन धर्मविषये तासामन्धविश्वासोऽपि लयमेष्यति । अतः प्रान्तीयराजधानीषु तथा सामन्तराज्येष्वपि स्त्रीणां कृते संस्कृतविद्यालयस्याऽत्यन्तमावश्यकता वर्तते ।

परीक्षोत्तीर्णताद्योतकं प्रमाणपत्रं गृहीत्वा विद्यार्थिभिरद्य विद्याध्ययनमवसितमिति न मन्तव्यम् । वस्तुतो विचार्यमाणेऽद्यप्रभृति भवतामध्ययनस्यारम्भो जातः । कर्तव्यक्षेत्र इदानीं विद्यार्थिभिः पदार्पणं क्रियते । एतावत्कालपर्यन्तं विद्यार्थिनां मार्गदर्शनभारस्तेषां पालकैस्तथाऽध्यापकैश्च निर्व्यूढः । इतः प्रभृति विद्यार्थिनः स्वकीयभारवहनाय बाध्याः सन्त्येव, परमितरेषां मार्गदर्शनभारस्तेषामुपर्यापतितः । अतस्तैरतीवावहितैर्जागरूकैश्च भवितव्यम् । विशेषोपदेशस्तु श्रीमद्भिः संस्कृतविद्यालयाध्यक्षमहोदयैर्विद्यार्थिभ्यो वितीर्ण एव । तस्मिन्विषयेऽधिकविवेचनमनावश्यकम् ।

---

# भारतं च संस्कृतशिक्षा च ।

## ( १ )

"हन्त मे मुधैव जन्म व्यतिगतम् । किमिव मया स्वकर्तव्यमनुशीलितं नाम ? गतानुगतिकस्याऽस्य लोकस्य निमीलितलोचनं पदाङ्काननुसरता मया यद्यप्यधिगता वैदेशिकी भाषा, आसादिता चाऽप्युच्चतमा पदवी, उपपादितं चाप्यर्थसंस्थानम् , परं भारतीयानामार्याणां नाममुद्रावाहिना मया किमिव तदनुकूलं गौरवमधिगतम्? यद्यप्युच्चतमशिक्षापर्यन्तमुपभाषारूपेण समधिगता संस्कृतभाषा, हार्दिकानुरागवशाज्जातापि यथेष्टं भाषाव्युत्पत्तिः, भाषान्तरीयप्रौढिबलेन यथालाभं पठितानि तद्विषयकाणि पुस्तकानि, परं किं तावतापि संपन्नम् ?

या ह्यार्यसभ्यता पारेसमुद्रमधिवसद्भिर्वैदेशिकैरपि निष्पक्षपातैर्विद्वद्भिः सर्वतः पुरातनी लोकहितकारिणी चेत्यभिश्लाघिता, तत्संबन्धे कियन्मे परिज्ञानम् ? या ह्युपनिषदो दिव्यमिदं ज्ञानमिति पाश्चात्त्यदेशीयैरपि शतमुखमभिनन्दिताः, किं मया वस्तुतस्तासां तत्त्वमधिगतम्? वेद इति कोऽपि सर्वतः प्रथमोयं मानवेषु ज्ञानावतार इति विधर्मिभिः सुदूरदेशीयैरप्यङ्गीकृतम्, कियान्वा परिचयो मे तस्य? भारतवर्षीयेभ्यो यां विद्यामधिगन्तुं चीनदेशीया यात्रिणः पुरा प्रवासक्लेशान् भृशमसहन्त, हन्त भारतीयेनापि सता मया सा कियदनुशीलिता ? भौतिकविज्ञाने परां कोटिमुन्नतेरधिगतवतामन्यान्यराष्ट्राणां सं-

मुखे यस्य हि ज्ञानगौरवस्य बलेन साम्प्रतमपि गर्वेण मस्तकमुन्नमयितुमिच्छामः, किमासादितं मया तस्य ?

अस्तु, किमधुना केवलेनाऽनुतापेन ? स्वदेशं गत्वा साम्प्रतमप्यभीष्टं ज्ञाननिधिमर्जयिष्यामीति निश्चित्य, गृहप्रबन्धं विधाय, निजनिवासाद्बहिरभवम्। दक्षिणाऽफ्रिकादेशो दूरतमो भारतवर्षात्। उपार्जनप्रसङ्गेन परिभ्राम्यन् मे पिता सहाऽन्यैर्भारतवर्षीयैः प्राप्तवानिमं देशम्। उर्वरतमोऽप्ययं देशः पुरा स्वल्पैरेव मानवैरधिष्ठितोऽभूत्। अत एव सुप्रसन्नभागधेयमिमं स्वल्पेनैव कालेन वसुभिरपूरयद्वसुमती।

इहैव मे जन्म। अत्रैव विद्याऽध्ययनम्। इहैव सर्वापि संपत्तिरिति कृत्वा भूयांसमिव मनसि तत्परित्यागक्लेशमन्वभवम्। परमुच्चां भावनां हृदि निधाय प्रस्थितोऽभूवं भारतवर्षाय। मार्गमुल्लंघयतो मे मनसि समुदतिष्ठन्नानाविचारतरङ्गाः। अहो स एवायं पुण्यतमो देशो यं द्रष्टुं सुदूरतमेभ्यश्चीनादिदेशेभ्यो यात्रिणः पुरा समागच्छन्। भगवत्याः प्रकृतिदेव्याः प्रमोदक्षेत्रमयमेव देशो यत्र हि यथाकालं सर्वेपि ऋतवः संभवन्ति। न केवलं ज्ञानवैभवस्यैव कृते, धनसमृद्धेरपि विषये सुसंपन्नोऽभूदयं देशो यं हि प्राणपणेनाऽप्याक्रामन् वैदेशिकाः। श्रद्धया प्रमोदेन चाऽपूर्यत मेऽन्तःकरणम्। अहो विस्मृतस्य ज्ञाननिधेरानयनाय पुनर्मातृभूमिं दृग्भ्यामालोकयिष्यामीति किं मे तदिदं स्वल्पं भागधेयम्?

प्रसिद्धं विद्याक्षेत्रमुपागमं वाराणसीम्। सुहृदां परिचयपत्रैर्निवासादिव्यवस्थायां नाऽभवत्क्लेशः। परिचयसूत्रेणानेन सुप्रसिद्धे संस्कृतमहाविद्यालये प्राविशम्। विद्यानुरागिणा शिष्टसरलेन चाध्यक्षमहाभागेन यथेच्छं विद्यामधिगन्तुमहं ससमादरमामन्त्रितः। अन्येषु विषयेषूच्चशिक्षितोऽप्येकः सुदूरतमाद्देशान्महान्तमायासं विषह्य भारतीयविद्याध्ययनाय समायात इत्यासीन्मयि मानस्तेषाम्। विशेषतश्चाहं ब्राह्मणः, विद्यां प्रति श्रद्धाशाली चेत्यभूदनुग्रहो नूनम्।

स्वरुचेरनुसारं पाठ्यविषयं निर्धारयितुमहमादिष्टोऽध्यक्षमहोदयेन। अत एव तदनुमत्या प्रत्यहं तत्तत्कक्षासु सभक्तिश्रद्धं पाठं शृण्वतो मे व्यतिगतो भूयान्कालः। परं किमहं पठेयमिति नाद्यापि निर्धारयितुमपारयम्। येषां भारतीयानामृषीणामसामान्यं ज्ञानं पुस्तकेष्वहं पठितवान्, यस्य चार्षविज्ञानस्य प्रशंसा भाषान्तरेपि मया श्रुता, यदेव चार्यसभ्यतायाः सर्वस्वभूतम्, तस्य हि विज्ञानस्य वर्तमानपाठ्यक्रमेण कियानधिगमः स्यादिति विचारे कृते मम नैराश्यमेवोद्भूतम्। एवंविधविद्याध्ययनाय कृपालुः कश्चित्सुयोग्यो गुरुः पृथगन्वेषणीयः स्यात् यो हि सेवया संतुष्टः स्वेच्छया कदाचित्स्वीकुर्यादिदमिति अध्यक्षेणावेदितं मे। मम परमं कौतूहलमभूत।

संप्रत्यहं न केवलमस्यैव विद्यालयस्य, अपि तु सुप्रसिद्धानां तत्तद्भारतीयविद्याल-

यानामेव पाठ्यनियमावलिमतिगभीरतयाऽऽलोचयम् । पाठ्यपुस्तकानां प्रतिपाद्यविषयमपि स्वबुद्ध्या च विदुषां सहायतया चापाततोऽध्यगमम् । किन्तु तद्द्वारा मम न केवलं नैराश्यदुःखमेवाभूत्, प्रत्युत महदाश्चर्यमप्यजायत । हन्त मम पूर्वपुरुषाणां महर्षीणां पावनतमेऽस्मिन् देशे किमियमेव शिक्षापद्धतिः पूर्वगौरवमास्थापयितुं प्रभवेत? किमनेनैव शिक्षाक्रमेण कृतिशीलेस्मिन् वर्तमानयुगे अन्यासां जातीनां सविधे सेयमार्यजातिमौलिमुन्नमयितुमर्हेत् ?

विषयेऽस्मिन् संप्रति ममाऽभिनिवेश इवाऽभूत् । स्वस्य स्वदेशस्य च लाभाय सर्वमन्यद्विहायास्मिन्नेव कार्ये कालं यापयितुं विवशोऽभवम् । शिक्षाविषयमिममालम्ब्य गभीरतरमालोचयमहम् । बहुतरैः शिक्षाकर्णधारैः सह विचारविनिमयमकार्षम् । बहुषु स्थानेषु च पर्यटम् । मम दृष्टौ, वर्तमाना संस्कृतशिक्षा केवलं शाब्दी । प्रायः सर्वेष्वेव पुस्तकेषु शब्दोपर्येव परस्परं विचारो वा विवादो वा भूयस्तरामुपलभ्यते । अर्थतः प्रत्यक्षीकरणस्य नैतेषु पुस्तकेषु संबन्धः । यावच्च तस्यानुभवो न प्रत्यक्षतो भवति न तावल्लाभः सांप्रतम् । अत एवास्मिन् युगे मम मन्दायां बुद्धौ असफलैव सेयं शिक्षापद्धतिः ।"

( २ )

वाचकमहाभागाः ! प्रसिद्धिमुपश्रुत्य भारतीयविद्याध्ययनाय श्रद्धया दूरादागतस्य

शिक्षाविषयिणी सेयमालोचना किमेकान्ततो मिथ्या ? भारतीयशिक्षापरीक्षासंस्थानां पाठ्यक्रममालोचयन्तु श्रीमन्त एव । तस्मिन् ( क्रमे ) हि ( उच्चशिक्षाविभागे ) त एव ग्रन्था विलोक्येरन्, येषु 'क्षोदक्षेम'नाम्ना शाब्दिक एव विचारसंघर्षः प्रधानमस्ति । 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति सर्वत्र सुप्रसिद्धम् । व्यवहारेपि च तथैव प्रचलति । यत्किञ्चिच्छास्त्रं सफलतयाऽधिजिगमिषोः पक्षे व्याकरणस्य न्यायस्य चाध्ययनमावश्यकं परिगण्यते । 'मुखं व्याकरणं स्मृतम्' इति हि महिमा हिमालयपर्यन्तं विश्रुतः । अत एव हि संस्कृतशिक्षाशरीरे मेरुदण्डभूतस्यास्यैव शास्त्रस्य पाठ्यक्रममालोचयन्तु दृष्टान्तरूपेण मनीषिणः ।

प्रथमां प्रवेशिकां प्राज्ञपरीक्षां वोत्तीर्य यदा ह्यस्मिन् शास्त्रे प्रविशति तदा मध्यमामारभ्य आचार्यपरीक्षापर्यन्तम्——कौमुदी, मनोरमाशब्दरत्न-परिभाषेन्दुशेखर-शब्देन्दुशेखर-वैयाकरणभूषण- लघुमञ्जूषा-महाभाष्य-वाक्यपदीयान्ता ग्रन्था अध्येतव्या भवन्ति । साम्प्रतं सूक्ष्मदृशा ह्येषां विषयविचारः क्रियताम् । व्याकरणसूत्रकारो मुनिः श्रीमान्पाणिनिरेतेषां सर्वेषां मूलम् । तत्रभवान्पाणिनिः वैदिक-लौकिक( संस्कृत )-भाषाशब्दानां साधुत्वमनुशशास इमे शब्दाः साधवः, अत एव भाषायां व्यवहर्तव्याः । एतद्विपरीतास्तु त्याज्याः । काचिदपि भाषा ( तद्गतशब्दाः ) न व्याकरणवराकेण सृ-

च्यते। सौष्ठवार्थं विशृङ्खलतानिवारणार्थं च व्याकरणेन व्यवस्था ( नियमनम् ) क्रियते, एवमिव पदानि वाक्यानि वा प्रयुज्यन्तामिति। यतो हि व्यवस्थिता भाषा सफला सुस्थिरा च भवति।

एतस्मिन्विषये लब्धा सफलता श्रीमता पाणिनिना। गीर्वाणभाषायां बहुभिर्विद्वद्भिर्व्याकरणानि निर्मितान्यासन्, किन्तु पाणिनेर्व्याकरणमेव बहुसंमतिनियमेन प्राधान्यं लेभे। पूर्वोक्तेषु सर्वेषु ग्रन्थेषु-'पाणिनेर्यत्सूत्रं तस्यैकैकं पदं सार्थकम्, न किञ्चिद् व्यर्थम्। न च तद्गतपदसंनिवेशः केनचिदन्यथा कर्तुं शक्यः। तथा सति कार्यवैपरीत्यं स्यात्। वैपरीत्यं न चेत्तथापि सूत्राक्षरेषु व्यर्थमेव गौरवं भवेत्। लाघवं हि चातुर्यलक्षणम्।' एतन्मात्रमादायैव युक्तिप्रयुक्तिभिः 'वादयुगस्य' तादृशी सृष्टिर्जाता या हि संस्कृतपण्डितसमाजं सती योषिदिव नाद्यापि परिहरति। तस्याः किल दर्शनं 'परिष्कार'-'क्रोडपत्र' रूपेणाधुनापि कर्तुं शक्यते। व्याकरणस्य विषये यदा लोका विप्रतिपन्ना आसंस्तदा तत्समर्थनस्याऽऽसीदावश्यकतापि। किन्तु यदाऽस्माभिः स्वीकृतं यत् 'पाणिनिना यदुक्तं तत्सर्वं समञ्जसम्' तदा तु मन्ये विवादस्य परिसमाप्तिरेव कर्तव्या स्यात्। किन्तु पाणिनिसूत्रस्य एकैकं पदमादाय कतिपयपत्रव्यापकं विवादं पूर्वोक्तेषु ग्रन्थेषु सांप्रतमपि वयं पठामः पाठयामश्च। न केवलमेतावदेव, तद्विवादस्य एकैकं विषयखण्डमादाय क्रोड़पत्ररूपेणाधुनापि वयं ततो व्यधिकतया प्रचारयितुमिच्छामः।

( ३ )

इयं हि प्रणाली तस्य कालस्य, यस्मिन् हि संस्कृतवाङ्मये ( वि )वादवात्यैव वेगतः प्रावहत्। भगवत्याः संस्कृतभारत्या इतिहासे आसीत्स हि समयो विलक्षणविकासमयः, यस्मिन् विचाररूपेण टीकारूपेण वा कंचिदर्थं विशदीकुर्वतामपि पण्डितानां समाजे मिथो वादसृष्टिरभवत्। तत्र च एकैकशब्दस्य एकैकवर्णस्य एकैकमात्रापर्यन्तस्यापि विषये तेषां गभीरतमो विचारसंघर्षः समघटत। विचारपर्यवसाने जाते विवादविषयीभूतायाः पूर्णाया एकस्या मात्राया अलाभावस्थायाम्, अर्द्धमात्राया अपि लाघवलाभो जातश्चेत्तर्ह्यस्मिन् लोके तु तेषां कृते नातः परतरो लाभः। यतो 'ह्यर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः।'

आर्यविचारानुसारं 'पुरुषस्य कृते कः परमार्थः' इति जीवनध्येयबोधकानां वेदानामङ्गभूतमिदं व्याकरणम्। एतस्य संक्षेपाय तत्रभवान्पाणिनिः सूत्राणि, तेष्वावश्यकविस्तराय वृत्तिकारो वृत्तीः, श्रीमान् भाष्यकारश्च भाष्यं प्रणिनाय। एतत्त्रयीपरिष्कृतस्य व्याकरणस्य विशदीकरणाय व्याडिप्रभृतीनां संग्रहादयो ग्रन्था:, माधव-जयन्तादीनां काशिकादयो वृत्तयश्च प्राचीनकाले प्रादुर्बभूवुः। एतदुत्तरं श्रीमन्तं भट्टोजिदी-

क्षितमारभ्य वादयुगस्यास्य प्रबलः प्रारम्भो भवति। अत्र हि नवीनन्यायस्य 'पुटं' प्रदाय व्याकरण-पारदस्य तथा संस्कारा अक्रियन्त यथा तत्सेवनेन पण्डितमल्लानां शक्तिर्निर्मर्यादमुदजृम्भत। मर्यादातिगामित्वाद्दैवैतेषु परस्परं मल्लव्यायोगा इव शास्त्रविचाराः प्राचरन्। प्रकृततत्त्वविचारमुपसर्जनीकृत्य (उपेक्ष्येत्यर्थः) परस्परस्य शब्दसंनिवेशे एव प्रायो भूयान् संरम्भोऽभवत्।

नागेशभट्टस्य समयस्तु वादप्रणाल्याः पक्षे पूर्णोल्लासमयः। तस्मिन् समये हि संस्कृतभारत्याः साहित्यावनौ प्ररूढो वाद-प्रणालीपादपः शाखाप्रशाखाभिः पूर्णोज्जृम्भणमगमत्। न केवलं न्याये, व्याकरणे एव वा, संस्कृतवाङ्मयस्याऽन्यान्येष्वपि विभागेषु ये ये ग्रन्थास्तस्मिन्काले प्राणीयन्त, प्रायः सर्वेष्वेव तेषु सेयं प्रणाली प्रचुरं प्राचरत। नवीनग्रन्थप्रणेतुः कृतित्वमियतैव परीक्ष्यते स्म यदनेन सुपरिष्कृतभाषया तथा विषयविचारः कृतोऽस्ति यस्मिन् क्षोदक्षेमस्य भूयान्विस्तरः। श्रद्धया मृदुलहृदयेषु धार्मिकेषु धर्मतत्त्वबोधनाय प्रवृत्ततया सरलसुबोधभाषोचिता धर्मशास्त्रनिबन्धा अपि तस्मिन्नेव रागे रञ्जिताः प्रादुरासन्। भगवद्भावनामयेषु सरसहृदयेषु भक्तेषु भगवत्तत्त्व-प्रकटनाय सरसभाषानिबन्धनीयाः सांप्रदायिकनिबन्धा अपि तमेव वीरवेषं वहन्तोऽदृश्यन्त। किमधिकम्, तस्य पण्डितस्य व्युत्पत्तिरेव सुदृढा नाऽमन्यत, येन हि स्वग्रन्थे नेयं प्रणाली परिगृहीता। किं बहुना, प्रसादमाधुर्ययोर्गुणगीतिं गौरवेण गायन्तः साहित्यनिबन्धकारा अपि ग्रन्थप्रणयनविषये एतस्या एव शैल्याः संमुखे निजमस्तकं नमयामासुः। यस्य हि प्रत्यक्षं प्रमाणं रसगङ्गाधरः।

भट्टोजिदीक्षितादीनां समये योऽयं वादभानुरुदगान्नागेशभट्टस्य समये तस्य पूर्णो मध्याह्नकाल आसीदिति मन्ये नाऽत्युक्तये। यतो हि मध्यमध्याह्ने सूर्यस्योत्तापस्तावतीं परकाष्ठामारोहति यस्या अग्रे पुनः सोयं क्रमेणावसादमेवाधिगच्छति। मोगलसम्राट्सु औरङ्गजेबस्य शासनकालः प्रतापस्य चरमसीमानमधिरूढः ख्याप्यते, यतो हि तदधिको नाऽभवत्प्रतापः। प्रत्युत शनैः शनैरवरोह एव प्रारभ्यत। एवमेव एतत्प्रथावलम्बिषु संभावितग्रन्थकारेषु श्रीमान्नागेशोऽन्तिमः। अनेन हि शब्दसाधुत्वबोधनेन अङ्गिशास्त्रोपकारकम्, अत एवाङ्गभूतमपीदं व्याकरणं वादप्रौढिप्रदर्शनेन तथा निबिडीकृतम्, यथा एकस्यैवास्य शास्त्रस्य संपूर्णतया समापनं वर्तमानयुगे तु समग्रस्याध्ययनकालस्य समापनायाऽलम्। सुप्रवेशोपि विषयो वाद-प्रणाल्या दुर्गमीकृतः। किं बहुना-टीकया ग्रन्थं विशदीकर्तुं प्रवृत्तोपि तयाऽऽरभटथा जल्पति, यथा मूलं कदाचित् सरलतया बुध्येत, किन्तु टीकाया अस्याः कृते पुनष्टीकाया अपेक्षा भवति।

टीका हि ग्रन्थस्य सर्वांशतस्तत्त्वबोधनाय भवति। टीकते सह गच्छतीति टीका-

पदेन, ग्रन्थस्य प्रत्येकमर्मविषये तस्याः साहाय्यं भवतीति महत् गौरवं टीकायाः। यत्र ह्यन्यान्यैरान्यैरपि ग्रन्थस्य मर्म अन्यथा योज्यते तत्र हि सिद्धान्तस्य स्थिरीकरणाय टीकामुखमेवाऽवेक्षन्ते प्रामाणिकाः। अत एव हि सर्वतः प्रसिद्धं 'टीका गुरूणां गुरुः'। ग्रन्थयोजनविषये टीकायाः कियद्वा महत्त्वपूर्णं स्थानमित्येतावन्मात्रेण परिज्ञातं भवेत्। ग्रन्थपारगामितायै इमाष्टीका एव नौका इव परमं साहाय्यमारचयन्ति। इमा ग्रन्थस्य तथा सहगामिन्यो भवन्ति यथा विभ्रष्टो मूलग्रन्थ एतासां साहाय्येन गवेषकैः पुनः समीकृत इति श्रूयते। अस्मदादीनां गुरुवरैर्विद्यावाचस्पतिश्रीमधुसूदनशर्ममैथिलमहाभागैरेव टीकाद्वारा जानकीपरिणयनाटकं साक्षीकृत्य तात्कालिकजयपुरशिक्षाविभागाध्यक्षाय दत्तम्।

किन्तु मूलकारो यया दिशा प्रचलति टीकाकारस्ततो विपरीतयैव दिशा गच्छेच्चेत् ग्रन्थतत्त्वजिज्ञासूनां का स्यादशा? किञ्च टीकाकारस्यासनं मूलकारस्य परिचर्याऽनुगुणम्। अग्रगामिना मूलकारेण यो मार्गः परिगृहीतष्टीकाकारस्तं सर्वेभ्यो जिज्ञासुभ्यः सुस्पष्टं कुर्वन् तत्कण्टकाऽवकरादीन् दूरे करोति। यदि टीकाकारस्तं मार्गमबोधयित्वा सर्वत्र विपरीतमेव ब्रूयात्, मार्गेऽधिकाधिकं कण्टकानेव विकिरेत्तर्हि किं टीकाकारेणानेन कृतं स्वासनोचितं कर्तव्यम्?

अपि च-मूलकारष्टीकाकारश्चेति द्वावपि संभूय साहित्यसेवामारचयतः। सेयं च सेवा परमार्थतः सहृदयानां सेवा। यदि तु टीकाकरणसमये मूलकार-टीकाकारयोस्तुमुलं संघटते तर्हि विषयजिज्ञासोन्मुखानां सहृदयानां का दशा स्यात्? मृदङ्गवादनगुणो न सामान्यः। एतस्मिन्पारंगामी संगीतसमाजे महान्तमादरं लभते। गायकापेक्षयापि मृदङ्गवादकस्तालविषये प्रधानभूतः। किन्तु गानसमये स गायकस्यानुचर एव शोभते न स्वतन्त्रः। तौ यदि सगीतगोष्ठ्यां परस्परसंघर्षमवलम्बेते तदा रसलोलुपानां संगीतश्रोतॄणां का दशा भवेत्?

वादयुगे-खण्डनमण्डनयोः काण्डमेवाऽखण्डं यदा प्राचरत्तदा टीकाया व्याजं कृत्वा मूलकारस्य स्थाने स्थाने खण्डनप्रकारः प्रारब्धस्तात्कालिकैः। ग्रन्थस्य स्वारस्यमवबोद्धुं लोकाष्टीकामुपाददत, परं मूलकारस्य तत्पक्षीयाणां च खण्डनमेव बहुधा तत्राऽलभ्यत तैः। प्रकृतविषयं परित्यज्य येन केनापि प्रकारेण पराभिमतधर्म-संप्रदायादेस्तिरस्कारष्टीकायां पर्यसाध्यत पण्डितपुंगवैः। दृश्यताम्, अमरकोषेणानेन व्युत्पत्त्यर्थे कियानुपकारः कृतः क्रियते चेति नाऽविदितं कस्यापि। न चायं ग्रन्थो धर्म-संप्रदायविषयकोऽपि। किन्तु विवादयुगे टीकाव्याजेन पण्डितपुंगवैरस्मायपि प्रसादः प्रत्त एव। शाक्यमुनेर्नामटीकायां प्रोक्तम्-'यद्यपि वेदविरुद्धार्थानुष्ठातृत्वाज्जिन-शाक्यौ नरकवर्गे वक्तुमुचितौ। तथापि देवविरोधित्वेन बुद्ध्युपारोहादत्रैवोक्तौ।'
[ व्याख्यासुधा पृ० ६ ]

दृष्टं स्यान्मार्मिकैः-भाटया १ एककशकटिचालकेषु यदा कदाचिन्मिथः स्पर्द्धा संभवति तदा हि स्पर्द्धमानाविमौ द्वावपि चालकौ पुनः पुनः कशाप्रहारवर्षया घोटकं तथा प्रवाहयतो यथा शकटिस्थिता यात्रिणः पतनोन्मुखा एव भवन्ति । अभीष्टस्थानप्राप्तेः का कथा, प्राणभिक्षामीश्वराद्याचन्ते वराकाः । एवमेव यत्र मूलग्रन्थ एव दुरूहः, विषयोऽपि जटिलतमस्तत्र परमया प्रत्याशया वराको जिज्ञासुर्नीचैष्टीकोपरि दीनां दृष्टिं ददाति । किन्तु टीकायां दृश्यते–ग्रन्थयोजनस्य का कथा, जिज्ञासुना स्वप्रतिभया यावान् विषयो बुद्धौ उपारोहितः सोपि 'चिन्त्यमिदम्' इति खण्डनसंरम्भेण टीकयाऽन्यथा कृतः ।

एवंविधैष्टीकाप्रायैर्ग्रन्थैर्नागेशमहाभागसमये तथा जटिलीकृतमिदं व्याकरणगहनं यदेतस्मात्सहसैव निर्गत्य प्रधानमुद्देश्यं निर्वर्तयितुं न प्रभवेत्साधारणोऽधिकारी । यतो हि साङ्गस्यैवंविधस्य व्याकरणस्य सम्यक्तया समापन एव साम्प्रतमध्ययनकालस्य इतिश्रीर्भवति । अङ्गिशास्त्रस्याऽऽयत्तीकरणार्थमत्यावश्यकानामन्यान्यविषयाणामध्ययनम्, स्वयमङ्गिशास्त्रस्य (अध्यात्मशास्त्रस्य वेदादेः) परिग्रहणं वा कस्मिन्नायुषि भवेत् ? प्रथमे स्वाध्यायकाल एव चेदायुषः पर्यवसानं स्यात्तर्हि प्रवचनादिना शास्त्राणां लोके प्रचारः कथं निरुह्येत ? न हि सर्वे भगवच्छंकराचार्या इव श्रुतधराः संभवन्ति । विशेषतो यादृशाः शिष्याः साम्प्रतं संस्कृताध्यापकानां भाग्यभुक्ता भवन्ति ते सर्वेषामपि मार्मिकाऽमार्मिकाणां सर्वदा हृदयारूढा एव । एवंपरिस्थितौ वादमात्रप्रयोजनैर्ग्रन्थैर्ग्रथिता सेयं पाठ्यकन्था कियत्कालं वा निर्वाहयितुं शक्येत ?

सेयं व्याकरणपरिस्थितिर्दृष्टान्तरूपेण दृशोर्गोचरमुपस्थापिता । किन्तु यथा हरिस्तथा हरः, सर्वेषामेव शास्त्राणामियमेव प्रायः परिस्थितिः । पूर्वं निवेदितवानस्मि, यद्वाद्युगे दर्शन–धर्म–संप्रदायादीनां सर्वेषामेव शास्त्राणां परस्परं रणसज्जासमुपयुक्तमेव समभूत्स्वरूपम् । विशेषतस्तु 'नवीनन्यायः' इति नाम्नैव सूचितस्वरूपस्य न्यायशास्त्रस्य । महामहाभागमिदमेव हि शास्त्रम् 'अवच्छेदकतायुगम्' प्रचार्य सर्वथा परिच्छिन्नमापादयामास संस्कृतशिक्षाप्रवाहम् । आवापोद्वापापरपर्याये शब्दानां निवेश-निःसारणसंरम्भ एव सर्वमायुरस्माकं व्ययति । एकैकस्मिन्वाक्ये अवच्छेदकानां माला प्रयोक्तुः पाण्डित्यविच्छित्तये परिगण्यते । अपि नायं केवलः शाब्दो विनोद एव ?

ननु सारस्वते प्रपञ्चे शब्दस्यैव प्राधान्यम् । अत एव शब्दमादायैव सर्वत्र सोयं भूयान् संरम्भः शोभायै एव, न मनःक्षोभायेति समाधानाय मुखमुद्घाटयंस्तु प्रकटं प्रमाद्यति । स किल महात्मा विस्मरति

यत् कंचिदर्थमालम्ब्यैव शब्दस्य जन्म। व्यवहारेपि— विवक्षितस्य कस्यचिदर्थस्य बोधनायैव शब्दस्यावतारो भवति। ततश्च यत्र केवलं शब्दसाम्राज्यमेव परितः खेलति, न पुनरर्थतः परीक्षणाऽनुगा दृष्टिः, तत्र यदि अर्थ(धन)लाभस्याभावः परिणमेच्चेत्किमाश्चर्यम् ? 'आन्वीक्षिकी'ति तर्कविद्याया नामैव। अत एव अर्थानुसारं सर्वतोऽप्यन्वीक्षणं मुख्यतमसुद्देश्यम् यत् धूमेन वह्नेरनुमानं जायते। अत एव यत्र यत्र धूमो भवति तत्र तत्र वह्निरप्युपलभ्यते इति द्वयोः सहचारस्य स्वगृहस्थमहानसे इव सर्वत्रैव व्यवहारतः परीक्षणं न्यायप्राप्तम्। किन्तु न्यायशास्त्रे प्रविष्टमात्रायापि वराकाय द्वयोः सहचारस्यास्य प्रत्यक्षापादनस्य स्थाने— 'साध्यतावच्छेदकसंबन्धावच्छिन्न-साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणत्वावच्छिन्न—भेदाधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तिताऽनवच्छेदकधर्मवत्त्वम्' इति शुष्कफक्किकात्वावच्छेदकावच्छिन्नमिदं कण्ठतो घोष्यते नाम।

जन्माऽऽरभ्य लीलासंवरणपर्यन्तं केवलं शब्दजाल एव संचरतामस्माकं मनसि शास्त्रदृष्टस्य कस्यचिदर्थस्य व्यवहारतोऽपि प्रत्यक्षीकरणस्य प्रवृत्तिरेव न भवति। तादृगुत्साहस्य बीजमेव अनल-धूममयेऽस्मिन् शास्त्रे दग्धमिव। द्रवीभूतं सुवर्णमत्यन्ताग्निसंयोगेन न नश्यतीत्यनल्पकाशो द्वयं पठामः पाठयामश्च। परं विरोधिनां प्रत्यक्षविरोधोद्भावनेऽपि कियद्भिर्वा महाभागैरेतस्यार्थस्य प्रत्यक्षीकरणाय चेष्टितम् ? पूर्वं तु साधनसामग्र्येव मन्ये नाभूत्सुलभा, किन्तु वर्तमानसमये यथेच्छाग्निसमुत्पादनस्य पदे पदे सुलभानि सफलानि च साधनान्युपलभ्यन्ते। किन्तु किं भवेत्सौलभ्येनाऽनेन? अस्माकं हृदयात्तु प्रवृत्तेर्बीजमेव तिरोहितम्। भविष्यति किञ्चिदनेन प्रयोजनमिति ज्ञानमात्रेण संतुष्यन्तो यथाश्रुतग्राहिणो वयम्।

न केवलमेकस्मिन्नेव शास्त्रेऽनुप्रविष्टोयं दोषः, अपि तु कूप एव भङ्गाभवानी पतिता। 'व्यवहारविदे' इत्यनेन व्यवहारपरिज्ञानं काव्यप्रयोजनेष्वनुशृणुमः। किंतु—'कुरबकारवकारणतां ययुः' इति वसन्तवर्णनं शतशः पठितवतां पाठितवतां चापि कियन्तः 'कुरबकम्' समये प्रत्यक्षीचक्रुः ? यथा टीकाकाराः 'कुरबकाः तन्नामकास्तरवः' इति व्याख्यानाक्षरैः काठिन्यनदीमतरंस्तथा वयमपि 'वृक्षविशेषः' 'पुष्पविशेषः' इति नियमितैरक्षरैरेवाऽन्तेवासिनां जिज्ञासानदीमुत्तरामः। लवली-तिलक-कुरण्टक-हिन्ताल-प्रियाल-प्रियकादीनि पदे पदेऽस्माकं नामान्युपतिष्ठन्ति, किन्तु वृक्षविशेष-पुष्पविशेषेत्यमोघशस्त्रेणैव सर्वत्र वयं विजयामहे। कुररादयः केन नाम्ना भाषायामुपलभ्यन्ते। परभृतः (कोकिलः) काकैः पोष्यते इति केनचित्प्रत्यक्षीकृतं न वा, इति काव्यपाठिषु कियतामनुसंधानेच्छाऽभवत् ?

किं च तया फलं तैर्निष्पादितम्! 'गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः' इति मूकाभिनयस्यैवेदं फलं जातं यत्—'चणकः पक्षिविशेषः, उष्ट्रो वृक्षविशेषः' इत्यादयोऽस्माकं गवेषणाप्रवीणतासूचका उपहासा जन्म लेभिरे। साहित्यादलंकारादयो व्रजभाषा (हिन्दी) साहित्येन यथा परिगृहीतास्तथा शब्दमात्रसंतोषात्मकः सोयं विचित्रो गुणोपि नूनं दायरूपेण प्राप्तः। अत एव 'दादुर मोर पपैया बोलैं' इत्यत्र 'मोर' 'पपैये' तिपक्षिमध्यपतितः 'दादुरोपि कश्चित्पक्षी' ति व्याख्यामृतं वर्षन्तो बहवः श्रूयन्ते। 'नौका देवमन्दिरकलशानामुपरि परिचलति,' महिषी (सैरिभी) महीरुहमौलिमारूढा' इति तावदापततः प्रहेलिकेव प्रतीयते। किन्तु ग्रामादिकं जलमग्नमापादितवति प्रावृट्पूरोप्लवे (बाढ) जलोपरि प्रवहतामेषाम् (नौकादि) पदार्थानां पूरोपप्लवशान्तौ विचित्रा च विरूपा च सेयं परिस्थितिः सत्य-सत्यैव विलोकयितुं शक्यते। एवमेव वादयुगस्य व्यतिक्रमेऽस्माकं वाङ्मयस्याऽपि। सामयिकी आवश्यकताऽस्मान् जनप्रवाहाभिमुखं नेतुमिच्छति, वादयुगीयाः पाठ्यग्रन्थास्तु शब्दजालमये निर्जने प्राचीनविपिने।

अस्तु, प्रसक्तानुप्रसक्त्या प्रबन्धोऽयं मुधैव तुन्दिलीभवति। किन्तु निष्पक्षपातहृदयाः आत्महितभावनयाऽवश्यं परिज्ञातुं शक्नुयुर्यदस्माकं शिक्षापद्धतौ शब्दप्रवणत्वमेव मुख्यतो नायकायते। अथतः प्रत्यक्षीकरणप्रवृत्तिस्तु शब्दमहोदयस्य भयङ्करीं विवादारभटीं दृष्ट्वा भयात्कोणे लुक्कायितेव। इदानीं स्वत एव विवेकिना विवेक्तव्यं स्याद् यदेवं विवादयुगे जगत्प्रथितस्य भारतीयार्षविज्ञानस्य कथं वा प्राधान्यं स्थातुमर्हेत? दुःखस्य त्वयं विषयो यदधुनापि वयमात्मनोऽवपातं न जानीमो न च ज्ञातुमिच्छामः। यावच्च रुग्णः स्वस्य व्याधिग्रस्ततामेव नानुभवति तावत्कथं वा तस्योल्लाघतायाः आशा हृदि निधेया स्यात्?

स्पष्टमेवेदानीं वक्तव्यं स्याद्यत् अनुरोधस्यापि काचित् परिसीमा भवति। ये महानुभावा हृदये जानन्त्यपि यदियं शिक्षाप्रणाली अस्मिन्समये सुतरामनुपयुक्ता, अत एव नेयमधिककालं स्थातुं शक्नुयात्। किन्तु प्राचीनपाण्डित्यप्रख्यातेराश्रयेणैव लोकेभ्यः पूजां लब्धुमिच्छन्तस्ते सत्यस्याऽपलापं कर्तुमिच्छन्ति। नानाविधानि कृत्रिमसमाधानान्युपस्थापयन्ति, अतत्त्वविदां समक्षम्। शिक्षाकर्णधारैस्तत्त्वविनिर्णयाय सविनयबहुमानमाहूतास्तु नानाव्यपदेशानारचयन्ति। सत्यनिवेदनं नापराधाय, परिष्कारसापेक्षाया वर्तमानशिक्षाप्रणाल्याः संरक्षणार्थमनुचितानप्युपायानाश्रयन्ति महाभागाः। शिक्षापद्धतेः संशोधनम्, अर्थात् संस्कृतग्रन्थेषु एकस्य स्थाने अपरस्य नियमनं न किल कस्यचिद्धर्मभ्रंशाय जायमानमद्यावधि श्रुतम्। न चायं प्रश्नो धर्मविषयक एव। किन्तु स्वानुभूतं ब्रूमि, शिक्षाविचारसभाप्रसङ्गतो वा-

राणसीमुपगतेन मया प्रत्यक्षमालोकितं यत् येषां पाठ्यसंशोधनपक्षे संमतिरस्ति ते महामहाभागैरमीभिर्धर्मभ्रष्टत्वेन लाञ्छिताः ! विज्ञापनपत्रैर्दिगन्तरमाकम्प्य स्वीयेष्वेव मिथो विरोधाग्निः प्रकटितो यत् 'शिक्षासंशोधका न किल सनातनधर्मिणो मन्तव्याः !!' कियदेतदुचितम् ?

तत्तत्परीक्षासंस्थाभिः प्रचालिताया वर्तमानसंस्कृतोच्चशिक्षायाः किं वा उद्देश्यं स्यादिति संक्षिप्य स्वयमेव विचार्यताम् । अस्मिन्काले लौकिकलाभस्तु प्रत्यक्षं नास्त्येव, शिक्षितैरधिष्ठेयेभ्यः स्थानेभ्यः संस्कृतपरीक्षोत्तीर्णानां प्रत्यक्षतो वर्जितत्वात् । आजन्म केवलमवच्छेदकताच्छन्नस्यैकदैशिकशाब्द्याध्यायिनः पारलौकिकलाभोपि कियान् स्यादिति तेपि स्वयं जानीयुः । विचार्यतां क्षणम्, उपनयनोत्तरं केवलं भगवन्नामसंकीर्तनादिभिरेवात्मनो जन्म व्यतिगमयन्तो भगवन्तं सुखेन लब्धुं शक्नुयुः, उत 'इकत्वावच्छिन्नस्य स्थाने यणत्वावच्छिन्नं भवति' इत्यनेनैव जनुर्व्यपनीतवन्तो महाभागाः ? उच्यतेऽपि —'प्राप्ते संनिहिते मरणे । न हि न हि रक्षति डुकृञ् करणे ॥' ततश्चैवंविधशिक्षाप्रणाल्या उभयविधोपि लाभो न सिध्यतीति पर्यन्ते स्वीकर्तव्यमेव भवेत् ।

ननु आर्थिकलाभाभावो व्यर्थमेव वराक्याः संस्कृतशिक्षायाः शिरसि विनिपात्यते । न हि शिक्षाया आर्थिकलाभ एव फलम् । राजपरिगृहीतया अँग्रेजीशिक्षया शिक्षिता एव किं सर्वे लाभान्विता भवन्ति? भाग्यानुसारमिदम् । संस्कृतशिक्षया शिक्षिता अपि लभन्त एव धनं च मानं चेति प्रत्यक्षमालोक्यताम् , इति चेत् । महाभागाः ! आकण्ठं पूरितस्य तृप्तस्योदरस्योद्गारोऽयम् । ये किल समुचितवेतनकं पदमधितिष्ठन्ति तेषां महाभागानां मौखिकमिदमाश्वासनम् । अनलधूमगर्भयाऽनया वर्तमानसंस्कृतशिक्षया निःशेषितायुर्धना अपि ये वराका न कुत्रचित्स्थानमधिगतवन्तः, उद्ग्रीविकया इतस्ततो जीविकामन्विष्यन्तो ये किल गृहाद् गृहमाहिण्डन्ते तेषां हृदयहाहाकारो न श्रुतस्तृप्तेनानेन जठरेण । अंग्रेज़ीशिक्षितानां कृते कति वा न स्थानानि ? न्यायालयविभागे, दण्ड-(फौजदारी)विभागे, शिक्षाविभागे, आयव्ययनिरीक्षणविभागे, ग्रामोत्थधनसंचयविभागे, सैन्यविभागे, परराष्ट्रवर्तनविभागे; पुरातत्त्वगवेषणविभागे, नगरादिनिर्माणविभागे, एवमादिषु सर्वत्रैव तु कीटाणुवत् नवीनशिक्षिताः प्रसृताः । अन्यन्मास्तु, परं कल्यर्क( 'क्लर्क' )पदं त्वेषामक्षुण्णमेव ! राजाश्रयोऽपि क्षणं दूरेऽस्तु । व्यापारिणामपि तु कार्यालयेषु अंग्रेजीशिक्षिता एव संगृह्यन्ते । पुनः कथं वयं प्रतार्यामहे यत्संस्कृतशिक्षितानामंग्रेजीशिक्षितानां चार्थिकलाभविषये समानतेति ।

सिन्धुसविधे बिन्दुमात्राणि यानि किल संस्कृतशिक्षितानां स्थानानि, तान्यपि प्रतिदिनमंग्रेजीशिक्षितबलादाधिक्रियन्ते, धिक्—

क्रियन्ते च संस्कृतशिक्षिताः । किन्तु तृप्तानामुदराणां न चेतना, न वेदना । पूर्वं कालेजपदवाच्येषु विद्यालयेषु उच्चशिक्षिताः संस्कृतपण्डिताः समुचितवेतनेन समगृह्यन्त, किन्तु नियमः कृतः—'कालेजे एम्. ए. परीक्षोत्तीर्ण एवाध्यापकः स्यात्' । लब्धोर्द्धचन्द्राः संस्कृतज्ञाः । ततो निरस्ता अमी वराकाः 'हाईस्कूलेषु' संस्कृताध्यापकत्वेन यथाकथंचिदजीवन् । किन्त्वधुनाऽत्रापि नियमो जातः 'बी. ए. परीक्षायां संस्कृतं गृहीतवन्तः अंग्रेजीशिक्षिता एव हाईस्कूलेऽध्यापकाः स्युः' । 'राजपूताना बोर्ड' इत्याख्यया संस्थया प्रचालितेयं संस्कृतकण्ठच्छेदात्मिकाऽऽज्ञा । श्रुता च किल सर्वैरेव तृप्तैरुदरैः । न कस्यचिदप्यासनं कम्पितम् । संस्कृतशिक्षाप्रणाल्याः संशोधने अब्रह्मण्यमुद्घोषयन्त्यो धर्ममूर्तयः क्व संप्रति निलीनाः ? संस्कृतशिक्षायाः संशोधनमात्रे त्वियत्ताण्डवमारब्धं यद्विज्ञापनपत्रैराकाश१पातालमेकीकृतमभूत्; किन्तु यदा तस्या मूलोच्छेद एव प्रारब्धस्तदा सर्वतोऽपि नीरव-निस्तब्धता विराजते । अपि किं सत्यमिदमाभाणकम् ?— '२अञ्जितां न सहन्ते ये सहन्ते स्फुटितां सुखम्' । नेदं मन्तव्यं यत् राजपुत्रप्रान्तस्यैवेदमनिष्टम् । मा उत्ताम्यत, तदपि दिनं न दूरे, यस्मिन्हि युक्तप्रान्तादिष्वपि संस्कृतज्ञानां सोयमलौकिकः संमानः संमुखगतः स्यात ! हन्त हन्त एवं सहानुभूतिपूर्णं हृदयमादाय वर्तमानसंस्कृतशिक्षानौकां कियत्कालं श्रीमन्तः परिचालयेयुः? कियत्कालं च संस्कृतशिक्षामधिजिगमिषूणां मुग्धहृदयानां श्रीमत्सु विश्वासस्तिष्ठेत् ?

बहवः खलु वर्तमानसंस्कृतशिक्षापद्धतेः पक्षसमर्थनाय इदमपि प्रवदन्तः श्रूयन्ते यद् भारतीययाऽनया प्रणाल्याऽस्माकं भारतीयसंस्कृतेः संरक्षणं भवति । नवीनलाभलोभे तु संस्कृतिर्हातव्या स्यादिति । किन्तु नवीनन्यायस्य व्याकरणस्य वा ग्रन्था भारतीयसंस्कृतेः संरक्षायां न साक्षादुपयोगिनः । यदा ह्येतन्मात्रपाठिनः संस्काराणां नामानि स्वरूपमपि च यथावन्न परिजानन्ति । 'आर्या एतद्देशस्यैव निवासिन इति कैर्वा प्रमाणैः सिध्येत्', 'यदि च बहिर्देशेभ्य आगतास्तर्हि कुतः ? केन वा मार्गेण' इत्येतदपि न येषामवगतं तदा संस्कृतिसंरक्षणमस्माभिः क्रियत इति कथं वा प्रमाणयितुं शक्यम् ? अत एव भारतीयसंस्कृतिरक्षा यदि कामनीया तर्हि वर्तमाना निरुद्देश्या प्रणाली शोधनीया स्यात् । कृतसंस्कारतया उपयोगिन्येव शिक्षापद्धतिरस्माकं संस्कृतिं रक्षेत् नत्वसंस्कृता ।

" यस्य कस्य तरोर्मूलं येन केनापि पेषितम् ।
यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति ॥ "

इति निरुद्देश्या प्रणाली तूपहासाय सर्वतो निरासाय च केवलम् । एतस्मिन् कर्मणि वैधर्म्यशङ्का नूनं कलङ्काय बुद्धिमताम् ।

१—समाहारः । २ 'फूटी सहलैं, आँजी न सहैं' ।

अत एव ये किल संस्कृतशिक्षाव्यवसाय एव जन्म यापितवन्तः, मार्मिका अनुभविनो व्यवहारदक्षाश्च सन्ति तेषां सर्वतः प्रधानमिदमेव कर्तव्यं यत्ते सुविचार्य शिक्षापद्धतेरस्याः परिष्कारं कुर्युः। नेदं कार्यं साम्प्रतिकव्यवस्थावत् 'अधिकसंमत्या' साधयितुं शक्यम्। न चात्र केवलमवच्छेदकताच्छन्नानां वराकाणां बुद्धिरेव प्रभवति। अत एव संस्कृतशिक्षासागरे तिमिङ्गिलगिलायिताः स्वाभाविकीं मोहनिद्रां विद्राव्य यदि शिक्षापरिष्कारं कर्तुमुद्यताः स्युस्तर्हि भगवती संस्कृतसरस्वती पुनरपि किञ्चिद्विहरेल्लोकालये। अन्यथा यद् दृश्यते तदग्रे भाव्येव। किन्त्वस्माकं सेयं देववाणी 'अमरभारती', इत्यत्र नास्त्यस्माकं स्तोकोपि संशयः। चराचरनायको भगवानिमं विश्वासं सत्यमेव क्रियात्।

भट्टश्रीमथुरानाथशास्त्री

---

# ❁ प्राचीन भारत में शिक्षापद्धति ❁

लेखक—डा० श्रीलक्ष्मणस्वरूप एम्० ए० डी० फिल् (आक्सफोर्ड) आफिसर एकेडेमी (फ्रांस) आचार्य, संस्कृतसाहित्य, पञ्जाब विश्वविद्यालय, वाइस प्रिन्सिपल ओरिएण्टल कालिज, लाहौर

शिक्षा पद्धति का विषय बडा गम्भीर और विशाल है, इस विषय पर एक नहीं अपि तु अनेक पुस्तकें लिखी जासकती हैं। एक छोटे से लेख में शिक्षा—पद्धति जैसे विषय पर सर्वाङ्ग—सम्पूर्ण प्रकाश डालना कठिन ही नहीं, प्रत्युत असम्भव है। इस लेख में हम शिक्षा-सम्बन्धी दो चार बातों को ही स्पष्ट करने का यत्न करेंगे।

शास्त्रार्थ में दिग्विजय प्राप्त करना ही पाण्डित्य की परा काष्ठा समझी जाती है। श्रीशङ्कराचार्य श्रीरामानुजाचार्य इत्यादिकों ने शास्त्रार्थ में दिग्विजय को ही पाण्डित्यकी परा काष्ठा बना दिया। अब भी काशी जैसे विद्यास्थान में शास्त्रार्थ के द्वारा पण्डितों को परास्त करना ही विद्वानों का उद्देश्य रहता है। यह शास्त्रार्थ की रीति भारत में सृष्टि के आरम्भ काल से चली आई है। इसी रीति का सङ्केत ऋग्वेद में मिलता है—

उत त्वं सख्ये स्थिरपीतमाहु-
नैनं हिन्वन्त्यपि वाजिनेषु।
(ऋ० १०.७१.५.)

निरुक्त में यास्क ने 'सख्ये' का अर्थ 'वाक्सख्ये' 'स्थिरपीतम्' का अर्थ 'विपीतार्थं विज्ञातार्थम्' 'हिन्वन्ति' का अर्थ 'आप्नुवन्ति' 'वाजिनेषु' का अर्थ 'वाग्ज्ञेयेषु बलवत्स्वपि' किया है। इसका भावार्थ यह है कि बडे बडे शास्त्रार्थों में भी अर्थ को भली प्रकार जाननेवाले विद्वान् की विद्या को विपक्षी लोग नहीं पहुँच पाते। इस ऋचा से शास्त्रार्थों का प्राचीन भारत में होना पाया जाता है।

एक दूसरे मन्त्र में भी इसी बात का

## * पञ्चनदीयविश्वविद्यालयाधिकृतः प्राच्यमहाविद्यालयः *

### ( तस्यायं स्थापनायुगस्येतिहासः )

( लेखकः रघुनन्दनः शास्त्री, एम० ए०, एन्० ओ० एल्० जयपुरीयप्राच्यमहाविद्यालयाध्यापकः )

१८३९ तमे खीष्टाब्दे पञ्जाबप्रान्ते राजनैतिकरूपेण ब्रिटिशाधिष्ठितताँ जगाम। तस्मिन्नेव काले शिक्षाप्रसारार्थं विशेषतश्च आंग्लभाषाप्रचारार्थं सद्यःसञ्जातप्रभुभिः सविशेषं प्रयत्नो व्यधायि। शिक्षाकार्यञ्च तदा न्यायाधिपतये (जुडीशलकमिश्नर इति पदाधिकारिणे) मौण्टगुमरीमहोदयाय समर्पितमभूत्।

'कां भाषां द्वारीकृत्य पञ्चनदनिवासिनां शिक्षणं स्यात्' इति शिक्षाकर्मणि भाषाभेदजन्यं काठिन्यं तदैव शिक्षातत्त्वविदां चेतो बलवदाचकर्ष। पञ्जाबीभाषा साहित्यविहीना भाषण एव स्थिता व्यवहाराशक्यतां प्रकटयन्ती न्यग्भावं गतासीत। हिन्दीभाषा तु नाममात्रेणाप्यज्ञाता हिन्दुष्वपि पत्रव्यवहारादौ नैजे कर्मणि एव क्वचिदेव प्रायुज्यत। राज्यतन्त्रे तु साऽसहाया वराकीव नैव पदं लेभे। संस्कृता वाक् पुनर्ब्राह्मणमुखेष्वेव यत्र तत्राश्रूयत, जन्मपत्रादौ वा ज्योतिर्विद्भिरलिख्यत। ब्रिटिशराज्यादपि प्राक् न्यायालयादिषु लब्धप्रतिष्ठा पारसीभाषा राज्यकर्म्मणि नियुक्ताऽऽसीत्। सभ्यसमाजे च लब्धप्रसारा पारसीपरिलालिता 'उर्दू' भाषैव यत्रतत्र सर्वत्र दृश्यते स्म। पारसीभाषाऽपि आंग्लैरवाञ्छनीयतयाऽनभिमताऽभूत्। अत आदौ तावत् आंग्लाः वर्षचतुष्टयात्मकेन (१८५१–१८५४) महता प्रयत्नेन न्यायालयादिषु पारसीस्थाने उर्दूभाषाम्, उच्चाधिकृतेषु राजपुरुषेषु चांग्लीं भाषां स्थापयामासुः। शिक्षाकर्मण्यपि उर्दूभाषाया एव प्रयोगस्तैः सर्वत्र विद्यालयेषु समादिष्टः।

ततश्च १८५४ तमे खीष्टाब्दे शिक्षाकार्यमर्थसचिवे (फाइनंशलकमिश्नर इति पदाधिकारिणि) श्रीमैक्लोडमहोदये संचक्राम। स च शिक्षारसिकस्तत्प्रचाराभिचिकीर्षुश्चासीत्।

अस्मिन्नेवाब्दे आंग्लीप्रचारकामाः प्रभवः शिक्षाप्रसारार्थं नीतित्रैविध्यं मन्त्रयामासुः। तच्च–

१ प्रतिप्रान्तमेकस्य शिक्षाविभागस्य स्वतन्त्ररूपेण पृथक् स्थापनम्।

२ परीक्षणोपाधिवितरणार्थमुपयुक्तस्थानेषु विश्वविद्यालयानां स्थापनम्।

३ लोकस्थापितेभ्यो विद्यालयेभ्यो राज्यकोषात् धनसाहाय्यदानम्।

इति त्रिमुखीं नीतिमाश्रित्य पञ्जाबप्रान्ते १८५९ तमे खीष्टाब्दे 'शिक्षाविभागस्य' पृथक् स्थापनाऽभूत्। ई. डी. आर्नेल्डमहाशयश्चास्याधिपतिर्न्ययुज्यत। भूमिकरस्य शततमो भागोऽस्य विभागस्य सञ्चालनार्थं स्वीकृतो बभूव। एवं वर्षद्वयेनैव ग्रामेषु ७०० विद्यालयाः स्थापिता अभूवन्, बहवश्च तदा वर्तमाना मिशनसंस्थासंस्थापिता विद्या-

लया राज्यद्रव्येण परिपुष्टिं जग्मुः। दिल्ली-लवपुर-रावलपिण्डीनगरेषु च शिक्षकशिक्षणाय त्रयो विद्यालयाः स्थापिताः।

१८६१ तमे खीष्टाब्दे लवपुरे गवर्नमैण्टविद्यालयस्य स्थापनमभूत्। अस्य च साधारणविद्यालय-( हाईस्कूल )चीफ्सूकालेजरूपं विभागद्वयमासीत। (परतस्तु चीफ्सूविद्यालयोऽपि स्वतन्त्ररूपेण पृथक् बभूव) १८६३ तमे खीष्टाब्दे लवपुरे, दिल्लीनगरे च गवर्नमैन्टकालेजाख्यमहाविद्यालययोः स्थापनं सञ्जातम्।

एवं गच्छति काले विद्यालयानां स्थापनायां सत्यामपि परीक्षाक्रमस्य किमपि सौकर्यं नासीत्। गवर्नमैण्टमहाविद्यालययोरध्यधीयानाः पञ्चनदीयाश्छात्राः कलिकाताविश्वविद्यालयस्य परीक्षाः ददुः। तच्च दूरवर्तित्वादत्यन्तं सुदुष्करं प्रयाससाध्यञ्च शिक्षोन्नत्यै नातीव प्रोत्साहकं बभूव। अथ च कलिकाताविश्वविद्यालयस्य पाठ्यविषयाः, पाठ्यक्रमः, परीक्षणशैली चांग्लीबाहुल्यात् ग्रन्थरटनमात्रपर्यवसायित्वाच्च पञ्चनदीयच्छात्रेभ्यो नातीवोपयुक्ताऽसिध्यत। प्रसुप्तशक्तिविकासो ज्ञानराशिविवर्द्धनमिति यत् शिक्षायाः परमोद्देश्यत्वेन स्वीक्रियते, तदुभयमपि तत्रत्यपाठ्यविषयैः परीक्षापद्धत्या च नालभ्यत।

अत्र प्रमाणत्वेन वयमुभयोर्गवर्नमैण्टमहाविद्यालययोर्विषये शिक्षाविभागस्य १८६६-७ तमस्य खीष्टाब्दस्य वार्षिकविवरणात् किञ्चिदुदाहरामः-तस्मिन् वर्षे खलु सप्तदशविद्यार्थिनः प्रथमां (एफ. ए.) ददुः। तेषु च केवलं चत्वार एव समुत्तीर्णाः। तेष्वपि लवपुरीयस्त्वेक एव, शेषास्तु दिल्लीविद्यालयीया आसन्। अत्रेदमपि स्मर्तव्यं नाम, यत् तदा गवर्नमैण्टविद्यालये पठन्तः सर्वेऽपि छात्राः प्रत्येकं द्वादश, सप्तदश वा रूप्यकाणि प्रतिमासं छात्रवृत्तित्वेनालभन्त। छात्रवृत्तिरहित एकोऽपि छात्रो नासीत्। शिक्षाव्ययोऽपि रूप्यकाणां द्वादशशती प्रतिवर्षं प्रतिच्छात्रं समभूत्। एवं प्रचुरधनव्ययेनापि शिक्षायाः समभीष्टा समुन्नतिर्नाजायत।

एवंविधामवनतिं विलोक्य स्वदेशमुन्निनीषवः सूक्ष्मविचारशालिनः पञ्चनदीयाः (केचिच्छिक्षातत्त्वविदो योरुपीयमहोदयाश्चापि) संभूयैवं व्यचारयन्-कलिकाताविश्वविद्यालयीयपरीक्षादानमेवास्मदीयच्छात्राणामवनतेर्हेतुः। तत्र च द्वारीभूतया आंग्लभाषया तत्रत्यपाठ्यविषयैश्च न पञ्चनदीयच्छात्रवर्गस्योपकारो विद्याप्राप्तौरुचिवर्धनं च संजायते। अज्ञातां वैदेशिकीमेकां भाषां द्वारीकृत्य शिक्षावितरणं नैव बुद्धिविकासकरं भवितुमर्हति। शिक्षा तु स्वदेशभाषयैव गृहीता बुद्धिं परिष्करोति, ज्ञानपिपासां च वर्द्धयति। कथन्नाम अज्ञातया भाषया सैवाज्ञाता भाषा पाठ्येत। एवं विचार्य ते सर्वेऽपि मिलित्वा शासकवर्गं स्वप्रान्ते एकं विश्वविद्यालयं स्थापयितुमभ्यर्थयामासुः। परं पञ्चनददेशस्य दौर्भाग्येन शासकवर्गस्य मतिरित्थमजायत—'अहो अयोग्या ह्येते पञ्चनदीयाश्छात्राः। एतस्मिन् प्रान्ते स्थापिते विश्वविद्यालये परीक्षाकाठिन्ये चापाकृते परीक्षाः समुत्तीर्यापि छात्रा मूर्खा एवावस्थास्यन्ते। एतेन च परीक्षागौरवं न्यग्भावं गमिष्यति, शिक्षाया हा-

निश्चापि भविष्यति ।' अतः शासकैः पूर्वोक्ताऽभ्यर्थना न समादृता ।

लवपुरीयगवर्नमैण्टमहाविद्यालयस्य मुख्याध्यापकः (प्रिंसिपल इति पदभाक्) शिक्षाविदामग्रगण्यः स्वनामधन्यः श्री डाक्टर-लाइटनरमहोदयः शासकवर्गस्येमां धारणां दृष्ट्वा सञ्जातरोषस्तद्विरोधे तीव्रतरमान्दोलनमेकमायोजयत् । सोऽपि देशभाषामार्गेणैव प्राच्यशास्त्राणामाधुनिकविज्ञानानां च शिक्षणस्य पक्षपाती आसीत् ।

आंग्लीमधीयानाश्छात्रा अपि स्वधर्मविमुखाः स्वसंस्कृतिं गृह्याचारांश्च परित्यजन्त एवादृश्यन्त । एतच्च सांस्कृतं दास्यं स्वदेशानुरागिषु भयमजनयत् । प्राच्यविद्यानां च ह्रासस्तैर्नासह्यत । तेऽपि संभूय स्वदेशभाषारक्षणे तत्प्रचारे च बद्धपरिकराः बभूवुः ।

डाक्टर-लाइटनरमहोदय एभिः सह मिलित्वा १८६५ तमे खीष्टाब्दे जनवरीमासस्य २१ तारिकायां 'अंजुमने-पंजाब' इत्याख्यामेकां समितिं स्थापितवान् । स्वयञ्चास्या मन्त्रिपदं स्वीचकार । अस्याः समितेः उद्देश्येषु-'प्राच्यविद्यानां पुनरुज्जीवनम्, देशभाषासाहित्यपरिवर्द्धनम्, पाश्चात्यविद्यानामपि देशभाषाद्वारेणैव शिक्षणम्' इत्येतानि प्रधानतयाऽगण्यन्त ।

अस्यां समितौ पञ्चनदीयाः प्रायः सर्वेऽपि गण्याः मान्याः विद्वांसो धनाढ्याः अभिजाताः रईसमहोदयाः राजानश्चापि संगता अभूवन् । अस्याश्च कार्यक्रम एवमासीत्—जनतासभानां संयोजनं तत्र च देशभाषापक्षस्य भाषणादिभिः परिपोषणम्, तत्सम्बन्धिप्रस्तावस्वीकरणम्, तेषां च शासकवर्गसविधे प्रेषणं तदभ्यर्थनादिकञ्च । अथ च वाचनालय-पुस्तकालयादीनां स्थापनं देशभाषायां च ग्रन्थलेखनं ग्रन्थान्तरानुवादाश्चापि समित्यानयाऽक्रियन्त । अमृतसर-गुरुदासपुर-रावलपिण्डीनगरेषु चाप्यस्याः शाखा अचिरेणैव स्थापिताः । संक्षेपतः सर्वस्मिन्नपि प्रान्ते बलवदान्दोलनं कृत्वा प्रभूतञ्च रोषराशिं संगृह्य प्रथम एव वर्षे इयं समितिर्लवपुरे एकं प्राच्यविद्यालयं स्थापयामास ।

अचिरेणैव महतीमिमामाशातीतां समुन्नतिं विलोक्य राजनीतिविशारदः पञ्चनदाधीश्वरः ( लैफ्टीनैण्टगवर्नरमहोदयः ) श्रीमैकलोडमहाशयः नीतिमत्तामाश्रित्य अस्याः समितेरुद्देश्यैः सह स्वाभिप्रायं संगमयाञ्चकार । तस्यैव वर्षस्य जूनमासे स शिक्षाविभागाधिपतये पत्रमेकं लिलेख । यस्मिन् देशभाषासाहित्योन्नत्यै अपेक्षितान् उपायान् पाश्चात्यसाहित्यस्य देशभाषाद्वारेण पाठनस्य च सम्भवनीयतां परिपप्रच्छ ।

ज्ञात्वेमं पत्रोदन्तं डा० लाइटनरमहोदयो लवपुरे, अमृतसरनगरे च महान्तं जनसङ्घं संयोज्य तत्र च राज्ञः, रईसमहाभागान् धनाढ्यान् शिक्षानुरागवतश्चाहूयैवं प्रास्तौत्-ल० गवर्नरमहोदयेन पृष्टस्य प्रश्नस्योत्तररूपेण वयमित्थं निवेदयामः--लवपुरे 'प्राच्यविश्वविद्यालय' एकः स्थाप्येत यत्र प्राच्या भाषा, प्राच्यं विज्ञानं प्राच्यं च साहित्यं पाठ्येत । यत्र च पुनः पाश्चात्यविज्ञानस्य सर्वोऽपि निष्कर्षः देशभाषयैव सर्वसाधारणगोचरीक्रियेत । अयञ्च प्रस्तावः सर्वसंमत्या

स्वीकृतो बभूव, परतश्च ल० गवर्नरमहोदयस्य सविधे प्रेषितोऽभूत् ।

लवपुरे एकस्य 'प्राच्यविश्वविद्यालय'-स्येयमायोजना केषाञ्चिद् आङ्गलमहोदयानामपि शुभाशंसामलभत । श्रीमान् ऐटांचसन महोदयोऽप्येनामन्वमन्यत । लारैंसमहोदयस्तु तदर्थं स्वभारतनिवासं यावत् रूप्यकाणां सहस्रद्वयं प्रतिवर्षं दातुं प्रतिशुश्राव । कपूरथलानरेशोऽपि प्रतिवर्षं सहस्रद्वयं मैकलोडमहोदयश्च सहस्रमेकं दातुं प्रतिजज्ञाते । अन्येऽपि धनाढ्याः प्रभूतमर्थं दातुं प्रतिशुश्रुवुः ।

एवं सर्वसम्मत्या स्वीकृतमपि 'प्राच्यविश्वविद्यालयस्य स्थापनं' भारत-सरकारानुज्ञां नैव लेभे । आंग्लीसमर्थकाः केऽपि प्राच्यविद्याप्रचारासहिष्णवः तत्र अनेकविधान् विघ्नान् उदपादयन् ।

ततो भूयः पूर्वतो द्विगुणे आन्दोलने कृते अन्ततः १८६९ तमे खीष्टाब्दे शासकमहोदयैः 'प्राच्यविश्वविद्यालय'स्थाने,'पंजाबयूनिवर्सिटीकालेज' इत्याख्यस्य महाविद्यालयस्य स्थापना समादिष्टा । अयञ्च महाविद्यालयः प्राच्यविद्यानां प्रचाराय देशभाषाणां च साहित्यवृद्धये, पाश्चात्यभाषाः, विज्ञानादिकञ्च यावच्छक्यं देशभाषाद्वारेणैव पाठयितुं स्वीकृतः स्थापितश्चाभूत् । शिक्षणकार्येण सहैव परीक्षणाधिकाराः अपि अस्मै दत्ताः, परमुपाधिवितरणाधिकारो नास्मै प्रदिष्टोऽभूत् ।

एवञ्चायं शासकस्वीकृतो विद्यालयः अञ्जुमनस्थापितं प्राक्तनं 'प्राच्यविद्यालयं' पुनरुज्जीव्य 'प्राच्यमहाविद्यालय' नाम्ना प्रतिष्ठापयामास । तत्र च तदा संस्कृतभाषा, अरबीभाषा, पारसीभाषा, गुरुमुखीभाषा, च पाठ्यते स्म । अस्यैव प्राच्यमहाविद्यालस्यैको विभागः 'लॉ-डिपार्टमैण्ट' इति प्रसिद्ध आसीत् । यत्र देशभाषामार्गेणैव 'व्यवहारधर्मस्य' शिक्षणमभूत । अपरश्च विभाग इञ्जनियराख्यः सब-ओवरसियरश्रेणीं देशभाषया शिक्षयामास । चिकित्साविभागोऽपि पृथक् आसीत् ।

एवं स्थापनायुगे 'लॉ-कालेज' आयुर्वैदिककालेज, यूनानीकालेज, इञ्जनीयरिङ्गकालेज, मैडीकलकालेज इत्यादीनां बहूनां महाविद्यालयानामाधारभूतो जनकोऽयमेव प्राच्यमहाविद्यालयः ।

ततो गच्छति काले 'उपाधिवितरणशक्यता'निमित्तमपि बलवदान्दोलनं जातम् । ततः १८८२ तमे खीष्टाब्दे 'पंजाबयूनीवरसिंटीकालेजाख्येयं संस्था उपाधिवितरणाधिकारान् प्राप्य पंजाबयुनिवर्सिटीनाम्ना समादिष्टा प्राप्तव्यवहारा च बभूव । तत्रापि प्राच्यविद्याप्रचारार्थं दत्तं धनं प्राच्यविद्याप्रचारे एव संलगतु इति कृत्वा पूर्वोक्ताधिकारवितरणात् प्राक् शासकवर्गैरयं समयोऽवश्यं पालनीयतया सुनिर्दिष्टः यत् विश्वविद्यालयाधिकारं प्राप्यापि 'प्राच्यमहाविद्यालयस्य' सुचरु संचालनं विधेयमिति । स चायं प्राच्यमहाविद्यालयो वस्तुगत्या पंजाबविश्वविद्यालयस्यापि जनकः यत्र सुदूरवर्तिभ्यो देशेभ्यः समागत्य समागत्य छात्रवर्गाः प्राच्यविद्यासंरक्षणे स्वजीवितं समुत्सृजन्ति पुण्यभाजश्च जायन्ते ।

सङ्केत आताहै कि शास्त्रार्थ में विजय प्राप्त करने वाले पण्डित का मित्र लोग स्वागत करते हैं—

सर्वे नन्दन्ति यशसागतेन
सभासाहेन सख्या सखायः।
किल्बिषस्पृत्पितुषणिर्ह्येषा-
मरं हितो भवति वाजिनाय ॥
(ऋ० १०. ७१. १०.)

विना शिक्षा प्राप्त किए, विना शास्त्रों का अध्ययन किए, शास्त्रार्थ करना असम्भव है, इस लिए शास्त्रार्थ की रीति से स्पष्ट है कि ऋग्वेद काल से ही प्राचीन भारत में शिक्षा पद्धति का प्रादुर्भाव हुआ। ऋग्वेद में स्पष्ट वर्णन मिलता है, जिससे सिद्ध है कि उस समय अध्ययन अध्यापन का कार्य होता था, और ब्राह्मण लोग व्रत को धारण करके पठन पाठन का काम करते थे—

अखखलीकृत्या पितरं न पुत्रो
अन्यो अन्यमुप वदन्तमेति। ऋ० ७.१०३.३.
संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः।
ऋ० ७.१०३.१.
'यदेषामन्यो अन्यस्य वाचं
शाक्तस्येव वदति शिक्षमाणः। ऋ०७.१०३.५.
समानं नाम बिभ्रतो विरूपाः
पुरुत्रा वाचं पिपिशुर्वदन्तः। ऋ ७.१०३.६.
ब्राह्मणासो अतिरात्रे न सोमे
सरो न पूर्णमभितो वदन्तः। ऋ०७.१०३.७.
ब्राह्मणासः सोमिनो वाचमक्रत
ब्रह्म कृण्वन्तः परिवत्सरीणम्। ऋ०७.१०३.८.

इन मन्त्रों को देखने से स्पष्ट है कि वर्ती विद्यार्थी शिक्षा ग्रहण करता हुआ, अपने गुरु को पिता के समान मानता हुआ, गुरु के पढाये हुए पाठको दोहराता हुआ, गुरु की आज्ञा के अनुसार आचरण करता है। इन मन्त्रों से प्राचीन भारत में शिक्षा-पद्धति का ऋग्वेद के काल से आरम्भ होना स्वयं सिद्ध है। इतिहास के अध्ययन से मालूम होता है कि भारतको छोडकर इस पृथिवी के किसी भी दूसरे देश वा जाति में इतने प्राचीन कालमें शिक्षा का प्रारम्भ नहीं हुआ। संसार में शिक्षा पद्धति का आरंभ सबसे पहले भारतवर्ष में ही हुआ।

अध्ययन, अध्यापन पठन, पाठन का क्रम जब बहुत देर तक होता रहताहै, तो इसका स्वाभाविक परिणाम यह होता है कि विशेषज्ञता (Specialisation) अर्थात् प्रत्येक विषय में प्रवीणता या पारावारीणता प्राप्त हो जाती है। जैसे न्याय के चिरकाल तक अध्ययन के विना नैयायिक, व्याकरण के चिरकाल तक अध्ययन के विना वैयाकरण इत्यादि नहीं बन सकते, इसके विपरीत यदि हम किसी देश या जाति में वैयाकरण नैयायिक इत्यादि कों का होना पाते हैं, तो यह उस देश या जाति में दीर्घ कालसे होनेवाले शिक्षाक्रम का सूचक है। निरुक्त में यास्काचार्य ने लिखा है कि वेद का विशेषज्ञ ही आदरणीय होता है—

"यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवर्यं वित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति" (नि० १ १६)

अथ च यास्काचार्य ने विशेषज्ञ सम्प्रदायों

का भी उल्लेख किया है —जैसे "ऐतिहासिकाः" नि० २.१६; १२.१, १०; 'दुहितृदायाद्यः' नि० ३.३, 'नैदानाः' नि० ६.६, ७.१२, 'नैरुक्ताः' नि० १.१२, २. १४,१६, ३. ८,१४, १९, ४.२४, ५. ११, ६. १, ३, ११, ७. ४, ५, ८. १४, ९. ४, ११. १६, २९, ३१, १२. १०, ४१, 'परिव्राजकाः' नि० २. ८, 'पूर्वे याज्ञिकाः' नि०७.२३,'याज्ञिकाः' नि० ५. ११; ७.४; ११. २९, ३१, ४२, ४३; 'वैयाकरणाः' नि० १. १२, ९. ५, इत्यादि। इन सम्प्रदायों के अतिरिक्त अपने अपने विषय में पारङ्गत कितने ही आचार्यों के नाम भी लिखे हैं, और उनके मत बहुमान के साथ उद्धृत भी किए हैं। जैसे—

आग्रायणः नि० १. ९, ६. १३, औदुम्बरायणः नि० १, १, औपमन्यवः नि० १.१, २. २, ६, ११, ३. ८, ११, १८, १९; ५.७, ६. ३०, १०. ८, और्णवाभः नि० २.२६, ६.१३, ७.१५, १२. १,१९, कात्थक्यः नि० ८. ५, ६, १०, १७, ९. ४१, ४२, कौत्सः नि० १. १५, क्रौष्टुकिः नि० ८. २, गार्ग्यः नि० १. ३, १२, ३. १३, गालवः नि० ४. ३, चर्मशिराः नि०३. १५, तौटिकिः नि० ४. ३,५. २७, वार्ष्यायणिः १. २, शतबलाक्षः नि० ११. ६, शाकटायनः नि० १. ३, १२, १३, शाकपूणिः नि० २. ८,३. ११, १३, १९, ४. ३, १५, ५. ३, १३, २८, ७. १४, २३, २८, ८.२, ५, ६,७,१०, १४, १७, १८, १९, १२. १९, ४०, शाकल्यः नि० ६. २८, स्थौलाष्ठीविः नि० ७. १४, १०. १, इत्यादि।

इस प्रकार के विशेषज्ञ सम्प्रदायों तथा भूयोविद्य विद्वानों के उल्लेख से स्पष्ट है कि यास्काचार्य के समय से बहुत काल पहले से ही अध्ययन, अध्यापन का क्रम चला आरहा था। हमारे मत में ऋग्वेद में इस प्रकार की (Specialisation) अर्थात् किसी एक विषय में धुरीणता प्राप्त करना पाया जाता है। इस बात की पुष्टि में हम नीचे लिखे मन्त्रों को उद्धृत करते हैं—

ऋचां त्वः पोषमास्ते पुपुष्वान्<br>गायत्रं त्वो गायति शक्वरीषु।<br>ब्रह्मा त्वो वदति जातविद्यां<br>यज्ञस्य मात्रां वि मिमीत उ त्वः॥

ऋ० १०.७१.११.

इस मन्त्र में होता, अध्वर्यु, उद्गाता तथा ब्रह्मा नाम के ऋत्विजों के कर्म का दिग्दर्शन कराया गया है। अर्थात् ऋग्वेद, यजुर्वेद तथा सामवेद के विशेषज्ञ उस समय में भी पैदा होने लग गये थे, प्रत्येक वेद में Specialisation विशेषज्ञता अथवा पारावारीणता होने लग गई थी। इससे भी भारत में शिक्षा-पद्धति का प्रारम्भ ऋग्वेद के समकालिक ही अथवा उससे भी पूर्व सिद्ध होता है।

बीसवीं शताब्दी वैज्ञानिक युग है। योरुपने आश्चर्य जनक उन्नति की है। पाश्चात्य विद्वानों के शिक्षा सम्बन्धी विचार बडे प्रौढ हैं। इङ्गलेण्ड, फ्रान्स, जर्मनी, वेल्जियम, नार्वे, स्वीडन, होलेण्ड, डेनमार्क इत्यादि देशों में ९० प्रतिशत से अधिक स्त्री

पुरुष शिक्षित हैं। इस प्रशंसनीय परिणाम का मूलकारण है—निश्शुल्क और अनिवार्य प्रारम्भिक शिक्षा। वहाँ चौदह वर्ष की आयु तक प्रत्येक बालक और बालिका के लिये पाठशाला में शिक्षाग्रहण करना अनिवार्य है। बालक और बालिकाओं से प्रारम्भिक शिक्षाके लिए एक पैसा भी शुल्क नहीं लिया जाता। यदि कोई माता पिता अपने बालक वा बालिका को पाठशाला में नहीं भेजते, अथवा १४वर्ष से पहले पाठशाला से उठा लेते हैं, तो वे उस प्रकार से राज्य की ओर से दण्डनीय हैं,जिस प्रकार क्रूर कर्मकारी चोर इत्यादि। इस निश्शुल्क और अनिवार्य प्रारम्भिक शिक्षा के लिए प्रत्येक देश के राज्य-शासन-अधिकारियों को प्रतिवर्ष लाखों रुपए खर्च करने पडते हैं। जो कार्य बीसवीं शताब्दी के वैज्ञानिक युग में उन्नत पाश्चात्य देशों ने लाखों रुपए खर्चकरने के पश्चात् किया है, वही कार्य प्राचीन भारत में राज्य की तरफ से एक पैसा भी खर्च किए विना शिक्षा के क्षेत्र में किया गया था। योरुप के देशों में केवल प्रारम्भिक शिक्षा ही निःशुल्क है, प्राचीन भारत में न केवल प्रारम्भिक शिक्षा ही,अपितु समावर्तन अर्थात् विद्याव्रत समाप्ति यानी Graduation तक सारी की सारी शिक्षा निश्शुल्क थी, अर्थात् समावर्तन संस्कार के समय तक विद्यार्थी को न केवल अपनी शिक्षाके लिए एक पैसा भी न देना पड़ता था, अपि तु भोजन या रहने सहने के लिए भी कुछ न देना पड़ता था, प्रत्युत विद्या वेचना पातक समझा जाता था। दूसरी बात यह कि विद्यार्थियों की Graduation पर्यन्त की इस निश्शुल्क शिक्षा के लिए राज्य को भी एक पैसा खर्च नहीं करना पड़ता था। किसी भी राज्य के Budget अथवा व्यय विनियोग में शिक्षा के लिए कुछ भी धनराशि नियत नहीं की जाती थी। राज्य पर शिक्षा का तनिक भी भार न था, इसलिए राज्य परिवर्तन से शिक्षा पद्धति पर कुछ भी प्रभाव न पड़ता था। इतिहास के अध्ययन से पता चलता है कि प्रभावशाली मुसलमान बादशाह मसजिदों के साथ मदरसे और मकतब अरबी फारसी तथा कुरान पढाने के लिए खोलते थे, और उन मदरसों तथा मकतबों पर प्रचुर धनराशि का व्यय करते थे। इस प्रकार शिक्षा राज्य-शासन का एक विभाग बना दिया जाता था। इसका परिणाम यह था कि उस प्रभावशाली तथा धनाढय व्यक्ति की मृत्यु हो जाने पर, अथवा राज्य परिवर्त्तन होने पर वे मदरसे और मकतब भी नष्ट हो जाते थे। अध्यापक वर्गको जब तक राज्यकी ओर से वेतन मिलता रहता वे अध्यापन का कार्य करते रहते थे, जब वेतन बन्द हो जाता था, तो वे अध्यापन के कार्य को छोड देते थे। इस प्रकार उनकी शिक्षा पद्धति स्थायी रूप धारण न कर सकी। इसके विपरीत भारत में शिक्षा को राज्य-शासन का एक विभाग नहीं बनाया गया। अध्यापक वर्ग राज्य कर्मचारी न थे। उनको राज्य की ओर से कोई वेतन न मिलता था। इस लिए प्रभावशाली धनाढय राजाओं की मृत्यु तथा राज्य विप्लव से अध्यापकों तथा शि

क्षा-प्रणाली पर कुछ भी प्रभाव न पड़ता था। शिक्षा ज्यों की त्यों जारी रहती थी।

दूसरी बात यह है कि मुसलमानों में शिक्षा को अनिवार्य नहीं बनाया गया। शिक्षा के विना भी एक व्यक्ति मुसलमान रह सकता था। उनमें शिक्षा-ग्रहण करना धार्मिक दृष्टि से अनिवार्य न था। परन्तु 'स्वाध्यायोऽध्येतव्यः' इत्यादि स्वाध्याय विधि से यह प्रमाणित होता है कि प्राचीन भारत में शिक्षा ग्रहण करना प्रत्येक आर्य पुरुष के लिए अनिवार्य था। उपनयन संस्कार इस सिद्धान्त का प्रतीक है। उपनयन संस्कार के विना कोई भी आर्य बालक द्विज नहीं बन सकता था, उसके द्विजत्व के लिए उपनयन अनिवार्य था। उपनयन का अर्थ है अध्ययन, अर्थात् वेदाध्ययन के बिना कोई आर्य बालक आर्य और द्विज नहीं बन सकता था। इस लिए प्राचीन भारत में आर्य पुरुषों में शिक्षितों की संख्या शत प्रति शत अवश्य रही होगी। उपनयन का अर्थ अध्यापनद्वारा आचार्यकरण है, यह विषय भगवान् पाणिनि के 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः( १,३,३६ ) इस सूत्र से स्पष्ट है। श्रीभट्टोजिदीक्षित ने इस सूत्र के 'सम्मानन तथा आचार्यकरण' इन दो अंशों का व्याख्यान इस प्रकार किया है —

'शास्त्रं नयते—शास्त्रस्य सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन च शिष्यसम्माननं फलितम्। माणवकमुपनयते- विधिनात्मसमीपं प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते'। अर्थात् आचार्य वेदादि शास्त्रों के रहस्यों को उपनीत अत एव द्विजबालकों के हृदयङ्गत कराता है। इस से द्विज बालकों में भावी सम्मानका आधान होता है। उपनयन विधि के अनन्तर द्विज बालकों में वेदादि शास्त्रों के अध्ययन की अधिकारिता उत्पन्न करते हुये आचार्य उन्हें अपने समान आचार्य वनाते हैं। यही बात 'सर्वतो जयमन्विच्छेत्पुत्रात् शिष्यात्पराजयम्' इस आभाणक से भी पुष्ट होती है। 'पुत्रीयति च्छात्रम्' इत्यादि प्रयोगों से अध्याप्य तथा अध्यापकों में न केवल पारस्परिक घनिष्ठता ही सिद्ध होती है, अपितु हमारे आचार्यों ने इस गुरु शिष्य-सम्बन्ध को वंश तक स्वीकार किया है— 'ऋतो विद्यायोनिसम्बन्धेभ्यः 'आनङ् ऋतो द्वन्द्वे' ( अष्टा० ६,३, २३-२५ ) एवम् 'संख्या वंश्येन' ( अष्टा० २, १, १९, ) ये पाणिनीय सूत्र इस आदर्श के साक्षी हैं। अन्तिम सूत्रकी व्याख्या करते हुए लिखा गया है 'वंशो द्विधा, विद्यया जन्मना च' इस में भी मार्मिक दृष्टि से विवेचन करने पर विद्या प्रयुक्त वंश ही अधिक अभ्यर्हित प्रतीत होता है, अत एव उसका प्रथम उपादान किया गया है। आपस्तम्ब भी इसे स्वीकार करते हैं- 'यस्माद्धर्ममाचिनोति, स आचार्यः। तस्मै न द्रुह्येत्कदाचन। स हि विद्यातस्तं जनयति। तच्छ्रेष्ठं जन्म। शरीरमेव मातापितरौ जनयतः'। निरुक्त में भी कहा है 'आचार्यः आचारं ग्राहयति। आचिनोत्यर्थान्, आचिनोति बुद्धिमिति वा ( १, ४. )

उपनयन अथवा अध्ययन प्राचीन भारत में अनिवार्य था यह संस्कृत साहित्य के देखने से स्पष्ट सिद्ध है। एक जवाला नाम की स्त्री अपनी युवावस्था में इधर उधर फिरा करती थी, उसके सत्यकाम नाम पुत्र उत्पन्न हुआ। उस स्त्री को यह भी ज्ञात न था कि यह किसका पुत्र है। ऐसी स्त्रीकी सन्तान भी शिक्षाग्रहण करने के लिए गुरु के पास गई, और उसने नियमपूर्वक अध्ययन किया। यह कथा उपनिषदों में आती है। वह इस प्रकार है—

सत्यकामो ह जावालो जवालां मातरमामन्त्रयाञ्चक्रे- ब्रह्मचर्यं भवति ! विवत्स्यामि,किंगोत्रोऽहमस्मीति (छान्दोग्योपनिषद् ४.४.१)

'तँ् होवाच किंगोत्रो नु सोम्यासीति। स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरँ् सा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे, साहमेतन्न वेद यद्गोत्रस्त्वमसि,जवाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽ हँ् सत्यकामो जावालोऽस्मि भो इति —

(छान्दोग्योपनिषद् ४.४.३.)

ऐसी माता के ऐसे बालक का नियमपूर्वक गुरु के पास ब्रह्मचर्यव्रतधारण करना द्विजत्व तथा आर्यत्व के लिए शिक्षा का अनिवार्य होना स्पष्ट करता है। उपनिषद् में यह भी बतलाया गया है कि सत्यकाम जावाल शिक्षा समाप्त कर स्वयं अध्यापक बना,और अध्यापन का कार्य करने लगा—

उपकोसलो ह वै कामलायनः सत्यकामे जावाले ब्रह्मचर्यमुवास। तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार' (छान्दोग्योपनिषद् ४.१०.१.)

शिक्षा की अनिवार्यता छान्दोग्योपनिषद् के निम्नलिखित अवतरण से भी प्रमाणित होती है—

'श्वेतकेतुर्हारुणेय आस तँ् ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति, ६.१.१.

इसमें स्पष्ट कहा गया है कि हमारे कुल में ऐसा कोई भी नहीं हुआ जिसने स्वाध्याय न किया अर्थात् ब्रह्मचर्यव्रतधारण कर शिक्षा न ग्रहण की हो।

यही बात कविकुलशिरोमणि कालिदास ने रघुवंश में रघुवंशीय भूपालों के विषय में कही है। बालकपन में विद्याभ्यास उनके लिए अनिवार्य था—

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्॥ १.५
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।
यथापराधदण्डानां यथाकालप्रबोधिनाम्॥ १.६
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् १.७.
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥ १.८
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् १.९

इसी विषयका विश्लेषण विद्वच्चक्रचूडामणि श्रीश्रीहर्ष ने नैषधीयचरित में बड़ी रोचक तथा आलङ्कारिक भाषा में किया

है, जिससे उस समय के चक्रवर्ती राजाओं के निजी ज्ञान की परा काष्ठा का अनुमान लगाया जासकता है—

अधीतिबोधाचरणप्रचारणै-
र्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतः स्वयं,
न वेद्मि विद्यासु चतुर्दशस्वयम् ॥१.४॥

अमुष्य विद्या रसनाग्रनर्त्तकी,
त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथग्जयश्रियाम् ॥१.५॥

दिगीशवृन्दांशविभूतिरीशिता,
दिशां स कामप्रसरावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां
निजत्रिनेत्रावतरत्ववेदिकाम् ॥१.६॥

अजस्रमभ्याससुपेयुषा समं
मुदैव देवः कविना बुधेन च ।
दधौ पटीयान् समयं नयन्नयं
दिनेश्वरश्रीरुदयं दिने दिने ॥१.७॥

जगज्जयं तेन च कोषमक्षयं
प्रणीतवान शैशवशेषवानयम् ।
(सखा रतीशस्य ऋतुर्यथावनं
वपुस्तथालिङ्गदथास्य यौवनम् )॥१.१८॥

इसके साथ ही साथ श्रीहर्ष ने संस्कृत की सार्वत्रिकता तथा व्यावहारिकता पर भी एक श्लोक लिखा है——

अन्यो ऽन्यभाषानववोधभीतेः
संस्कृत्रिमाभिर्व्यवहारवस्तु ॥१०।३४॥

कादम्बरी कथा में भी यही क्रम पाया जाता है कि राजपुत्रों को भी बाल्यकाल में गुरुकुलों में जाना होता था और सम्पूर्ण शास्त्रों का अध्ययन कर लेने पर समावृत्त होकर उसी समय में दिग्विजय यात्रा करनी होती थी। तदनन्तर उनके हाथों में शासन-सूत्र समर्पित कर दिया जाता था!

जातिनिर्माण में, सभ्यता, संस्कृति के विकास में विद्या का अभ्यास एक मूलस्तम्भ का काम देता है। ब्रह्मचर्य की प्राचीन वैदिक वाङ्मय में बहुत महिमा वर्णित की गई है—

'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति। प्रथमस्तप एव। द्वितीयो ब्रह्मचार्याचार्यकुलवासी। तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्। सर्व एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति'(छान्दग्योपनिषद्.२.२३.१)

इसीलिए ब्रह्मचारी की भी प्रशंसा पाई जाती है। अथर्ववेद में ब्रह्मचारी के विषय में प्राचीनतम अवतरण मिलता है। वह यहां उद्धृत कियाजाता हैं:—

ब्रह्मचारीष्णंश्चरति रोदसी उभे
तस्मिन्देवाः संमनसो भवन्ति।
स दाधार पृथिवीं दिवञ्च
स आचार्यं ? तपसा पिपर्ति ॥ १ ॥

इयं समित्पृथिवी द्यौर्द्वितीयो-
तान्तरिक्षं समिधा पृणाति।
ब्रह्मचारी समिधा मेखलया-
श्रमेण लोकांस्तपसा पिपर्ति ॥ ४ ॥

ब्रह्मचार्येति समिधा समिद्धः
कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः।
स सद्य एति पूर्वस्मादुत्तरं समुद्रं
लोकान्संगृभ्य मुहुराचरिक्रत ॥६॥

आचार्यस्ततक्ष नभसी उभे इमे
उर्वी गम्भीरे पृथिवीं दिवञ्च।
ते रक्षति तपसा ब्रह्मचारी
तस्मिन्देवाः सम्मनसो भवन्ति॥८॥
इमां भूमिं पृथिवीं ब्रह्मचारी
भिक्षामा जभार प्रथमो दिवं च।
ते कृत्वा समिधावुपास्ते
तयोरापिता भुवनानि विश्वा॥ ९॥
( अथर्ववेद.११.५ १,४,६,८,९ )

प्रत्येक आर्य के लिए आचार्यकुल में नियमपूर्वक विद्याभ्यास करना परम आवश्यक था इसलिए आपस्तम्ब ने कहा है—
'उपेतस्याचार्यकुले ब्रह्मचारिवासः' (१.१)

पहले पहल ब्रह्मचारी समिधा हाथ में लेकर गुरु के पास जाता था। यह विधान शतपथ ब्राह्मण में दृष्टिगोचर होता है—

'तँ ह तत एव समित्पाणिः प्रतिचक्रम उप त्वायानीति। किमध्येष्यमाण इति। यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति। स होवाचानुपेतायैव त एनान्ब्रवाणीति'।
( शतपथब्राह्मण ११.४.१.९ )

एक दूसरे स्थल में अधिक खोल कर कहा गया है।

'ब्रह्मचर्यमागामित्याह। ब्रह्मण एवैतदात्मानं निवेदयति। ब्रह्मचार्यसानीत्याह ब्रह्मण एवैतदात्मानं परिददात्यथैनमाह को नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनं तत्कृत्वोपनयते' (शतपथब्रा० ११.५.४.१)

उपनयन विधि का सविस्तर वर्णन गौतम ने इस प्रकार किया है—

पाणिना सव्यमुपसङ्गृह्यानङ्गुष्ठमधीहि भो इत्यामन्त्रयेद् गुरुं तत्र चक्षुर्मनःप्राणोपस्पर्शनं दर्भैः॥

प्राणायामास्त्रयः पञ्चदशमात्राः॥
प्राक्कूलेष्वासनं च॥
ॐ पूर्वा व्याहृतयः पञ्च सत्यान्ताः॥
गुरोः पादोपसङ्ग्रहणं प्रातः॥
ब्रह्मानुवचने चाऽऽद्यन्तयोः॥
अनुज्ञात उपविशेत्प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा सावित्री चानुवचनम्॥
आदितो ब्रह्मण आदाने॥
ॐ कारोऽन्यत्रापि॥
गौतम १.४६

उपनयन विधि का गौतम से भी प्राचीन उल्लेख शतपत ब्राह्मण में मिलता है। वह इस प्रकार है:— शतपथ ११.५.४.

ब्रह्मचर्यमागामित्याह। ब्रह्मणऽएवैतदात्मानं निवेदयति ब्रह्मचार्यसानीत्याह ब्रह्मणऽएवैतदात्मानं परिददात्यथैनमाह को नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनं तत्कृत्वोपनयते॥ १॥

अथास्य हस्तं गृह्णाति। इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासावित्येते वै श्रेष्ठे वलिष्ठे देवते एताभ्यामेवैनँ श्रेष्ठाभ्यां वलिष्ठाभ्यां देवताभ्यां परिददाति तथा हास्य ब्रह्मचारी न कांचनार्तिमार्छति न स य एवं वेद॥ २॥

अथैनं भूतेभ्यः परिददाति। प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामि॥३॥

है, जिससे उस समय के चक्रवर्ती राजाओं के निजी ज्ञान की परा काष्ठा का अनुमान लगाया जासकता है—

अधीतिबोधाचरणप्रचारणै -
दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतः स्वयं,
न वेद्मि विद्यासु चतुर्दशस्वयम् ॥१.४॥

अमुष्य विद्या रसनाग्रनर्त्तकी,
त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथग्जयश्रियाम् ॥१.५॥

दिगीशवृन्दांशविभूतिरीशिता,
दिशां स कामप्रसरावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां
निजत्रिनेत्रावतरत्ववेदिकाम् ॥१.६॥

अजस्रमभ्यासमुपेयुषा समं
मुदैव देवः कविना बुधेन च ।
दधौ पटीयान् समयं नयन्नयं
दिनेश्वरश्रीरुदयं दिने दिने ॥१.१७॥

जगज्जयं तेन च कोषमक्षयं
प्रणीतवान् शैशवशेषवानयम् ।
(सखा रतीशस्य ऋतुर्यथावनं
वपुस्तथालिङ्गदथास्य यौवनम् )॥१.१८॥

इसके साथ ही साथ श्रीहर्ष ने संस्कृत की सार्वत्रिकता तथा व्यावहारिकता पर भी एक श्लोक लिखा है——

अन्यो ऽन्यभाषानवबोधभीतेः
संस्कृत्रिमाभिर्व्यवहारवत्सु ॥१०।३४॥

कादम्बरी कथा में भी यही क्रम पाया जाता है कि राजपुत्रों को भी बाल्यकाल में गुरुकुलों में जाना होता था और सम्पूर्ण शास्त्रों का अध्ययन कर लेने पर समावृत्त होकर उसी समय में दिग्विजय यात्रा करनी होती थी। तदनन्तर उनके हाथों में शासन-सूत्र समर्पित कर दिया जाता था!

जातिनिर्माण में, सभ्यता, संस्कृति के विकास में विद्या का अभ्यास एक मूलस्तम्भ का काम देता है। ब्रह्मचर्य की प्राचीन वैदिक वाङ्मय में बहुत महिमा वर्णित की गई है—

'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति। प्रथमस्तप एव। द्वितीयो ब्रह्मचार्याचार्यकुलवासी। तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्। सर्व एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति'(छान्दोग्योपनिषद्.२.२३.१)

इसीलिए ब्रह्मचारी की भी प्रशंसा पाई जाती है। अथर्ववेद में ब्रह्मचारी के विषय में प्राचीनतम अवतरण मिलता है। वह यहां उद्धृत कियाजाता हैः—

ब्रह्मचारीष्णंश्चरति रोदसी उभे
तस्मिन्देवाः संमनसो भवन्ति ।
स दाधार पृथिवीं दिवञ्च
स आचार्यं १ तपसा पिपर्ति ॥ १ ॥

इयं समित्पृथिवी द्यौर्द्वितीयो-
तान्तरिक्षं समिधा पृणाति ।
ब्रह्मचारी समिधा मेखलया-
श्रमेण लोकांस्तपसा पिपर्ति ॥ ४ ॥

ब्रह्मचार्येति समिधा समिद्धः
कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः।
स सद्य एति पूर्वस्मादुत्तरं समुद्रं
लोकान्संगृभ्य मुहुराचरिक्रत् ॥६॥

आचार्यस्ततक्ष नभसी उभे इमे
उर्वी गम्भीरे पृथिवीं दिवञ्च।
ते रक्षति तपसा ब्रह्मचारी
तस्मिन्देवाः सम्मनसो भवन्ति॥८॥
इमां भूमिं पृथिवीं ब्रह्मचारी
भिक्षामा जभार प्रथमो दिवं च।
ते कृत्वा समिधावुपास्ते
तयोरापिता भुवनानि विश्वा॥ ९॥
( अथर्ववेद.११.५ १,४,६,८,९ )

प्रत्येक आर्य के लिए आचार्यकुल में नियमपूर्वक विद्याभ्यास करना परम आवश्यक था इसलिए आपस्तम्ब ने कहा है—
'उपेतस्याचार्यकुले ब्रह्मचारिवासः' (१,१)
पहले पहल ब्रह्मचारी समिधा हाथ में लेकर गुरु के पास जाता था। यह विधान शतपथ ब्राह्मण में दृष्टिगोचर होता है—

'तँ ह तत एव समित्पाणिः प्रतिचक्रम उप त्वायानीति। किमध्येष्यमाण इति। यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति। स होवाचानुपेतायैव त एनान्ब्रवाणीति'।
( शतपथब्राह्मण ११,४.१.९ )

एक दूसरे स्थल में अधिक खोल कर कहा गया है।

'ब्रह्मचर्यमागामित्याह। ब्रह्मण एवैतदात्मानं निवेदयति। ब्रह्मचार्यसानीत्याह ब्रह्मण एवैतदात्मानं परिददात्यथैनमाह को नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनं तत्कृत्वोपनयते'(शतपथब्रा०११.५.४.१)
उपनयन विधि का सविस्तर वर्णन गौतम ने इस प्रकार किया है—

पाणिना सव्यमुपसङ्गृह्यानङ्गुष्टमधीहि भो इत्यामन्त्रयेद् गुरुं तत्र चक्षुर्मनःप्राणोपस्पर्शनं दर्भैः॥

प्राणायामास्त्रयः पञ्चदशमात्राः॥
प्राक्कूलेष्वासनं च॥
ॐ पूर्वा व्याहृतयः पञ्च सत्यान्ताः॥
गुरोः पादोपसङ्ग्रहणं प्रातः॥
ब्रह्मानुवचने चाऽऽद्यन्तयोः॥
अनुज्ञात उपविशेत्प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा सावित्री चानुवचनम्॥
आदितो ब्रह्मण आदाने॥
ॐ कारोऽन्यत्रापि॥
गौतम १.४६

उपनयन विधि का गौतम से भी प्राचीन उल्लेख शतपत ब्राह्मण में मिलता है। वह इस प्रकार है:— शतपथ ११.५.४.

ब्रह्मचर्यमागामित्याह। ब्रह्मणऽएवैतदात्मानं निवेदयति ब्रह्मचार्यसानीत्याह ब्रह्मणऽएवैतदात्मानं परिददात्यथैनमाह को नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनं तत्कृत्वोपनयते॥ १॥

अथास्य हस्तं गृह्णाति। इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासावित्येते वै श्रेष्ठे वलिष्ठे देवते एताभ्यामेवैनँ श्रेष्ठाभ्यां वलिष्ठाभ्यां देवताभ्यां परिददाति तथा हास्य ब्रह्मचारी न कांचनार्तिमार्छति न स य एवं वेद॥ २॥

अथैनं भूतेभ्यः परिददाति। प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामि ॥३॥

अद्भ्यस्त्वौषधीभ्यः परिददामीति। . द्यावा-पृथिवीभ्यां त्वा परिददामीति .. विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति ...॥ ४ ॥

ब्रह्मचार्यसीत्याह... अपोऽशानेत्यमृतं वाऽआपोऽमृतमशानेत्येवैनं तदाह कर्म कुर्विति ......समिधमाधेहि ... मा सुषुप्था इति अपोशानेत्यमृतं वाऽआपोऽमृतमशानेत्येवैनं तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति ॥५॥ अथास्मै सावित्रीमन्वाह—॥ ६ ॥

आधुनिक पाश्चात्य शिक्षकों का सिद्धान्त है कि विद्यार्थियों को शारीरक दण्ड ( Corporeal Punishment ) नहीं देना चाहिये। यह प्रौढ विचार समझा जाता है, और शिक्षाविषयक नवीनतम आविष्कार है। इसी सिद्धान्त से मिलता जुलता प्राचीन भारत के शिक्षकों का भी विचार था। आपस्तम्ब ने कहा हैः— अभित्रास उपवास-उदकोपस्पर्शनम दर्शनमिति दण्डा यथामात्र-मानिवृत्तेः। ( आपस्तम्ब १. २. )। योरुप के स्कूलों में जब किसी शरारती लड़के को दण्ड देना पडे तो थप्पड़ या बेंत लगाना या कान पकडवाना इत्यादि नहीं होता। वहां दण्ड होता है छुट्टी न देना, खेलों में सम्मिलित न होने देना, घरका काम अधिक देदेना या स्कूल के बन्द होजाने पर घर न जाने देना इत्यादि। आपस्तम्ब का नियम भी उसी दृष्टि से और उसी भावसे प्रेरित होकर बनाया गया है।

गौतम ने भी कहा हैः—शिष्यशिष्टिरवधेन। अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्। अन्येन घ्नन् राज्ञा शास्यः। ( गौतम २. ४२. ४. ) यदि मारने की आवश्यकता हो तो छोटी रस्सी या बांस के टुकडे से मारना चाहिए। किसी अन्य प्रकार से मारना गर्ह्य तथा दण्डय था।

इसी बात को मनु ने स्पष्टतया बतलाया है—

भार्या पुत्रश्च दासश्च प्रेष्यो भ्राता च सोदरः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्विषम्॥
( मनु ८.२९९,३०० )

उत्तम अङ्ग पर प्रहार सर्वथा परिवर्जित है। इस प्रकार प्राचीन भारत तथा आधुनिक पाश्चात्य शिक्षकों के विचार इस विषय में आश्चर्यजनक समानता रखते हैं।

लेख लम्बा होगया है, इस लिए शिक्षा सम्बन्धी अन्य विषयों को हम छोडते हैं, फिर कभी अवसर मिलने पर उन पर लिख देंगे। अब एक ही बात को लिखकर इस लेख को समाप्त करते हैं। वह बात है अध्ययन के विषय अर्थात् किस २ विषय का विद्याभ्यास किया जाता था। यह भी विषय लम्बा है इस लिए अपनी ओर से कुछ टीका टिप्पणी न कर केवल शास्त्रों के अवतरणों द्वारा ही संक्षिप्त विवरण दिया जायगा—

'भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्य-मुवास। तँह जीर्णिं स्थविरँ शयानम् इन्द्र उपव्रज्योवाच। भरद्वाज! यत्ते चतुर्थ-

मायुर्दद्याम। किमेनेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच ॥ ३ ॥

तँ ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषाँ हैकैकस्मान् मुष्टिमाददे। स होवाच भरद्वाजेत्यामन्त्र्य,वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयं वै सर्वविद्य ति ॥ ४ ॥

य एवं वेद एषो एव त्रयी विद्या ॥५॥

( तैत्तिरीयब्राह्मण ३.१०,११ ३ )

स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूँषि सामानीति ( छान्दोग्य ६.७.२ )

द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत्। प्रतिद्वादश वा सर्वेषु। ग्रहणान्तं वा।

( गौतम २.४५, ७ )

अधीयीत छन्दांसि ( गौतम १६. २ )

स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्यो महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि। (बृहदारण्यक उप०२.४.१०)

त्रय्यामान्वीक्षिक्यां वाऽभिविनीतः।

( गौतम ११ ३. )

तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम्। (गौतम११.१९.)

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति विद्याः। त्रयीवार्त्ता दण्डनीतिश्चेति मानवाः-त्रयी विशेषो ह्यान्वीक्षिकीति। वार्त्ता दण्डनीतिश्चेति बार्हस्पत्याः-संवरणमात्रं हि त्रयी लोकयात्राविद इति। दण्डनीतिरेका विद्येत्यौशनसाः-तस्यां हि सर्वविद्यारम्भाः प्रतिबन्धा इति।

चतस्र एव विद्या इति कौटिल्यः। ताभिर्धर्मार्थौ यद्विद्यात्तद् विद्यानां विद्यात्वम्। सांख्यं योगो लोकायतं चेत्यान्वीक्षिकी। धर्म्माधर्मौ त्रय्याम्। अर्थानर्थौ वार्तायाम्। नयानयौ दण्डनीत्याम्। बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति। व्यसनेऽभ्युदये च बुद्धिमवस्थापयति। प्रज्ञावाक्याक्रियावैशारद्यञ्च करोति।

प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम्।
आश्रयस्सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥

( अर्थशास्त्र २ )

तस्माद्दण्डमूलास्तिस्रो विद्याः। विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः। कृतकस्वाभाविकश्च विनयः। क्रिया हि द्रव्यं विनयति नाद्रव्यम्। शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्। विद्यानान्तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च। वृत्तचौलकर्मा लिपिं संख्यानञ्चोपयुञ्जीत।

वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः। वार्तामध्यक्षेभ्यः। दण्डनीतिं वक्तृप्रयोक्तृभ्यः। ब्रह्मचर्यं चाषोडशाद्वर्षात्। अतो गोदानं दारकर्म च।

अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद्विनयस्य। पूर्वमहर्भागं हस्त्यश्वर-

थप्रहरणविद्यासु विनयं गच्छेत् । पश्चिममितिहासश्रवणे । पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहासः । शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यात् । अगृहीतानामाभीक्ष्ण्यश्रवणं च । श्रुताद्धि प्रज्ञोपजायते प्रज्ञया योगो योगादात्मवत्तेति विद्यासामर्थ्यम् ।

विद्याविनीतो राजा हि प्रजानां विनये रतः ।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः ॥

( अर्थशास्त्र ५ )

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥

( मनु ७ ,४३ )

पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां च अभिविनीतमापदां दैवमानुषीणाम् । अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत ।

तमाचार्यं शिष्यः पितरं पुत्रो भृत्यः स्वामिनमिव चानुवर्तेत । ( अर्थशास्त्र ९ १७ )

शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः ।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ॥

( मनु १०,७९ )

न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन ॥
॥ ३२८ ॥

मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च ।
गन्धानां च रसानां च विद्यादर्घबलाबलम् ॥
॥ ३२९ ॥

बीजानामुप्तिविच्च स्यात्क्षेत्रदोषगुणस्य च ।
मानयोगं च जानीयात्तुलायोगांश्च सर्वशः ॥
॥ ३३० ॥

सारासारं च भाण्डानां देशानां च गुणागुणान् ।
लाभालाभं च पण्यानां पशूनां परिवर्धनम् ॥ ३३१

भृत्यानां च भृतिं विद्यात् भाषाश्च विविधा नृणाम् ।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ॥ ३३२

( मनु अध्याय ९ )

प्रदेष्टारस्त्रयस्त्रयो वामात्याः कण्टकशोधनं कुर्युः
अर्घ्यप्रतीकाराः कारुशासितारः सन्निक्षेप्तारः
स्वचित्तकारवः श्रेणिप्रमाणानिक्षेपं गृह्णीयुः ।
विपत्तौ श्रेणीनिक्षेपं भजेत ।
.... ... ... ... ...

तन्तुवाया दशैकादशिकं सूत्रं वर्धयेयुः ।
रजकाः काष्ठफलकश्लक्ष्णशिलासु वस्त्राणि नेनिज्युः ॥
भिषजः प्राणाबाधिकमनाख्यायोपक्रममाणस्य विपत्तौ पूर्वः साहसदण्डः ।
कुशीलवाः वर्षारात्रमेकस्था वसेयुः ।
कुशीलवैश्चारणादिभिक्षुकाश्च व्याख्याताः ।
एवं चोरानचोराख्यान् वणिक्कारुकुशीलवान् ।
भिक्षुकान् कुहकांश्चान्यान् वारयेद्देशपीडनात् ।

( अर्थशास्त्र ४.१ )

गीतवाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपरचित्तज्ञानगन्धमाल्यसंयूहनसम्पादनसंवाहनवैशिककलाज्ञानानि गणिका दासी रङ्गोपजीविनश्च ग्राहयतो राजमण्डलादाजीवं कुर्यात् । गणिकापुत्रान् रङ्गोपजीविनश्च मुख्यान्निष्पादयेयुः सर्वतालापचारांश्च ।
संज्ञाभाषान्तरज्ञाश्च स्त्रियस्तेषामनात्मसु ।
चारघातप्रमादार्थं प्रयोज्या बन्धुवाहनाः ॥

( अर्थशास्त्र पृ० १५६ )

कामसूत्रे तन्त्रावापौपयिकीं चतुःषष्टिमाह—

गीतम्, वाद्यम्, नृत्यम्, आलेख्यम्, विशेषकच्छेद्यम्, तण्डुलकुसुमवलिविकाराः। पुष्पास्तरणम्, दशनवसनाङ्गरागः, मणिभूमिकाकर्म, शयनरचनम्, उदकवाद्यम्, उदकाघातः, चित्राश्च योगाः, माल्यग्रथनविकल्पाः, शेखरकापीडयोजनम्, नेपथ्यप्रयोगाः, कर्णपत्रभङ्गाः, गन्धयुक्तिः, भूषणयोजनम्, ऐन्द्रजालाः, कौचुमाराश्च योगाः, हस्तलाघवम्, विचित्रशाकयूषभक्ष्यविकारक्रिया, पानकरसरागासवयोजनम्, सूचीवानककर्माणि, सूत्रक्रीडा, वीणाडमरुकवाद्यानि, प्रहेलिका, प्रतिमाला, दुर्वाचकयोगाः, पुस्तकवाचनम्, नाटकाख्यायिकादर्शनम्, काव्यसमस्यापूरणम्, पट्टिकावेत्रवानविकल्पाः, तक्षकर्माणि, तक्षणम्, वास्तुविद्या, रूप्यरत्नपरीक्षा, धातुवादः, मणिरागाकरज्ञानम्, वृक्षायुर्वेदयोगाः, मेषकुक्कुटलावकयुद्धविधिः, शुकसारिकाप्रलापनम्, उत्सादने संवाहने केशमर्दने च कौशलम्, अक्षरमुष्टिकाकथनम्, म्लेच्छितविकल्पाः, देशभाषाविज्ञानम्, पुष्पशकटिका, निमित्तज्ञानम्, यन्त्रमातृका, धारणमातृका, संपाठ्यम्, मानसी काव्यक्रिया, अभिधानकोषः, छन्दोज्ञानम्, क्रियाकल्पः, छलितकयोगाः, वस्त्रगोपनानि, द्यूतविशेषः, आकर्षक्रीडा, बालक्रीडनकानि, वैनयिकीनां वैजयिकीनां व्यायामिकीनां च विद्यानां ज्ञानम्, इति चतुःषष्टिरङ्गविद्याः कामसूत्रस्यावयविन्यः। (का. सू. १.३.१६)

इन विषयों के अवलोकन मात्र से प्रतीत होता है कि विद्या का अभ्यास एक तंग दायरे अथवा सीमित परिधि में नहीं होता था वरञ्च उत्सर्पिणी और विशाल उपयोगिता के आधार पर अवलम्बित था।

इन विषयों के परिशीलन से स्पष्ट है कि विद्या अभ्यास के दो मुख्य उद्देश्य थे—(१) साङ्गोपाङ्ग वेद तथा दर्शनों का अध्ययन प्रत्येक आर्य्य के लिये एक धार्मिक कर्तव्य था और उसके आर्यत्व और द्विजत्व के लिये अनिवार्य था। इस से आर्य्य-धर्म आर्य्य—सभ्यता तथा आर्य्य—संस्कृति की शिक्षा प्रत्येक आर्य्य बालक को मिलती थी। इस के द्वारा आर्य्य सभ्यता की समानता तथा एकरूपता सारी जाति के लिये पैदा की जाती थी। हम इस शिक्षा के रूप को Cultural Education अर्थात् सांस्कृतिक शिक्षा कह सकते हैं। (२) दूसरे प्रत्येक वर्ण के लिये अपने अपने २ व्यवसाय के लिये और अपने २ सांसारिक कर्तव्य को पालन करने के लिये शिक्षा दी जाती थी। ब्राह्मण को अध्यापन आदि कार्य्य करने के लिये प्रत्येक वेद में १२ वरस तक अध्ययन करने का नियम बनाया गया। क्षत्रियों के अस्त्र शस्त्र, घोडे पर चढना, रथ चलाना इत्यादि शिक्षा ग्रहण करने का नियम बनाया गया। वैश्य के लिये व्यापार में काम आने वाली भिन्न २ देशों में प्रचलित नाना भाषाओं का व्यावहारिक ज्ञान, कृषि भूमि पशु इत्यादि का ज्ञान प्राप्त करने का नियम बनाया गया। हम इस को

Vocational education अर्थात् व्यावसायिक शिक्षा कह सकते हैं।

आज कल के कालिजों की शिक्षा केवल सांस्कृतिक शिक्षा है। व्यावसायिक शिक्षा के अभाव से वह शिक्षा अपूर्ण है। यदि बी. ए एम.ए. वालों को सरकारी नौकरी न मिले तो वे किसी और काम करने के योग्य नहीं होते। सरकारी या कोई दूसरी नौकरी न मिलनेसे उनके लिये संसारयात्रा करना भी कठिन होजाताहै। दूसरी जो व्यावसायिक शिक्षा ग्रहण करते हैं उनको सांस्कृतिक शिक्षा प्राप्त नहीं होती। इसलिये वे सभ्य शिष्ट शिक्षित नहीं समझे जाते। केवल व्यावसायिक शिक्षा भी अधूरी है। सांस्कृतिक और व्यवसायिक शिक्षा का मिश्रीकरण आधुनिक भारत के लिये एक जटिल समस्या है। महात्मा गांधी की अध्यक्षता में वर्धा प्रणाली के नाम से जो शिक्षा-क्रम तैय्यार किया गया है उसमें दोनों प्रकार की शिक्षा देने का प्रबन्ध किया गया है। पर प्राचीन भारत की शिक्षा-प्रणाली की यह विशेषता थी कि उस समय शिक्षकों ने दोनों प्रकार की शिक्षा सांस्कृतिक और व्यवसायिक शिक्षा (Cultural and Vocational) का नीरक्षीर के समान परस्पर सम्मिश्रण कर दिया था इस प्रकार। प्राचीन भारत की शिक्षापद्धति ऐसी सर्वाङ्ग-सम्पूर्ण थी कि उसकी उपमा बीसवीं शताब्दी के भारत में भी नहीं पाई जाती।



## ❀ प्राक्तनशिक्षारत्नानि ❀

मित्र स्वजन बन्धूनां बुद्धेर्धैर्यस्य चात्मनः। आपन्निकषपाषाणे नरो जानाति सारताम्॥ १॥
अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा। तदिदं देहि देहीति ❀विपरीतमुपस्थितम्॥ २॥
ये नात्मा परयतां नीतः स एवान्विष्यते जनैः। हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः॥ ३॥
जामाता जठरं जाया जातवेदा जलाशयः। पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः॥ ४॥
मनो मधुकरो मेघो मानिनी मदनो मरुत्। मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः॥५॥
पुत्रसूः पाककुशला पवित्रा च पतिव्रता। पद्माक्षी पञ्चपैर्नारी भुवि संयाति गौरवम्॥६॥
संपत् सरस्वती सत्यं संतानः सदनुग्रहः। सत्ता सुकृतसंभारः सकाराः सप्त दुर्लभाः॥७॥

❀ अर्थिभ्यो 'नास्ति' इति यत्पूर्वजन्मनि उक्तम्, अधुना सर्वेषामग्रे 'देहि देहि' इति याचनार्थं वक्तव्यमापतितमित्याशयः।

## संस्कृत-प्रचारक-विद्यालयः मुंबई.

( ले० श्रीवृद्धिचन्द्रशर्मा शास्त्री, व्याकरणाचार्यः, जयपुरम् )

कस्य वा न विदितं भारतीय-पश्चिम-समुद्रतटे वर्तमानं मोहमयी ( मुम्बई ) नगरमस्यां विंशशताब्द्याम्। इदं हि नगरं भारते वर्षे बहुषु महत्त्वशालिविषयेषु प्राथम्यं भजते। मोहमयीप्रान्तस्यापि गणना भारतीयप्रदेशेषु प्रथमश्रेण्यां वर्तते। प्रान्तेऽस्मिन् वर्तमाना हिन्दू-जनता प्रायः प्राचीनार्यसभ्यतायामेवाभिरुचिं दधती धर्म्मभीरुतां दातृत्वं च रक्षति। किन्तु आर्यसभ्यतायाः जीवातुभूताया अमरभारत्याः सेवार्थं स्वगौरवानुरूपं नाद्यावधि एतत्प्रान्तीयैः प्रयतितमिति किञ्चिदवधाने दत्तेऽनायासेन शक्यते ज्ञातुम्।

भारतवर्षस्य प्रत्येकप्रान्ते प्रायः संस्कृतशिक्षणस्य परीक्षणस्य च कृते विश्वविद्यालया ( युनिवर्सिटी ) वर्तन्त एव, किन्तु वित्तव्यापारे, हिन्दूजनसंख्यायाम्, प्राक्तन-धार्मिकभावनायामौदार्ये च भारते सर्वतः प्राथम्यं भजमानेऽप्यस्मिन् प्रान्ते विश्वविद्यालयस्य तु कथा दूरापास्ता, जी० टी० कॉलेज-जे. बी. एस. कॉलेजौ विहाय परिगणनीयः संस्कृतशिक्षणस्य विद्यालयोऽपि नास्ति कश्चित्। आर्यसभ्यताप्राणभूतायाः सुरसरस्वत्याः प्रान्तेऽस्मिन् यादृशः प्रचार आवश्यकस्तादृशांशोऽपि नास्तीति आर्यसंस्कृतिपक्षपातिनां पण्डितानाम्, धनिनाञ्च कृते न किं दुःखास्पदम्?

कमलाविलासभूतेऽस्मिन् प्रदेशेऽमरभारत्यास्तादृशमल्पप्रचारमवलोक्यैव पं० श्रीरामचन्द्रशार्म्ममहोदयानां प्रबलेन प्रयत्नेन भारतस्य सुविशालेऽस्मिन् मोहमयीनगरे भुलेश्वरसंसरणे विक्रमार्कराज्यतः १९-८१ तमे संवत्सरे श्रावणशुक्लतृतीयायां "श्रीसंस्कृत-प्रचारिणी" नाम्नी पाठशाला जन्म लेभे। परमेश्वरानुकम्पया, संचालकस्य दृढेन संकल्पेन प्रबलेन परिश्रमेण च वर्षचतुष्टयात्मकेऽस्मिन् स्वल्प एव काले पञ्चभ्यश्छात्रेभ्यः प्रचलितेयं पाठशाला शतशः छात्रान् व्याकरणसाहित्ययोः शास्त्र्याचार्यपरीक्षां दातुमन्यत्र प्रेषयतीति न मन्दानन्दस्य विषयः। पञ्चमवर्षस्य प्रारम्भ एव पाठशालेयं "संस्कृत प्रचारक-विद्यालय" नाम्ना प्रसिद्धिमागता। स्वल्पेऽप्यस्मिन् जीवनसमये अनेन विघातकानां बालग्रहाणां मुखे निपतितम्, किन्तु संतोषस्यायमवसरो यदयमपवादादि-दूषणजातं निर्विकारेण चेतसा सहमानोऽत्र छात्राणां पञ्चसप्तत्या, अध्यापकानां च पञ्चभिर्युक्तः समेधते। न केवलमेतावदेव-असंख्याङ्ग्लप्रणयिनां वाक्कीलकानाम्, प्राड्विवाकानाम्, व्यापारिणाम्, सद्गृहस्थानाञ्चाभिरुचिः संस्कृत-भाषायामनेन विद्यालयेन परावर्तितेति आशास्महे-स्वल्पेनैव कालेन सुखदोदर्कमयं संमुखे स्थापयिष्यति।

अस्या आशातीतसफलतायाः कारणमेतावदेव यदस्याः प्रारम्भादेव संस्थापकस्य महायक एको महोत्साहः कार्यकुशलश्च संप्रा-

म्नः । सोयं महाशयः श्रीमोहमयीनगरस्य प्रसिद्धनागरिकः श्रीरमणलाल-रतनलालमोदी बी० ए० एल्० एल्० बी० महोदयः (सोलीसिटर, हाईकोर्ट मुंबई)। सोयं महाभागः श्रीशास्त्रिमहाशयस्य वह्नेर्वायुरिव साहाय्यं विदधाति । श्रीरामचन्द्रशास्त्रिसदृशो व्यवहारकुशलः शास्त्रज्ञश्च यस्य संस्थापको भवेत्, श्रीरमणलालरतनलालमोदीसदृशश्च सहायकस्तस्य विद्यालयस्य कथंकारं न भवेत् समुन्नतिः ? विद्यालयस्याप्यभिवृद्धिं वाञ्छन्तः सुरसरस्वत्याश्च प्रचारमभिलषन्तः कामयामहे वयं रसागमभूता मोहमयीयं सुरसरस्वत्याः सदनमपि स्यादिति ।

---



# ज्यौतिष-शिक्षा

( ले० जयपुरराजकीयसंस्कृतविद्यालयाध्यापकः—ज्यौतिषाचार्य—पं० गिरिजाप्रसादद्विवेदी )

एकोऽप्यनेकवद् भाति यो रूपस्य विभेदतः।
त्रैकोण्यमितिकं राशिमीश्वरं तं च मन्महे॥

सांप्रतं विविधविद्याविकासितमतयो विदन्ति नाम, यदस्ति भारतीयानां सर्वस्वभूतो विश्वविज्ञानवल्लरीमूलकन्दायमानो वेद इति। तत एव कालक्रमेणोच्चावचा अनेके विषया लौकिकाः पारलौकिकाश्च ऋषिमुन्युपज्ञा जगति प्रादुर्बभूवुः। ते चावहितैरार्यैं देशकालानुरोधेन कृतस्फीतप्रसरा बहुधावधारिताश्च सर्वतोमुखीं प्रतिष्ठां प्रापुः। अथ गच्छति काले प्रतिदेशं तत्तद्भाषाभाषिणो हि तान् यथाज्ञानमनूद्य विस्तारयामासुः। भवतु नाम।

अथ प्रकृते ज्योतिःशास्त्रं वेदे, ऐतरेयारण्यके, तैत्तिरीयारण्यके, तैत्तिरीयसंहितायां, शतपथब्राह्मणे, श्रौतसूत्रेषु यज्ञवेदिहवनकुण्डादिप्रसङ्गे क्षेत्रमितिसिद्धान्ताकलने, स्मृतिषु, मीमांसादर्शनेषु, माहेश्वरडमरुनादप्रवृत्तेषु पाणिनिसूत्रेषु, पुराणेतिहासविस्तरेषु च प्रयोजनानुरूपं तत्र तत्र विप्रकीर्णं नयनपथमवतरत्येव प्रेक्षावताम्। किंच वैदिकक्रियाकालनिर्णायकं लगधमुनिप्रणीतं वेदाङ्गज्यौतिषमपि ऋग्-यजुःसम्बन्धि प्रसिद्धिं प्रापत्। तदनन्तरमेव कालज्ञानसौकर्यार्थं पञ्चाङ्गपत्रं प्रवृत्तं यदद्यापि नानामतप्रयोगैश्चिकित्सितकलेवरं श्वसत् प्राणिति। इत्थमेतत् मनुजनानुमोदितं शनकैः सिद्धान्त—संहिता-होरेत्याख्यया विभज्यमानं ज्योतिस्तरोः स्कन्धत्रयत्वेन पप्रथे। नारद-वसिष्ठादीनां संहितानिबन्धेषु पठ्यते हि—

'सिद्धान्त-संहिता-होरारूपं स्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम्॥'

तथा च-'सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः-' इत्यादिकश्यपपद्यसंकलिताभिधेया मुनय आचार्याश्च यथोत्तरमुक्तसिद्धान्तादिनामलक्षणनिर्देशं सम्बन्धाभिधेयप्रयोजनपुरःसरमभिधाय सिद्धान्त-संहिता-होरा-(जातकं वा) निबन्धान् रचयामासुः। अतिक्रामति काले पूर्वोत्तरपथानुगामिभिराचार्यैः प्रथमार्यभट-वराहमिहिर—लल्ल—-ब्रह्मगुप्त—श्रीपति—-भास्कराचार्यप्रमुखैर्ग्रहगणितप्रधानः सिद्धान्तस्कन्धो विशिष्य व्यवस्थापितः। एवं संहिताहोरास्कन्धप्रतिपाद्यानि देशभेदेन ग्रहचारवशेन प्राकृतिकानि प्राणिभोग्यानि फलजातानि शकुनादीनि च वसिष्ठगर्गादयो विविच्य वर्धयामासुः। ताजिकं तु ग्रीकैराविष्कृतं प्राधान्येन सम्राडकबरसत्ताकाले मुहंमदीयैरुपचितम्। तद्विषयाणामेवानुवादरूपा नीलकण्ठीहायनरत्नादयः प्रश्नगणनाज्ञापका रमलग्रन्थाश्च सांप्रतं दैवज्ञवृन्देषु हृदयारूढाः कल्पवृक्षायन्ते।

एवं च पुराकाले ग्रह-नक्षत्रवेधार्थं तेन च दृग्गणितैक्यसंपादनार्थं शङ्कु-पलभा-नाडीव-

लय-चक्र-तुरीयादीनि यन्त्राणि भारतीयैः परिकल्पितानि, येषां परीक्षकेषु प्रचारकेषु च आर्यभटब्रह्मगुप्तादयः प्रसिद्धाः । तदनु ग्रीकज्यौतिषिकैर्यन्त्रराजादीनि कानिचिद् यन्त्राणि परिवर्त्य परिष्कृतानि येषु सांप्रतं महाराजश्रीजयसिंहदेवसंस्थापितायां जयपुरवेधशालायां द्वित्राणि मौलिकानि रूपान्तरं प्रापितानि वा विद्यन्त एव । प्राचीनयन्त्रघटनायाः स्व-रूपान्तरोपलब्धिनिदर्शनायमानं तु जयसिंहदेवादृतदैवज्ञैः सम्राडुपनामकैः श्रीजगन्नाथैः स्वनाम्ना प्रकटीकृतं 'सम्राड्यन्त्रं' सांप्रतं सुधालेपनादिभिश्चमत्कृतकलेवरं गगनचुम्बि दूरादेव दर्शकान् बाढं विस्मापयति । इयं वेधशाला वेधज्ञानसंपादनार्थमुपयुक्ता चिराद्देशे विदेशेष्वपि संमानितेति विदितमेव तद्विदाम् । किंचेदानीं कालगत्या पाश्चात्येषु वैज्ञानिका आविष्कारा बाहुल्येन ज्योतिर्गणितमूलका एवेति सुप्रतीतम् । गतिविद्या-स्थितिविद्या-त्रिकोणमिति-क्षेत्रमितिप्रभृतयो हि तदुपकरणभूताः, याभिर्भूम्याकाशस्थपदार्थानां देशकालानुरुद्धं दूरत्वादिकं सुखेन करामलकी-क्रियत एव । तारा-ग्रहाणां साहाय्येनैव तमोभूयिष्ठासु रजनीषु समुद्रयात्रायां परितः क्षितिजावधि वारिपूरेऽध्वनि दृश्यमाने स्वाभीष्टदिग्ज्ञानं ततश्च संचरणं संघटते । तदर्थमेव 'नाटिकल–आलमनाक' नाविकपञ्चाङ्गं प्रतिहायनं यूरोपीयग्रीनिचवेधशालातः प्राकाश्यं नीयते । अस्याधारेण कतिपयदेशेषु सांप्रतं भारतीयपञ्चाङ्गप्रणयनमपि साकल्येनांशतो वा प्रचलितमेव । इदमतीवसूक्ष्मसगणितविद्यया संपादितं दृग्गणितैक्यसाधकमिति प्रायेण प्राचीननवीनमताविष्टानां बहूनां निर्विवादं विश्वासास्पदम् ।

इत्थं सिंहावलोकनन्यायेन मनाङ् निरूपिता ज्यौतिषज्ञानस्थितिः यामनुवर्तमाना भारतीयाः स्वस्वचिकीर्षितान्यनुतिष्ठन्ति ।

अथ प्रचलितेषु सिद्धान्त-संहिता-होरा-स्कन्धेषु प्रत्येकस्य बहवो ग्रन्थास्तेष्वपि संहिता-होरयोर्भूयान् ग्रन्थसंभारः । सांप्रतं मुद्रितान् बहुधा टीका-टिप्पणी-हिन्दीभाषानुवादमयान्निबन्धान् विहायामुद्रिता अपि परः-सहस्रास्तेषु तेषु संग्रहालयेषु राशीभूता विज्ञायन्ते । दृश्यन्तां विभिन्नहस्तलिखितसूचीपत्राणि– पुरातत्वविभागरिपोर्टपुस्तकानि च । कालकवलितेष्वपि विद्यावैभवेषु सर्वथा भारतीयानां सम्पत्तिरक्षय्यैवेति विचारवतां पुरस्तात् । भवतु तदेतदखिलमैतिहासिकविवेचनस्य नाद्यावसरः, प्रकृतमुपस्थाप्यते—

इदानीं शिक्षाविषयमवलम्ब्य तत्तद्देशभाषासु बहुधा बहुवारं गभीरभावभरितस्वान्तैर्देशहितैषिभिर्महानुभावैर्देशकालानुरोधेन यद्यद् व्यवस्थापितं प्रतिवर्षं व्यवस्थाप्यते च तदुत्तरोत्तरं मतिभेदतमस्तिरोहितमिव न हि हृदयाकाशप्रकाशनक्षमं सर्वभावेन श्रेयःसाधकमिति भूयो मतिमन्दराद्रिणा सारस्वतोदधिः प्रमथ्यमानोऽपि परिमुषितरत्नालोक इव विसर्पन् लोकाभ्युदयनिःश्रेयसकरीं मानसीं तुष्टिं संधातुं प्रभवन्नावधार्यत इति कोलाहलपूरिताशाः प्रतिदिनं संलक्ष्यन्ते । अद्यत्वे कालप्राबल्येन कथमिव

समासतो व्यासतश्च वा व्यवस्थाधूर्वहानां तर्पणं प्रीणनं वा संघटेत ? तदर्थं कः पन्थाः साधीयानिति निर्विचिकित्सं कथंकारं यः कोऽपि मुखरतामन्तरा समाधातुं शक्येत ? दुर्दैवविलसिते देशे हि आमूलचूलं सर्वाङ्गीणं शोधनमेव न्याय इति निध्यायापि प्रस्तावैरनुमोद्यापि सहानुभूतिसूतिसरसीमवगाह्यापि विधेयेषु विमनस्कतैव प्राचुर्येण प्रचरति प्रज्ञानमेदुरान्तःकरणानाम्। 'सत्यं शिवं सुन्दरं' 'नायमात्मा बलहीनेन लभ्य' इत्यादिपारायणपरायणैर्विष्वग् जितो जीवलोकः, किमु वक्तव्यम् ? कः प्रतीकारः ? क उपालभ्यः ? अहो महिमा !

भारतस्य प्रत्येकप्रान्ते राज-प्रजान्वयेन शिक्षाशालाः स्थापिताः प्रचरन्ति। तासु प्रायेण 'गवर्नमेण्टसंस्कृतकालेज, बनारस' इति प्राचीनराजकीयसंस्थानुरोधेन व्याकरण-न्याय-ज्यौतिषादिषु पाठ्यत्वेन निर्धारिता ग्रन्थाः पाठ्यन्ते। तत्र पुरा काश्यां गणितप्राधान्यतया भास्करीया लीलावती-बीजगणित-सिद्धान्तशिरोमण्यादयः सूर्यसिद्धान्तश्च, द्विविधा क्षेत्रमितिस्तथा त्रिकोणमितिश्च छात्रा अधीयते स्म। प्रतिशास्त्रमेव मुख्यग्रन्थानामेवोच्चावचभेदेन विभिन्नप्रान्तेषु सांप्रतमपि प्रचुरप्रचार उपलभ्यते। परं सांप्रतं ज्यौतिषे फलितभागस्यापि भिक्षुपादप्रसारणन्यायानुमोदितं स्थानं निर्धारितमिति बहुत्र गणितफलितयोः परीक्षापार्थक्येन छात्रान् वृणोति। तत्र नवीनगणितफलितयोरपि संश्लेषो युगानुसारं करणीयत्वादधिकारिभिर्द्वित्राः पञ्चषा वा आधुनिकैर्लिखिता अनूदिता वा, अर्धजरतीया अपि सन्दर्भाः संयोजिताः। त एते गणिताचार्ये चलनकलन-द्युचरचार-भाभ्रमरेखानिरूपण-दीर्घवृत्तलक्षणादयः, फलिताचार्ये च हस्तसंजीवनं (जैनानुसारिसामुद्रिकम्) बृहत्पराशरहोरा (अत्यधिकं दुरवस्थिता प्रमादसङ्कुला) वसन्तराजाद्भुतसागरबृहत्संहितादयस्तथा यामलोक्तफलितसंग्राहका नरपत्यादयश्च न्यूनाधिकभावेन विज्ञेयाः। एते ग्रन्थाः संदर्भा वा, पुरा सांप्रतं च यैर्गणितफलितविज्ञैरुपनिबद्धास्तैः कैरपि पाठ्योपयोगित्वदृशा न निर्मिता इति निर्णायकैरालोच्यं भवति, किंवा सम्यगालोच्यापि ग्रन्थसंख्यापूर्त्यै तथानुष्ठितं भवेत्। किंच प्रधानविषयाङ्गभूताः काव्य-धर्म-हिन्दीग्रन्था अपि प्रारम्भत एव सदैव फूत्कारमात्रैर्वेष्टसाधनताज्ञानकराः संक्रामिताः प्रतिवर्षं संक्राम्यन्ते च।

काश्यां, बिहारे, राजपूतानापरिसरेषु तु दृढमूलेयं मानोन्नता पद्धतिः शिक्षाप्राङ्गणे नृत्यन्तीव स्वाङ्गसौष्ठवं संतनोति। परं किमियता चेष्टितेनाध्येतॄणां विद्यार्जनलभ्यफलं कर्मक्षेत्रानुगुण्येन स्वीकर्तुं सहानुभूत्या पार्यते? इदानीं तु योग-क्षेमकथैवाग्रे प्रसरति, तदर्थं च परीक्षाज्ञानभराणां पश्चादेव पादप्रक्षेपो लोकतो व्यवहारतश्च संलक्ष्यते। शास्त्रार्था हि गुणनिकामन्तरा हृदयमन्दिरे न स्फुरन्ति। शिक्षाभारवाहिभिः किं क्रियताम् ? उक्तमेव पथप्रदर्शकैः 'ज्ञानं भारः क्रियां विना।' अथ 'क्रिया हि वस्तूपहिता प्रसीदति'। इत्य-

व्यतिरोहितमेव। भगवता पतञ्जलिना 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्युपदिष्टम्। अद्यत्वे युगानुसारमितोन्यथा व्यवहृतेऽपि बाहुल्येन दृष्टादृष्टफललाभाभावे केवलं कल्पना-धाद-वितण्डा-जल्पना-जालैरेव सामाजिको गतिविधिरवरुध्यते, विक्रियते, तथापि स्वाभीष्टं किंवा स्वच्छन्दानुरूपं योगक्षेमफलकं विधित्सितं न निश्चेतुं न वा प्रतिपत्तुं प्रभवामः। इयता निर्णायकैः सारस्वतवैभवस्य क्रमिकं ह्रासं तस्य धारणाकलनाधारभूतानां भारतीयानां प्राकृतिकांशशैथिल्यादिविविधभावविशृङ्खलतां च सुनिपुणं विभाव्य निर्ध्यायापि तत्तद्विषयिणीषु शिक्षासु-ग्रन्थसंभारः किमुद्दिश्याधीयते-न निश्चीयते। भारतीया एव स्वीयां मातृभूमिसंपत्तिं वोढुं धुर्य इव नियोज्या इति तेषामधिकारसिद्धं साधितं वा यत्किमपि गतानुगतिकतया प्राप्तकालमवगत्यैव नवीनविज्ञानदृशोऽनुतिष्ठन्तीति युक्तमुत्पश्यामः। ऐन्द्रजालिकोऽयं शिक्षागुरुचारः सर्वानेव विषीदयन्, ग्लापयन्, व्यामोहयन्, प्रतारयन्, संक्षोभयन्, जीवनं कदर्थयन्, चिराय वृत्ते, वर्तमाने, वर्तिष्यमाणे च काले चिरायुषा लोमशमुनिमप्यधरीकृत्य, न जाने कियत्कालं निष्करुणं पीडयितु, माक्रोशयितुं वा स्वीयाममोघां शक्तिं संचालयेत् को वेद ?

शिक्षामधिकृत्य चिराय विचारवैधुर्यं धर्मभीतिः ( वृथैव ) प्राचीनेषु तदनु नवीनेष्वपि गौरव-मानमभिमुखीकृत्य प्रववृते। अल्पीयसा भूयसा वा प्रयत्नेन कालानुरूपं, केषां कृते किं फलप्रवणं कर्म इति सामाजिकवर्गीकरणविधयोचपदशक्तिशालिभिर्दूरदृशा न मीमांसितमित्येव प्रतिपदं 'किन्तु' 'ननु' 'न च' विहाय संमुखमुपस्थीयते तथोपस्थास्यते च। हानोपादानविमर्शवैमुख्यं तु हृदये वज्रलेप इव सर्वतश्चतुरस्रं निर्व्यूढमिति। ततश्च यः कोऽपि प्रतीकारः प्रतिविधेय एवैष नियमो लौकिकोऽनुकूलः प्रतिकूलो वा देशजातिबान्धवैः समर्थितो हितानुबन्धिभिः सरलोदारवर्त्मना समनुष्ठेय इति विश्वजनीनं प्रतिभाति।

पुरा यथा मुख्यग्रामेषु व्यवहारानुसृतधर्मादिशिक्षार्थं चतुष्पाठी ( वङ्गेषु ) प्रवर्तिताऽभूत्तस्योच्छेदानन्तरं विद्यालाभो नागरिकशालां लघ्वीं महतीं वा संसेव्यैव सुकरस्तेन प्रकृते त्रिस्कन्धसम्बन्धिनो ज्यौतिषग्रन्था पूर्वादृता एवाद्यापि व्यवहारं विभाव्य शिक्षासु निर्देश्याः। काशीनाथ-शीघ्रबोधः, मुहूर्तगणपतिश्चिन्तामणिर्वा। पाटी, बीजं ( नवं ) क्षेत्रमिति-त्रिकोणमिती ( द्विविधे ) भास्करस्य सिद्धान्तशिरोमणिः सूर्यसिद्धान्तः। सिद्धान्ततत्त्वविवेक-गोलप्रकाशयोः संक्षिप्तः संकलितांशः ( पृथक् प्रकाशितः ) संहितास्वर-शकुन-प्रश्नादीनामतीवावश्यको ज्ञेयांशश्च। होराविषयकेषु लघुजातकम्, लघुपाराशरी, जैमिनेरायुर्दायविचारः, नीलकण्ठी १ तन्त्रं च। इत्थं त्रिधा विभज्य परीक्षा कल्पनीया। पर्याप्तमेतदादि-मध्य-पर्यन्तकक्षासु प्रमाणपत्रसंपादनार्थम्। 'सति कुड्ये चित्रम्' इति न्यायनयमनुवर्त्य मूलज्ञानेन

शनकैः परीक्ष्येतरसन्दर्भानपि स्वयमाकलयितुं शिक्षार्थी प्रभवेदेव ।

किंच गणितस्कन्धे नवीनगणितमवश्यज्ञेयं भवति । स्वस्वकाले दैशिकैर्वैदेशिकैर्वा आचार्यैर्मिथो विज्ञानस्यादान–प्रतिदानं स्व–स्व-संस्कृतिवशेन विहितमेव । न तत्र कोऽपि प्रत्यवायः । काश्यामाचार्यश्रेणौ यो हि चलन-कलन-दीर्घ-वृत्तलक्षणादीनां संनिवेशो निर्णायकैर्व्यवस्थापितः तेषु प्राथमिक-परिभाषादीनां वर्द्धनं, परिवर्तनं, साकल्येन प्राप्तकालम् । त्रिकोणमितिरप्यतीव संक्षिप्ता परिभाषादीनां संकोचो मतिमान्द्यकर एव । दीर्घवृत्ते समीकरणादीनां प्रयोगो हि नव्यबीजज्ञानमन्तरा त्रुटिपूर्णम्, ततोऽपि Geometry of Conics निबन्धोक्तपरवलयादिक्षेत्राणां स्वरूपोत्पत्तिनियमादीनां ज्ञानराहित्यं पठतां गगने बीजाकरणमिव निष्फलम् । संस्कृते हिन्दीभाषायां वा तादृशपुस्तकाभावात् । एवं यावत्तत्तद्विषयाणां पाठ्यग्रन्था न निर्मीयेरन् तावदेषां प्रकीर्णनिबन्धानां गूढानामध्ययनाध्यापनप्रयासो न हि फलप्रद इति निर्णायकानां पुरस्तात् । सांप्रतं हिन्दीभाषाप्रवाहे प्रचलत्यपि गणित-विज्ञानग्रन्थानां प्रणयनं न केनापि यावदुपयुक्तं भारतीयशैल्या समाचरितम् । ये द्वित्राः पञ्चषा वा पाठ्यरूपेण प्रचलितास्ते हि Anglo-Vernacular शिक्षापद्धत्या भाषालेखशुद्धिविकला अनियमसङ्कुला भ्रान्तिकराश्च विशेषतः संस्कृत-गणितपाठिनाम् । एवमिह पार्थक्येन निबन्धरचना साधीयसी निर्विवादं शिरस्यापततीति, तदर्थं विद्वत्समितिर्यदि नाम बद्धपरिकरा स्यात्तदैव समीहितसिद्धिः स्यात् । केवलं पाश्चात्यरीतिनीतेरनुकरणमात्रेणैव न निर्वाहः ।

इत्थमद्यत्वे ज्यौतिषशिक्षा सर्वात्मना प्रायोगिकगणितज्ञानतत्समन्वयं विना विकलाङ्गी प्रतिदिनं क्षीण-क्षीणा, जनसमुदायेष्वनास्थाकरी कथमपि प्राणिति । एवं गणितफलितवेदिनः संभूय कामपि कार्यनिर्वाहिकां समितिमाडम्बरमुक्तां परिकल्प्य विभिन्नप्रान्तीयपाठशाला-निरीक्षण-परीक्षणादिभिः देशकाल-स्थित्यनुमोदितं यत्किमपि प्रास्ताविकं परिकल्पयन्तु । यद्धि सर्वदेशीयैः संमतं प्राचीनकीर्तिरक्षकमात्मोद्धरणक्षमं च स्यादिति शिवम् ।

---

# शिक्षायाः साम्राज्यम् ।

( ले॰ पं॰ सूर्यनारायणशर्मा शास्त्री व्याकरणाचार्यः, जयपुरम् )

श्रुतिषु, शास्त्रेषु, स्मृतिषु, पुराणेष्वितिहासेषु, कथास्वाख्यायिकासु च सर्वत्राऽपि शिक्षा समुपलभ्यते । ततश्च शिक्षा वेदवत् सनातनी । एषा च युगानुरूपं विधानि [illegible] धारयति । प्रतियुगमेव चास्या महत्त्वं तात्कालिका मनुष्याः स्वीचक्रुः । अतो नानया विना लोकयात्रा सिध्यति । वेदेषु यज्ञानाम्, देवस्तुतीनां च शिक्षा विद्यते । उपनिषत्सु ब्रह्मविद्यायाः, गृह्यसूत्रेषु स्मृतिषु च संस्काराणाम्, ज्यौतिषे ग्रहचारस्य, आयुर्वेदे कायस्वरूपस्य, रोगाणाम्, भेषजानाम्, योगानां च, गान्धर्ववेदे रागाणाम्,

धनुर्वेदे शस्त्राणाम्, व्याकरणे शब्दानाम्, न्यायवैशेषिकयोः संसारसृष्टिसंहारयोः, इतरेषु च इतरासां शिक्षाणामेव यथायथं संनिवेशः।

शिक्षां विना न पठनं प्रतिपठनं वा
नो वास्ति वस्त्रवयनं न च रक्षणं वा।
नो तक्षणं न च कृषिर्न च शासनं वा
तस्मात् समाश्रयत भोः सुजनाः सुशिक्षाम्॥

अस्तु सर्वैर्ज्ञायत एव शिक्षामहत्त्वं तु, विचारणीयं त्वेतद् यत् साम्प्रतं कीदृशी शिक्षा समपेक्षिता लोकहिताय। एषोऽपि च समस्तविवेकिजनप्रतिपन्नः सिद्धान्तो यत् कालानुसारं कदाचिदेकस्याः कदाचिदपरस्याः शिक्षायाः प्राधान्यं भवति। शिक्षा हि नाम—

"स्वाभीष्टकार्यसंसाधनानुकूलव्यापाराभ्यासः"

ते च व्यापाराः क्वचिन्मानसा यथा ब्रह्मविद्यायाम्। क्वचिन्मौखा यथा वेदपाठगान्धर्वविद्यादिषु। हस्तास्तु विद्यन्त एव समस्तलोकव्यवहारेषु। पादा अपि विद्यन्त एव प्रेष्यादिकर्मसु। हस्तपादोभयसाध्या अपि दृश्यन्त एव सूचीकर्मयन्त्रसंचालनादिषु। एवं च व्यापारबाहुल्याच्छिक्षाबाहुल्यमप्यव्यपरोप्यम्।

सांप्रतं शिक्षाया माध्यममपि परिवर्तनसापेक्षम्। यतो यवनसाम्राज्यकाले पारस्यभाषयेव साम्प्रतमाङ्गलभाषया दीयमाना शिक्षाऽस्माकं भारतीयानां कृते बलादारोपितेव प्रतीयते, न स्वाभाविकी। यतो हि न केवलं ज्ञानसंबद्धा एव अपि तु कलासंबद्धा अपि ग्रन्थाः संस्कृतोपनिबद्धा एव बाहुल्येनोपलभ्यन्ते। तत एतद् विना संकोचं स्वीकर्तुं शक्यते यत् कदाचित् सोऽपि काल आसीद् यस्मिन् लोकशिक्षामाध्यमं संस्कृतमासीत्। पालीप्राकृतादिदेशभाषास्तु शिक्षामाध्यमत्वेन बौद्धजैनधर्मप्रचारकाले सुप्रचरिता एवासन्। परं वर्तमाने तत्स्थानमधिकर्तुं नागरी भाषैव स्वसारल्यादिगुणैः प्रभवति। सा च क्रमशोऽधिकाधिकं प्रचारमापद्यमानास्तीति विलोकयतामस्माकं प्रसीदतितरां चेतः। तथा चेदानींतने काले शिक्षामाध्यमधुरां वोढुं नागर्येवार्हतीति निर्विवादमेतत्। तस्यां च तत्तच्छास्त्रविशेषज्ञैर्ग्रन्था अपि विरच्यन्त इति वृद्ध्युन्मुखमस्या वाङ्मयम्। परं नवप्रचलितविविधविषयाणामस्यां संनिवेशार्थं नवनवा शब्दसृष्टिरपि समपेक्ष्यते। यथा घटशरावादिविविधपात्रनिर्माणार्थं न साधारणी किन्तु स्निग्धा मृत् समपेक्ष्यते, तथैव शब्दसृष्ट्यर्थमपि स्निग्धा वाक् समपेक्ष्यते। स च स्नेहोऽस्यामल्पतरः, एतदुपोद्बलिकायां दैव्यां वाचि तु विपुल इति संस्कृतज्ञानं विना न नागर्यां यथोचितशब्दनिर्माणप्रयोगसौकर्यमिति आधारभाषारूपेण संस्कृतशिक्षणव्यवस्थाऽप्यवश्यमभ्युपेया। आयुर्वेदज्यौतिषकर्मकाण्डानां तु संस्कृतभाषा निधानमेव।

किंच शिक्षायाः साधारण उद्देशो, बुद्धिविकासो मस्तिष्कस्य चिन्तनशीलताजनकत्वं च। तादृगुद्देशसिद्धिश्च सरलभाषाद्वारा विद्याध्ययनेन न संभवति, किन्तु यस्या भाषाया अध्ययने प्रारम्भत एव नियमोपनियमावधारणमावश्यकं भवति तद्द्वारा क्रियमाणमध्ययनं क्रमशो बुद्धौ सूक्ष्मतामुपजनयति। एष च गुणः संस्कृतभाषायां वि-

+प्रत्योपशब्दोऽस्थाने



शेषेण वर्तते । ततश्चैतद्द्वारा कृताध्ययनो जनः सूक्ष्मतत्त्वावधारणे वैशिष्ट्येन प्रभवति । सर्वाधिकं मान्यत्वं च संस्कृतभाषायां लोकव्यवहारनीतिधर्मकलाब्रह्मविद्यादिज्ञानोपजनकत्वेनैव । यदि नाम भारतीयाः संस्कृतं नाध्यैष्यन्त कथं वा ते रामायणरसम्, महाभारतमाधुर्यम्, रघुवंशकुमारसंभवकिरातार्जुनीयशिशुपालवधनैषधीयचरितादिमहाकाव्यानुशीलनोपप्लावितब्रह्मास्वादसहोदराऽऽह्लादं वाऽऽस्वादयितुं प्राभविष्यन् । भो भो विवेकशीला भारतीयाः ! इमां नोपेक्षध्वम्, प्रत्युत सेवध्वम् ।

इदं त्ववश्यमवधेयम्-संस्कृतभाषाऽत्यन्तं प्राचीना वर्तते । एतस्यां तात्कालिकानां विषयाणां तु नास्ति न्यूनता परमाधुनिकानां विविधविज्ञानेतिहासवास्तुशास्त्रादीनां संनिवेशस्त्वेतस्यामवश्यं करणीयः । नो चेन्निवार्यमेतस्या व्यवहारबहिष्करणम् ।

धर्मशिक्षा चापि भारतीयशिक्षा—पद्धतावश्यं विनिवेशनीया । यत एतां विना नास्माकं स्वरूपरक्षा । प्रत्युत स्वरूपहानिः । एवं च संस्कृतशिक्षाकेन्द्रेषु धर्मसम्बन्धिन्याः शिक्षायाः परीक्षायाश्च व्यवस्थाऽवश्यं विधेया ।

संस्कृतवाङ्मयविस्तारस्य सर्वश्रेष्ठ उपायश्च, महोत्साहिनां नवग्रन्थलेखकानां कवीनां चोत्साहवर्धनाय, श्रमसाफल्याय, लाभद्वारोन्मुद्रणाय च यथायोग्यं तन्निर्मितानां ग्रन्थानामपि शिक्षाक्रमे विनिवेशोऽचिरादनुष्ठेयः । यत एवं कृते शिक्षायाः संस्कृतवैदुष्यस्य च विस्तारो रक्षणं च स्यात् ।

धार्मिकी, वैदिकी चैव सांस्कृती च यथा भवेद् ।
शिक्षाऽस्माकं सुविस्तीर्णा तथा यत्नो विधीयताम् ॥

---

## कीदृशी शिक्षाऽपेक्षिता

( ले० ज्वालापुरमहाविद्यालयाचार्यः, पं० नरदेवशास्त्री वेदतीर्थः )

इज्याध्ययनदानानीति त्रयो धर्मस्कन्धाः । अत्राध्ययनशब्देन शिक्षाया एव ग्रहणम् । सा च कीदृशी भवितव्येति विषयस्तु तैत्तिरीयसंहितायां शिक्षोपनिषदि प्रदर्शितः ।

आचार्य उत्तररूपम्
अन्तेवासी पूर्वरूपम्
प्रवचनं सन्धानम्

एतेषु त्रिष्वेव वाक्येषु शिक्षायाः तत्त्वं समुपनिबद्धम् ।

सा च शिक्षा कथं सफलीभवति— इति विषये निरुक्तान्तर्गता ऋक्श्लोका एव प्रमाणम् ।

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम् ॥१॥

य आतृणत्त्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत्कतमच्चनाह ॥२॥
अध्यापिता ये गुरुं नाद्रियन्ते

विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयाः
तथैव तान्न भुनक्ति श्रुतं तद् ॥३॥
यमेव विद्याः शुचिमप्रमत्तम्
मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत्कतमच्चनाह
तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥४॥

अनेन किमायाति ? एतदेव यद् विद्या तदैव सफलीभवति, यदा साऽधिकारिणे दीयते । अन्यथाऽनधिकारिदानात्सर्वमेव भस्मनि हुतमिव भवति ।

एष खलु शिक्षाशास्त्रिणां शान्तिपाठः—

'सह नाववतु सह नौ भुनक्तु, सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥'

अध्ययनाध्यापनप्रसङ्गे आदावेव मन्त्रोऽयं समुच्चारणीयो भवति आचार्यान्तेवासिभिः संभूयेति । तथा सति तेजस्वि भवति यदधीतम्, यदध्यापितं चेति ।

हन्त ! कीदृशोऽयं कालः समुपस्थित उद्वेगकरोऽध्याप्याध्यापकानां गुरुशिष्याणामाचार्यान्तेवासिनां वा । इदानीन्तना अन्तेवासिनो गुरूनपि विद्विषन्ति, कथं नाम तेषामधीतं तेजस्वि भविष्यति-सर्वमेवाधरोत्तरं संवृत्तं वैदेशिकशिक्षाप्रभावात तत्संसर्गाद्वेति । अस्माकं शिक्षा तु धर्मस्यैकः स्कन्धरूपः इदानींतनी शिक्षा तु सर्वथा धर्महीना । छात्रास्तथा शिक्ष्यन्ते,तथा तेषां प्रवृत्तिर्भवति, यथा ते सर्वमेव स्वकीयं स्वविद्यां, स्वधर्मं, स्वसंस्कृतिं–सर्वमेव न्यक्कुर्वन्ति, वैदेशिकं सर्वमेव प्रयत्नेनाङ्गीकुर्वन्ति । कथं नामास्य भारतवर्षस्य कल्याणं भविष्यति ।

धन्यास्ते स्वाध्यायप्रवणमनसो ब्राह्मणाः पण्डिताश्च यैरद्यापि कुलक्रमागतो वेदो रक्ष्यते, शास्त्राण्यधीयते–राजाश्रयाभावाद् लोकाश्रयाभावाच्च कथङ्कथमपि जीवत्युच्छ्वसिति वाऽस्माकं शिक्षा ।

स्वशिक्षाया रक्षा खलु ब्राह्मणानां निष्कारणो धर्मः । पुरा खल्वाचार्यो वेदमनूच्यान्तेवासिनमनुशास्ति स्म "सत्यं वद, धर्मं चर, आचार्यदेवो भव, मातृदेवो भव, पितृदेवो भव" इत्यादिवाक्यैः—

अद्यतनेषु कनवोकेशनप्रसङ्गेषु पदवीदानसमारम्भे विश्वविद्यालयस्य कुलपतयो यथा लम्बीभूतानि व्याख्यानानि ददति तत्र किमस्ति विचित्रम्-तत्र हार्दं किमपि नास्ति, तेषां शब्दाः निगदेनैव शब्द्यन्ते । तत्रोपदेशेषु भवेन्नाम भौतिकं किमप्युपव्याख्यानं परं तत्र सर्वथाऽभावो दरीदृश्यतेऽध्यात्मसम्बन्धस्य । अध्यात्मसंबन्धाद्विना शून्यमिव सर्वं प्रतिभाति । गुरुशिष्ययोराचार्यान्तेवासिनोर्वा सम्बन्धः खलु नितरामाध्यात्मिकः । मूल्यं दत्वा विद्याग्रहीतुः शिष्यस्य, मूल्यमादाय वाऽध्यापयितुर्गुरोस्तादृशः पवित्रः सम्बन्धः स्थातुं शक्यते किमु ? ज्ञानविक्रयो नामावद्यं कर्म, शास्त्रनिन्दितम् । परेशानुकम्पयाऽस्माकं सा पुरातनी शिक्षा पुनरप्युज्जीवतु, तस्या आश्रयेण पुण्योऽयं देशः पुनः पुनीतो भवतु, इत्येव जगन्नियन्तुः सकाशादभ्यर्थयामहे–भवतु साधयामः, अत्रैव विरमामः–

सं० र० शिक्षाङ्कः



श्रीरामचन्द्रशास्त्री व्याकरणाचार्यः ( मुंबई )

मुंबईस्थ 'संस्कृतप्रचारकविद्यालय'स्थापकः



P. P. E. Press, Jaipur.

## श्रीयुतपण्डितश्रीरामचन्द्रशास्त्रि-व्याकरणाचार्यमहोदयः, मुम्बई.

( ले० श्रीवृद्धिचन्द्रशर्मा शास्त्री, व्याकरणाचार्यः जयपुरम् )

एटाजिलान्तर्गतसोरोंग्रामे वंशपरम्पराप्राप्तपाण्डित्ये उदीच्यसहस्त्रनाम्नि गुर्जरब्राह्मणकुले प्रसूतस्य विदुषः श्रीज्वालादत्तशास्त्रिणः सकाशात् १९५२ तमे वैक्रमाब्दे विजयदशम्यां शास्त्रिमहाशयस्य जन्म । "होनहार बिरवान के होत चीकने पात" इति लोकोक्त्यनुसारं बाल्य एव महाशयस्यास्य प्रतिभा-विकासमवलोक्य महत्याऽऽशया पित्रा अध्यापनमस्य प्रारब्धम्, किन्तु हन्त अकाल एव करालेनानेन कालेन कवलितः सः । दशवर्षीयमिममसहायं बालं परित्यज्य दिवङ्गते पितरि श्रीमतोऽस्य मातरि श्रीचम्पादेव्यां पुत्रचतुष्टयस्योभयोः पुत्र्योश्च रक्षणभारः समापतितः । श्रीमतीयं चम्पादेवी लक्ष्मणपुरा-(लखनऊ)ध्यक्षनवाबवंश्यानां सुप्रसिद्धज्योतिर्विदां पण्डितश्रीरामदत्तशर्मणां शीलवती सुतासीत् । एषा हि संस्कृतसाहित्यस्य विदुषी, फलित-ज्यौतिषस्य ज्ञात्री, कलासु कुशला सत्यपि भगवद्भक्तिपरायणासीत् । महदर्थकष्टमनुभूयापि तया स्वसन्ततीनां सस्मानं शिक्षाप्रबन्धं विधाय स्वीयकर्तव्यपालनमकारि ।

शास्त्रिमहोदयस्य प्रारम्भिकमध्ययनं स्वकीये ग्रामे सोरोंस्थान एव समभूत् । ततो द्वादशवर्षाणि यावत् फर्रुखाबादे काश्यां चाधीत्य भारतीय-प्रसिद्धविश्वविद्यालयनामुच्चपरीक्षासु प्रविश्य पञ्जाम्बुविश्वविद्यालयतः

अविद्यालयेभ्यश्च व्याकरणाचार्य-काव्यन्यायतीर्थादिपदवीरयं प्राप्तवान् । न केवलमेतावदेव, महानुभावस्यास्य विशिष्टया प्रतिभया सन्तुष्टाभिर्भारतस्य कतिपयप्रसिद्धसंस्थाभिरपि अनेकैरुपाधिभिरयं सुभूषितः । व्याकरणे साहित्ये च शास्त्रिमहाशयस्याधिकार एव, किन्तु न्याये वेदान्ते चापि पर्याप्तं विद्यते पाण्डित्यम् । ज्यौतिषशास्त्रेऽपि श्रीमतोऽधिकारः प्रशंसनीयः । विषयमिममवलम्ब्य सुबहु समुपार्जितं यशोऽनेन । अस्य हि ज्यौतिषज्ञानविषये श्रूयते किल-प्रख्यातपाण्डित्यानां म० म०पं० श्रीअयोध्यानाथशास्त्रिमहोदयाना शिष्यपरम्परासु क्रमशोऽधीतफलितज्यौतिषशास्त्रः श्रीमन्तं शास्त्रिमहोदयं विहाय नान्यः कश्चिद् मोहमय्यां विद्यत इति किंवदन्ती । मोहमय्याः प्रायो बहवो धनिकाः श्रीमति पूर्णं श्रद्दधते । काठियावाड-राजपुतानादिप्रान्तस्थानेकैः खलु सामन्तमहाभागैर्राजज्यौतिषित्वेन संमानितः श्रीशास्त्रिमहोदयः । अस्तु.

महाशयोऽयं सुरगिरः प्रचारार्थं सुबहु प्रयतते । सुरसरस्वत्याः प्रचारार्थमेव महाशयस्यास्य जनिरिति कथनमपि मन्ये नातिरिच्येत । स्वल्पेऽस्मिन् स्वकीये जीवनसमये महाशयेनानेन बहुभिः साधारणपाठशालाभिः सह लक्ष्मणझूलास्थश्रीमहर्षिकुलब्रह्मचर्याश्रम-हृषीकेशस्थश्रीभरतमहाविद्यालय-सोरोंस्थमेहवा-विद्यालय—तत्रस्थराजकुमा-

साहित्यं विदुषी –

[ १ ]

## श्रीयुतपण्डितश्रीरामचन्द्रशास्त्रि-व्याकरणाचार्यमहोदयः, मुम्बई.

( ले० श्रीवृद्धिचन्द्रशर्मा शास्त्री, व्याकरणाचार्यः जयपुरम् )

एटाजिलान्तर्गतसोरोंग्रामे वंशपरम्पराप्राप्तपाण्डित्ये उदीच्यसहस्रनाम्नि गुर्जरब्राह्मणकुले प्रसूतस्य विदुषः श्रीज्वालादत्तशास्त्रिणः सकाशात् १९५२ तमे वैक्रमाब्दे विजयदशम्यां शास्त्रिमहाशयस्य जन्म । "होनहार विरवान के होत चीकने पात" इति लोकोक्त्यनुसारं बाल्य एव महाशयस्यास्य प्रतिभा-विकासमवलोक्य महत्याशया पित्रा अध्यापनमस्य प्रारब्धम्, किन्तु हन्त अकाल एव करालेनानेन कालेन कवलितः सः । दशवर्षीयमिममसहायं बालं परित्यज्य दिवङ्गते पितरि श्रीमतोस्य मातरि श्रीचम्पादेव्यां पुत्रचतुष्टयस्योभयोः पुत्र्योश्च रक्षणभारः समापतितः । श्रीमतीयं चम्पादेवी लक्ष्मणपुरा-(लखनऊ)ध्यक्षनबाबवंश्यानां सुप्रसिद्धज्योतिर्विदां पण्डितश्रीरामदत्तशर्म्मणां शीलवती सुतासीत् । एषा हि संस्कृतसाहित्यस्य विदुषी, फलित-ज्यौतिषस्य ज्ञात्री, कलासु कुशला सत्यपि भगवद्भक्तिपरायणासीत् । महदर्थकष्टमनुभूयापि तया स्वसन्ततीनां सम्मानं शिक्षाप्रबन्धं विधाय स्वीयकर्तव्यपालनमकारि ।

शास्त्रिमहोदयस्य प्रारम्भिकमध्ययनं स्वकीये ग्रामे सोरोंस्थान एव समभूत् । ततो द्वादशवर्षाणि यावत् फर्रुखाबादे काश्यां चाधीत्य भारतीय–प्रसिद्धविश्वविद्यालयानामुच्चपरीक्षासु प्रविश्य पञ्चाबविश्वविद्यालयतः शास्त्रिपदवीम्, काशीजयपुरकालिकातादिविश्वविद्यालयेभ्यश्च व्याकरणाचार्य-काव्यन्यायतीर्थादिपदवीरयं प्राप्तवान् । न केवलमेतावदेव, महानुभावस्यास्य विशिष्टया प्रतिभया सन्तुष्टाभिर्भारतस्य कतिपयप्रसिद्धसंस्थाभिरपि अनेकैरुपाधिभिरयं सुभूषितः । व्याकरणे साहित्ये च शास्त्रिमहाशयस्याधिकार एव, किन्तु न्याये वेदान्ते चापि पर्याप्तं विद्यते पाण्डित्यम् । ज्यौतिषशास्त्रेपि श्रीमतोधिकारः प्रशंसनीयः । विषयमिममवलम्ब्य सुबहु समुपार्जितं यशोऽनेन । अस्य हि ज्यौतिषज्ञानविषये श्रूयते किल-प्रख्यातपाण्डित्यानां म० म०पं०श्रीअयोध्यानाथशास्त्रिमहोदयानां शिष्यपरम्परासु क्रमशोधीतफलितज्यौतिष–शास्त्रः श्रीमन्तं शास्त्रिमहोदयं विहाय नान्यः कश्चिद् मोहमय्यां विद्यत-इति किंवदन्ती । मोहमय्याः प्रायो बहवो धनिकाः श्रीमति पूर्णं श्रद्दधते । काठियावाड-राजपुतानादि-प्रान्तस्थानेकैः खलु सामन्तमहाभागैर्राजज्यौतिषित्वेन संमानितः श्रीशास्त्रिमहोदयः । अस्तु.

महाशयोयं सुरगिरः प्रचारार्थं सुबहु प्रयतते । सुरसरस्वत्याः प्रचारार्थमेव महाशयस्यास्य जनिरिति कथनमपि मन्ये नातिरिच्येत । स्वल्पेस्मिन् स्वकीये जीवनसमये महाशयेनानेन बहुभिः साधारणपाठशाला–भिः सह लक्ष्मणझूलास्थश्रीमहर्षिकुलब्रह्म–चर्याश्रम–हृषीकेशस्थश्रीभरतमहाविद्यालय–सोरोंस्थमेहता–विद्यालय—तत्रस्थराजकुमा-

रोसाङ्गविद्यालय-मुम्बईस्थसंस्कृत-प्रचारक-विद्यालयेति परिगणनीय-विद्यालयानामपि स्थापनां कृत्वा सुर-सरस्वती-सेवा स्फुटं प्रकटिता।

उपर्युक्ताः सर्वा अपि संस्थाः सुचारु कार्यं संपादयन्त्यः शतशश्छात्रान् शास्त्र्याचार्यादिपरीक्षासु समुत्तीर्णतां नयन्त्यः शास्त्रिमहोदयस्य यशोवितानं विदधति।

नैतावदेव, मोहमयीप्रान्तस्थच्छात्राणां वाराणसेय-परीक्षादानार्थं जबलपुरं पति गमनमतीवकष्टकरमर्थहानिकरञ्चावलोक्य महान्तं प्रयत्नं विधायानेन वाराणसेयप्रथम-मध्यम-परीक्षाणां केन्द्रं मोहमय्यामेव संस्थापितम्।

शास्त्रि-महोदयः कीदृशो धार्म्मिको दृढनिश्चयी चेत्यत्र निदर्शनमेकमधस्तात् समुद्ध्रियते—

मोहमयी (मुंबई) प्रान्ते यदा कांग्रेस-राज्यं समभूत्; तदा एकेन तद्राज्यप्रधानाधिकारिणा महताग्रहेण शास्त्रिमहोदय एवमुक्तो यद् वर्तमानकांग्रेसराजनीतिमनुसरता यदि भवता विद्यालयोयं परिचाल्येत, विद्यालयस्यास्य संपूर्णोपि व्ययभारोऽस्माभी राज्यद्वारोरीकरिष्यते; किन्तु धार्मिकविषये हस्तक्षेपमसहमानेन धर्म्मवीरेणानेन नेदमङ्गीकृतम्। मन्ये नैतत् साधारणं कर्म।

शास्त्रिमहोदयो न केवलं विद्याव्यसनी अपि तु सामाजिकक्षेत्रे राजनीतिक्षेत्रे चापि सोत्साहं कार्यं करोति। वर्णाश्रमस्वराज्यसङ्घन, बह्वीभिः सनातनधर्मसंस्थाभिश्च शास्त्रिमहोदयस्य श्लाघ्यः संबन्धः। व्यवहारपटुताप्यस्य मन्ये प्रशंसनीया। वल्लभाचार्यमतप्रवर्तक-प्रख्यातधर्माचार्य-गोस्वामिकुल-कौस्तुभश्रीगोकुलनाथमहाराजानाम्, श्रीमज्जगद्गुरुश्रीशङ्कराचार्यमहोदयानां श्रीमद्रामानुजाचार्याणाञ्च प्रतिनिधीनाम्, शास्त्रिमहोदये भूयान् सद्भावोस्य व्यवहारयोग्यतां व्यनक्ति।

किं बहुना, नियमानां परिपालनं सदाचाराणां रक्षणं धर्मे श्रद्धा भगवति भक्तिः कर्मणि शक्तिः श्रुतौ व्यसनञ्चेत्याद्या ये असाधारणगुणाः कुलीने ब्राह्मणे आवश्यकास्ते सर्वेपि प्रायः शास्त्रिमहोदये खले कपोतन्यायेन संभूय एकत्रिताः। सोयं महतः प्रमोदस्यावसरः।

शास्त्रिमहोदयो वल्लभमतमनुसरतीति श्रीमद्भागवते ग्रन्थे श्रीगोवर्द्धननाथचरणसेवायां चानन्यश्रद्धां वहति। महाशयस्यास्य त्रयो विद्वांसो भ्रातरः, एका भगिनी, एकः सुतः, सुता चैका वर्तन्ते। संस्कृत-साहित्यं सेवमानः सोयं महाभागः शतायुर्लभतां प्राक्सङ्कल्पितसंस्कृत-प्रचारकार्ये च साफल्यं भजतामित्याशास्य विरमामो वयं विशेषवक्तव्यात्।

—:※:—

# साम्प्रतिकी संस्कृत-शिक्षा

( ले० श्रीपुरुषोत्तमशर्मा चतुर्वेदः, साहित्याचार्यः, शुद्धाद्वैतालङ्कारश्च )

न खलु विशेषतो विनिवेदनीयमिदं विदितवेदितव्यानां विदुषां यदियं महामहर्षिभिर्महिताऽपि, दार्शनिकशिरोमणिभिरुत्तमाङ्गेनाभ्यर्हिताऽपि, व्यास—वाल्मीकि—भास—भवभूति—कालिदासादिभिरनिशमनर्घ्यानर्घ्यरत्नराशिभिरभिपूजितपदकमलाप्यमरभारती साम्प्रतं समयविपर्ययेण वा, तत्सुतानामस्माकं विवशतया वा, शिक्षाया धनार्जनैकप्रयोजनतया वा, आध्यात्मिकेषु भक्तिज्ञानादिविषयेष्वनत्यादरेण वा, प्रतीच्यसभ्यताविज्ञानादिचाकचक्येन भारतीयानां चमत्कृतलोचनतया वा, दारिद्र्यदुर्विलसितहेतुकेन परसेवामात्रप्रवणत्वेनाध्ययनाध्यापनादिष्वनवसरग्रस्ततया वा न केवलं नोद्वरति प्रचारप्राचुर्यम्, न केवलं नोररीकरोत्यतः पूर्वं सर्वदाऽधिकृतमपि समादरणीयं भारतीयराष्ट्रभाषाभावम्, न केवलं नाद्रियते दार्शनिकैः, न केवलं न विज्ञायते वैज्ञानिकैः, न केवलं न काम्यते कविकुलैः, न केवलं नालङ्क्रियते ललिततमलेखैर्लेखकमहोदयैः, किन्तु न दीयते पदमप्यस्यै विविधेषु विद्यालयेषु; विरुध्यतेऽस्याः प्रचाराचरणमपि, व्यपदिश्यते मृतेति दुरभिधानेन परोलक्षेषु तदुपजीविषु विद्यमानेष्वपि, तिरस्क्रियन्ते चात एवैतस्याः सेवका अपि। अपि नामास्मिन् विषये विचिन्तितं दरविनिमीलितनयनमुकुलैरस्याः प्रणयिभिरस्माभिः ? विचिन्तितं चेदवश्यमेव किमपि निदानमस्यैतस्या दुरभिभवस्यान्वेषणपथमवतीर्णमेव स्यात्।

तत्र यद्यपि सर्वप्रथमं च प्रधानं च कारणं राजाश्रयाभावो दृष्टिपथेऽवतरति, सत्यं चैतदुचितं चापि, तथापि भवेदेव तथाविधमितरदपि कारणं यदिह पुराकाले संस्कृतविदुषां सत्यपि सर्वप्राधान्ये संप्रति तेषां सर्वोपेक्षणीयत्वं संपादयति। विषयेऽस्मिन् जनेनानेन भूयो भूयोऽनुभूय यत्किञ्चिद् विज्ञातं तदेवेह प्रेक्षावतां पुरस्तादुपन्यस्यते, आशास्यते च सहृदयाः सुधियः सुधीरं विमृश्यात्र तथा किमपि निर्णयेयुर्यथा निराश्रयतया प्रचारस्याल्पाल्पतामुपगच्छन्तीयं सुरसरस्वती कथमपि पुनरुज्जीवितुं प्रभवेत्, न तु पौरोभाग्यमात्रापराधं शिरसि पातयेयुः। अत एव साञ्जलिबन्धं सापराधक्षमापनं चैतदिह निवेद्यते।

तदिदं द्वितीयं सर्वप्रधानं कारणमस्मदीयपाण्डित्यस्य लोकानुपयोगितैवेत्यत्र नास्त्यंशतोऽपि नः संशयः। प्रतिपादयिष्यामश्चैतदुपरिष्टाद् यत् कथमिमे वयं प्राक्तनकाले स्वच्छसलिलसंभृताः सलिलाशया इव सर्वोपयोगिनोऽभूम सतृष्णा च जनताऽस्मानुपागच्छन्त्यदृश्यत; कथं चेदानीं पथिकैरमितहिमानीव सुदूरपरित्यक्ता रजताचला इवाराञ्जनचाकचक्यमावहन्तोऽपि समी-

रोसाङ्गविद्यालय–मुम्बईस्थसंस्कृत-प्रचारक-विद्यालयेति परिगणनीय–विद्यालयानामपि स्थापनां कृत्वा सुर–सरस्वती–सेवा स्फुटं प्रकटिता ।

उपर्युक्ताः सर्वा अपि संस्थाः सुचारु कार्यं संपादयन्त्यः शतशश्छात्रान् शास्त्र्याचार्यादिपरीक्षासु समुत्तीर्णतां नयन्त्यः शास्त्रि-महोदयस्य यशोवितानं विदधति ।

नैतावदेव, मोहमयीप्रान्तस्थच्छात्राणां वाराणसेय-परीक्षादानार्थं जबलपुरं प्रति गमनमतीवकष्टकरमर्थहानिकरञ्चावलोक्य महान्तं प्रयत्नं विधायानेन वाराणसेयप्रथम-मध्यम-परीक्षाणां केन्द्रं मोहमय्यामेव संस्थापितम् ।

शास्त्रि-महोदयः कीदृशो धार्म्मिको दृढनिश्चयी चेत्यत्र निदर्शनमेकमधस्तात् समुद्ध्रियते–

मोहमयी (मुंबई) प्रान्ते यदा कांग्रेस-राज्यं समभूत्; तदा एकेन तद्राज्यप्रधानाधिकारिणा महताग्रहेण शास्त्रिमहोदय एवमुक्तो यद् वर्तमानकांग्रेसराजनीतिमनुसरता यदि भवता विद्यालयोयं परिचाल्येत, विद्यालयस्यास्य संपूर्णोपि व्ययभारोस्माभी राज्यद्वारोरीकरिष्यते; किन्तु धार्मिकविषये हस्तक्षेपमसहमानेन धर्म्मवीरेणानेन नेदमङ्गीकृतम् । मन्ये नैतत् साधारणं कर्म ।

शास्त्रिमहोदयो न केवलं विद्याव्यसनी अपि तु सामाजिकक्षेत्रे राजनीतिक्षेत्रे चापि सोत्साहं कार्यं करोति । वर्णाश्रमस्वराज्यसङ्घेन, बह्वीभिः सनातनधर्मसंस्थाभिश्च शास्त्रिमहोदयस्य श्लाघ्यः संबन्धः । व्यवहारपटुताप्यस्य मन्ये प्रशंसनीया । वल्लभाचार्यमतप्रवर्तक-प्रख्यातधर्माचार्य–गोस्वामिकुल-कौस्तुभश्रीगोकुलनाथमहाराजानाम्, श्रीमज्जगद्गुरुश्रीशङ्कराचार्यमहोदयानां श्रीमद्रामानुजाचार्याणाञ्च प्रतिनिधीनाम्, शास्त्रिमहोदये भूयान् सद्भावोस्य व्यवहारयोग्यतां व्यनक्ति।

किं बहुना, नियमानां परिपालनं सदाचाराणां रक्षणं धर्मे श्रद्धा भगवति भक्तिः कर्मणि शक्तिः श्रुतौ व्यसनञ्चेत्याद्या ये असाधारणगुणाः कुलीने ब्राह्मणे आवश्यकास्ते सर्वेपि प्रायः शास्त्रिमहोदये खले कपोतन्यायेन संभूय एकत्रिताः । सोयं महतः प्रमोदस्यावसरः ।

शास्त्रिमहोदयो वल्लभमतमनुसरतीति श्रीमद्भागवते ग्रन्थे श्रीगोवर्द्धननाथचरणसेवायां चानन्यश्रद्धां वहति । महाशयस्यास्य त्रयो विद्वांसो भ्रातरः, एका भगिनी, एकः सुतः, सुता चैका वर्तन्ते । संस्कृत-साहित्यं सेवमानः सोयं महाभागः शतायुर्लभतां प्राक्सङ्कल्पितसंस्कृत-प्रचारकार्ये च साफल्यं भजतामित्याशास्य विरमामो वयं विशेषप्रकथ्यात् ।

# साम्प्रतिकी संस्कृत-शिक्षा

( ले० श्रीपुरुषोत्तमशर्मा चतुर्वेदः, साहित्याचार्यः, शुद्धाद्वैतालङ्कारश्च )

न खलु विशेषतो विनिवेदनीयमिदं विदितवेदितव्यानां विदुषां यदियं महामहर्षिभिर्महिताऽपि, दार्शनिकशिरोमणिभिरुत्तमाङ्गेनाभ्यर्हिताऽपि, व्यास—वाल्मीकि—भास—भवभूति—कालिदासादिभिरनिशमनघ्र्यानघ्र्यरत्नराशिभिरभिपूजितपदकमलाप्यमरभारती साम्प्रतं समयविपर्ययेण वा, तत्सुतानामस्माकं विवशतया वा, शिक्षाया धनार्जनैकप्रयोजनतया वा, आध्यात्मिकेषु भक्तिज्ञानादिविषयेष्वनत्यादरेण वा, प्रतीच्यसभ्यताविज्ञानादिचाकचक्येन भारतीयानां चमत्कृतलोचनतया वा, दारिद्र्यदुर्विलसितहेतुकेन परसेवामात्रप्रवणत्वेनाध्ययनाध्यापनादिष्वनवसरग्रस्ततया वा न केवलं नोद्धरति प्रचारप्राचुर्यम्, न केवलं नोररीकरोत्यतः पूर्वं सर्वदाऽधिकृतमपि समादरणीयं भारतीयराष्ट्रभाषाभावम्, न केवलं नाद्रियते दार्शनिकैः, न केवलं न विज्ञायते वैज्ञानिकैः, न केवलं न काम्यते कविकुलैः, न केवलं नालङ्क्रियते ललिततमलेखैर्लेखकमहोदयैः, किन्तु न दीयते पदमप्यस्यै विविधेषु विद्यालयेषु; विरुध्यतेऽस्याः प्रचाराचरणमपि, व्यपदिश्यते मृतेति दुरभिधानेन परोलक्षेषु तदुपजीविषु विद्यमानेष्वपि, तिरस्क्रियन्ते चात एवैतस्याः सेवका अपि। अपि नामास्मिन् विषये विचिन्तितं दरविनिमीलितनयनमुकुलैरस्याः प्रणयिभिरस्माभिः? विचिन्तितं चेदवश्यमेव किमपि निदानमस्यैतस्या दुरभिभवस्यान्वेषणपथमवतीर्णमेव स्यात्।

तत्र यद्यपि सर्वप्रथमं च प्रधानं च कारणं राजाश्रयाभावो दृष्टिपथेऽवतरति, सत्यं चैतदुचितं चापि, तथापि भवेदेव तथाविधमितरदपि कारणं यदिह पुराकाले संस्कृतविदुषां सत्यपि सर्वप्राधान्ये संप्रति तेषां सर्वोपेक्षणीयत्वं संपादयति। विषयेऽस्मिन् जनेनानेन भूयो भूयोऽनुभूय यत्किञ्चिद् विज्ञातं तदेवेह प्रेक्षावतां पुरस्तादुपन्यस्यते, आशास्यते च सहृदयाः सुधियः सुधीरं विमृश्यात्र तथा किमपि निर्णयेयुर्यथा निराश्रयतया प्रचारस्याल्पाल्पतामुपगच्छन्तीयं सुरसरस्वती कथमपि पुनरुज्जीवितुं प्रभवेत्, न तु पौरोभाग्यमात्रापराधं शिरसि पातयेयुः। अत एव साञ्जलिबन्धं सापराधक्षमापनं चैतदिह निवेद्यते।

तदिदं द्वितीयं सर्वप्रधानं कारणमस्मदीयपाण्डित्यस्य लोकानुपयोगितैवेत्यत्र नास्त्यंशतोऽपि नः संशयः। प्रतिपादयिष्यामश्चैतदुपरिष्टाद् यत् कथमिमे वयं प्राक्तनकाले स्वच्छसलिलसंभृताः सलिलाशया इव सर्वोपयोगिनोऽभूम सतृष्णा च जनताऽस्मानुपागच्छन्त्यदृश्यत; कथं चेदानीं पथिकैरमितहिमानीव सुदूरपरित्यक्ता रजताचला इवाराज्जनचाकचक्यमावहन्तोऽपि समी-

पमागतानां जाड्यमेव निदर्शयामो विरक्तिभाजनतां चोपयामः ।

तथा हि—छान्दोग्ये सप्तमाध्यायारम्भे नारदेन 'अधीहि भगवः' इत्यनुयुक्तः सनत्कुमारो लौकिकविद्यानभिज्ञस्यात्मविद्योपदेशानर्हतां मन्यमानः स्पष्टमेवावोचत् 'यद्वेत्थ तेन मोपसीद, ततस्त ऊर्ध्वं वक्ष्यामी" ति । अब्रवीच्च ततो नारदः "१ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदम्, आथर्वणं चतुर्थम्, इतिहासपुराणं पञ्चमम्, वेदानां वेदम्, पित्र्यम्, राशिम्, दैवम्, निधिम्, वाकोवाक्यम्, एकायनम्, देवविद्याम्, ब्रह्मविद्याम्, भूतविद्याम्, क्षत्रविद्याम्, नक्षत्रविद्याम्, सर्पदेवजनविद्यामेतद् भगवोध्येमि ।' इति । अत्र ह्यूनविंशतिर्विद्या नामभिरेव निर्दिष्टाः, या ह्यसौ नारदः स्वस्मृतिविषयत्वेन स्वीकरोति, ततः परा अपि काश्चन स्युर्या ज्ञानमात्रविषयाः स्युर्न स्मर्यन्ते स्म, यतोय 'मध्येमी'त्येवोक्तवान् , न पुनरधीता इति । सर्वस्यापि ज्ञानविषयस्य वर्तमानकालिकस्मरणविषयत्वविरहः सर्वजनसिद्ध इति तदध्ययनस्यापि विषयस्ततो भूयस्तर एव स्यादित्यत्र नास्त्येव निवेदनीयम् । अथवा मा भून्नाम तदीयज्ञानप्रसरस्ततोधिके विषयजाते, तथापि संदर्भेणैतेन तद्युगोद्भवानां विविधलौकिकविद्याभिज्ञत्वं तु स्पष्टमेव परिज्ञायते ।

याज्ञवल्क्यस्तु धर्मस्थानमात्रनिरूपणेऽपि

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इति पुराणादिदशोपबृंहणोपकारकसहितानां वेदानां तथात्वमाह ।

विष्णुपुराणे पुन :—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।

इति पूर्वोक्ता एव विद्या भिन्नक्रमेण विनिर्दिश्य—

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः ॥

इत्येवं लोकोपकारकविद्याचतुष्टयसहितानां तासामष्टादशत्वं प्रतिपादितम् । कामन्दकस्तु—

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम् ॥

कथं चेदित्थम् —

आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्त्तायां दण्डनीतौ नयानयौ ॥

१ अत्रेदं शाङ्करभाष्यम्—ऋग्वेदं भगवोऽध्येमि स्मरामि । यद्वेत्थेति विज्ञानस्य पृष्टत्वात् । तथा यजुर्वेदम्, सामवेदम्, आथर्वणं चतुर्थवेदम्, वेदशब्दस्य प्रकृतत्वादितिहासपुराणं पञ्चमं वेदम्, वेदानां भारतपञ्चमानां वेदं व्याकरणमित्यर्थः, व्याकरणेन हि पदविभागश ऋग्वेदादयो ज्ञायन्ते; पित्र्यं श्राद्धकल्पम्, राशिं गणितम्, दैवमुत्पातज्ञानम्, निधिं महाकालादिनिधिशास्त्रम्, वाकोवाक्यं तर्कशास्त्रम्, एकायनं नीतिशास्त्रम्, देवविद्यां निरुक्तम्, ब्रह्मण ऋग्यजुःसामाख्यस्य विद्यां ब्रह्मविद्यां शिक्षाकल्पछन्दश्चितयः, भूतविद्यां भूततन्त्रम्, क्षत्रविद्यां धनुर्वेदम्, नक्षत्रविद्यां ज्योतिषम्, सर्पदेवजनविद्यां सर्पविद्यां गारुडम्, देवजनविद्यां गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि । एतत् सर्वं हे भगवोऽध्येमि।

इति सांख्य-न्यायोभयमीमांसादिरूपात्मान्वीक्षणसाधनभूतान्वीक्षिक्याऽऽत्मविज्ञानम्, त्रय्या च धर्माधर्मज्ञानमिति पूर्वार्धेन निःश्रेयससाधनभूतां विद्यां निरूप्योत्तरार्धेन लोकोपकारिके वार्त्तादण्डनीती न्यरूपयत् ।

कविकुलगुरुस्तत्र भवान् कालिदासोऽपि-

धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभि-
र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥
(र० वं० ३।३०)

इत्यत्र तदेतत् विद्याचतुष्टयमेव जिज्ञास्यत्वेन प्रतिपेदे ।

तदेवं श्रुति–स्मृति-पुराण-नीतिशास्त्र–साम्प्रदायिककविप्रभृतिभिः सर्वैरपि न केवलं निःश्रेयससाधनभूतानामेव किन्तु लोकोपयोगिसर्वविधविद्यानामपि जिज्ञास्यत्वं सर्वसंमत्या स्वीकृतमित्यपाणिपिहितम् । भगवती श्रुतिस्तु देवर्षेर्नारदस्यापि गन्धयुक्तिनृत्य-गीति–वाद्य-शिल्पादीनां विज्ञानमपि प्रतिपदे, यानि कदाचिदेवाधुनिकाः पण्डितपुङ्गवाः श्रोतुमप्यनुमन्येरन् ।

वस्तुतस्तु तदिदमुचितं चावश्यकं च । यतः पुरुषार्थचतुष्टयसिद्धिर्हि पुरुषजीवनस्य लक्ष्यम् । तत्र यद्यपि प्राधान्यं मोक्षस्य, किन्तु "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति भगवद्गीतोक्तरीत्या न तस्य सुलभत्वं सर्वजनाधिगम्यत्वं चेति त्रिवर्गसिद्धिरेव सर्वजनोपयोगिनी । नैतावदेव किन्तु "नानुभूय न जानाति नरो विषयतीक्ष्णताम्" इत्युक्तरीत्या मोक्षोपयोगिनी, मोक्षप्राप्तिपर्यन्तं जीवनधारणाय चापेक्षिता चेत्यप्यकामैरप्यभ्युपेयमेव । एवं चैषा पुरुषार्थसिद्धिः पूर्वोक्ताभिरेव विद्याभिः संपादयितुं शक्येत्यप्यविवादमेव । आसीच्च सोऽपि समयो भारते वर्षे यदा पुरुषार्थचतुष्टयप्राप्तये प्रयतमानाः, पराँश्चापि प्रेरयन्तः पण्डिताः सर्वजनोपयोगिनः सर्वसमादृताश्चाभूवन्नित्येतन्निःसंकोचं प्रतिपद्यन्त एव पुरातत्त्वविदः पाश्चात्यपण्डिता अपि । तदेतत् सर्वं प्रपञ्च्य समययापनं निरर्थकमेव ।

अथेदं विमृश्यताम् । सत्यप्येवं निरावरणे सत्ये साम्प्रतिकाः पण्डितपुङ्गवाः संस्कृतभाषामधीयानान्, न जाने, कस्मै प्रयोजनाय निनीषन्ति कस्मिन्नपि संतमसच्छन्ने गर्त्ते । नैते महाभागा एषामैहलौकिकीं समृद्धिमुशन्ति, न च पारलौकिकीम् । तथा हि-साम्प्रतं काश्यादिषु ये विषया अध्याप्यन्ते तैः सर्वैकदेशिन एव विद्वांसः संपद्यन्ते । विद्यालयाद् बहिर्निःसृतमात्रोऽसौ व्याकरणाचार्यो वा न्यायाचार्यो वाऽन्यस्मिन् कस्मिंश्चिद् विषये लब्धाचार्यपदवीको वा व्यवहारानभिज्ञानां शिरोमणित्वेन स्वीक्रियते साम्प्रतिकैः । न च न सत्यमेतत् । यतो मा भून्नामास्य वैदेशिकप्रचारितेषु विषयेषु वैदुष्यम्, मा च भूदभिनवेषु विषयेषु पाण्डित्यम्, किन्त्वसौ भारतीयशास्त्राणां नामान्यपि न जानातीति तु सुमहद्दुःखास्पदम् । जनोऽयं जानाति तादृशाननेकाचार्यमहाभागान् ये न केवलं संकलन-व्यवकलन–गुणन–भाजनादिकं वा प्रचलितां हिन्दीभाषामेव वा सा-

घुतया न विदन्ति, किन्तु यैर्न ज्ञायन्ते सर्वविधप्राक्तनविद्यानिधानानां पुराणानामपि नामानि, वर्जयित्वा सुप्रसिद्धांश्चिचतुरान् श्रीमद्भागवतादीन् । यानि चैते नामतो जानन्ति न तान्यप्येभिर्महाशयैः स्वरूपेणापि दृष्टानि, दूरे पुनरास्तां तद्विमर्शकथा । अहह! कियदिदं खेदास्पदं यदस्माकं द्विजानां प्रतिदिनं ब्रह्मयज्ञे पठनीयानां शास्त्राणां ज्ञानमपि सुदूरापास्तमिदानीम् ।

विषयेऽस्मिन्ननन्तशयनग्रन्थमाला-(त्रिवेन्द्रम्) संपादकानां भगवच्चरणप्राप्तानां श्रीगणपतिशास्त्रिणामियमुक्तिरस्मत्स्मृतिपथमारोहति । तेऽवादिषुर्यद् 'अस्माकं भारतीयानां चतुर्दश विद्याः, तास्वन्यतममक्षपाददर्शनम्, तत्र प्रतिपादिताः प्रमाणप्रमेयादयः षोडश पदार्थाः, तेष्वन्यतमः प्रमाणपदार्थः, तस्य चतुर्षु भेदेष्वेको भेदोऽनुमानम् । तस्य पञ्चस्ववयवेष्वेको हेतुः, तं हेतुमपि न, किन्तु हेत्वाभासमेवाधीत्य पण्डिता भवन्तीति सुमहदाश्चर्यम् ।' अथ विचार्यतां दरनिमीलितनयनैर्भवद्भिः किमिदमिदानीं क्रियत इति ।

अथेदं निभाल्यताम् । साम्प्रतं हि संस्कृतविदुषां प्रधानं क्षेत्रं वाराणस्येव । तत्र चेदानीं न्यायव्याकरणे एव प्राधान्येनाध्याप्येते, तत्रापि परमं प्राधान्यं तु नव्यन्यायमात्रस्यैव । यदि सुबहुश्रुतोऽपि कश्चिद् विद्वान् नव्यन्यायशैल्या स्वीयं वक्तव्यं न परिष्कर्तुं शक्नोति, तर्हि तदीयो विमर्श एभिः कर्णेऽपि न क्रियते, का कथा पुनस्तस्य विद्वत्सु परिगणनायाः । अत एव तादृशपरिपाटीपण्डितानामेषां भूयस्सु शास्त्रार्थेष्वपि स्वपक्षस्थापनारहिततया परपक्षखण्डनैकप्रवणया वितण्डया निग्रहस्थाने नयनमेव दृष्टिपथमवतरति सूक्ष्मेक्षिकया निरीक्षमाणानाम् ।

यद्यपि न्यायव्याकरणयोरेषां सूक्ष्मेक्षिका तदवगन्तॄणां मनोहारिणी चौत्सुक्यवर्धिनी चेति निःसंशयं वक्तुं शक्यते, किन्तु किमेभिस्ततो निःसारितं सारम् । तथा हि—प्रथमतस्तु यदि वस्तुबुद्ध्या विचार्येत तर्हि गौतमप्रणीतं न्यायशास्त्रं न पदार्थशास्त्रम्, किन्तु तत्त्वविमर्शसाधनभूतं तर्कशास्त्रमेव । तच्च यथा पारमार्थिके तत्त्वविमर्शे उपयुज्यते तथैव परिष्कारपरिपाटीपरिहीणं लौकिकेषु न्यायाधिकरण (Court) दिष्वप्युपयोक्तुं शक्यते । संजायेत च तेन सुमहाँल्लाभोपि जनतायाः । भारतीया वस्तुविवेचनशैली च समक्षमुपतिष्ठेताधुनिकतार्किकम्मन्यानाम् । किन्तु केवलं नव्यन्यायरीत्या वाग्जालप्रसारण एवास्माभिस्तदेतदुपयुज्यते । नैतेन निःश्रेयसाधिगमो भवितुमर्हति, न च लौकिकसत्यासत्यविवेचना ।

न च तत्र निर्दिष्टाः षोडश पदार्थाः परैः कणादनिर्दिष्टायां सप्तपदार्थ्यामन्तर्भाविता इति तस्य पदार्थविज्ञानशास्त्रत्वं स्वीक्रियतामिति वाच्यम् । सर्वस्यापि प्रापञ्चिकपदार्थजातस्य कणाददर्शने सप्तपदार्थ्यबहिर्भूतत्वेन तथा कर्तुं सुकरत्वात् । नैतावन्मात्रेण न्यायशास्त्रं वस्तुविद्यात्वेन प्रत्य-

भिज्ञापयितुं शक्यते ।

अथ यदि पदार्थशास्त्रमेवेदं मन्येत, तथापि तस्य न तत्त्वविवेकसाधनभूतानां प्रमाणादीनां लक्षणमात्रपरिज्ञाने समाप्तिरुचिता । यतो गोलक्षणमविदन्तोऽपि पयोदधिनवनीतादिनिष्पादनपटवो गोपाला एव गोपदार्थोपयोगविदः स्वीक्रियेरन् जनतया, न तु गोलक्षणनिर्माणाय भूयो भूयः प्रयतमानाः पण्डिताः । अत एवेदं न्यायशास्त्रमदो वैशेषिकशास्त्रं चोभयमपि क्रमेण लाजिक ( Logic )-साइन्स ( Science ) रूपेण परिणमनार्हमपि लक्षणैकचक्षुभिरस्माभिरन्धतमस एव निपातितमिति केन वा परिणामदर्शिना तत्त्वज्ञेन न स्वीक्रियेत ।

अथ सेयमेव दशा व्याकरणस्यापि । तथा हि भगवान् पतञ्जलिः प्रारम्भ एव व्याकरणमहाभाष्यस्य शब्दानुशासनप्रयोजनम् "रक्षोहागमलध्वसंदेहाः प्रयोजनम्..." इत्यादिना सुमहता संदर्भेण वेदोपकारकत्वमेव प्रतिपादयाम्बभूव । कैयटोऽपि च व्याकरणस्य वेदद्वारैवोपयोगितां "पारम्पर्येण पुरुषार्थसाधनतामस्याह" त्यनेन स्पष्टतया प्रतिपेदे । किन्तु सुमहदस्माकं दुर्भाग्यम्, यदाधुनिका वैयाकरणशिरोमणयोऽपि कदाचिदेव वेदज्ञानेऽस्योपयोगं विदध्युः । यतः सर्वेषामपि व्याकरणाचार्याणां शिक्षा पाणिनिसूत्रेष्वर्धमात्रामात्रस्यापि लाघवं कर्तुं न शक्यत इत्यत्र, दीक्षितेन यत्किमपि लिखितं तदेव सर्वांशेन साधु-मुनित्रयमतं केवलमनेन वा नागेशेन वा सम्यक् परिज्ञातमित्यत्रैव च परिसमाप्नोतीति च नातिरोहितं विदुषाम् । आसीदिदमुपयोगि पाणिनि-सूत्रप्रचारकाले सिद्धान्तकौमुदीप्रचारकाले चेति तैस्तथा विहितम्, किन्तु सांप्रतं कस्तस्योपयोग इति न तिरस्क्रियतां विचारसरणिः । सिद्धान्तकौमुद्या अपेक्षितस्य तद्विवरणस्य चाध्ययनं सुतरामुपयोगीत्यत्र कस्तावद् विद्वान् विप्रतिपद्येत, किन्तु पाणिनिसूत्राक्षरविचारणमात्रे, दीक्षितीयलेखसमर्थने च जीवनयापनं धर्ममोक्षयोः साधनमिति श्रद्धाजडातिरिक्तः को नाम श्रद्दध्यात् ! अतिसंक्षेपेण साम्प्रतं प्राधान्येन प्रचलितयोर्न्यायव्याकरणयोः सेयं दशा निवेदिता विदुषां पुरतः ।

अथेतरेष्वपि साधारणविषयेषु निःक्षिप्यतां दृष्टिः । साहित्यशास्त्रं हि सर्वविधकविकर्ममर्मविज्ञानायैवाविष्कृतम् । अत एव हि तत्र भाषाभेदमनादृत्य संस्कृतपद्यानीव प्राकृतपद्यान्यप्युदाह्रियन्त एव । किन्तु साम्प्रतिकः साहित्याचार्यैः संस्कृतभाषायां येषु दोषेषु दृष्टेषु नासिकासंकोचमञ्चति, तत्सजातीयानेव दोषान् हिन्दीभाषायां विदधदपि न लज्जते, न च हिन्दीपद्यानि विवरीतुमप्येष यथावच्छक्नोति । किञ्च यथाऽस्य काव्यप्रकाश-रसगङ्गाधरादिपङ्क्तिलापने संरम्भः समायाति दृग्विषयताम्, न तथा ध्वनिदोषगुणालङ्कारादिपरीक्षणे । ततश्च साहित्यसदृशे परमव्युत्पादके सर्वोपयोगिनि च विषयेऽपि भूयांसः पुस्तकपाठका एव दृश्यन्ते, न पुनः श्रुतमात्र एव पद्ये तत्त्वका-

व्यवृत्तिप्रयोजकव्यङ्ग्यादिबोद्धारः।

सेयमेव दशा ज्यौतिषस्य। ज्यौतिषं हि ज्योतिर्विषयकं विज्ञानम्। किन्त्वेते महाशया आचार्यपर्यन्तमधीयाना अपि न परिचिन्वन्ति नामतोऽपि सर्वाणि ज्योतींषि। कुतः पुनरेते विद्युरस्मिन् विषये नवनवमन्विष्यमाणं वस्तु, कुतश्चास्योपयुक्ततां साधयेयुः।

अत्युपयोगिन्यायुर्वेदेऽपि सेयं दुरवस्था दरीदृश्यते। वैद्यमहाशयो विद्यालये वौषधालये वा विद्यमान एवोल्लाघतामार्त्तानां संपादयितुं प्रयतते। नैष परिचिनोत्योषधीः, नापि नवनवानुत्पद्यमानान् विकारान्। अत एव सुविमृश्य निरूपितोऽप्यृषीणामौषधोपचारो न तथा साफल्यमधिगच्छति यथास्यास्माकशास्त्रेषु दृश्यते गौरवम्।

यद्यपि साम्प्रतं शास्त्रार्थविजयसिद्धये (न त्वात्मज्ञानाद्यर्थम्) कैश्चन वेदान्तादिदर्शनान्यप्यधीयन्ते, किन्तु तदीयं वस्तु सर्वात्मना विमृशतां परमार्थसाधनस्य प्रधानसाधनत्वे स्वीक्रियमाणानामतिमात्रश्रद्धया गृह्यमाणनामधेयानां पुराणधर्मशास्त्रादीनां तु पाठनेऽप्यस्माकमसामर्थ्यं जागर्त्ति। संस्कृतज्ञा हि यथा व्याकरणादीनि पङ्क्तिशो निरवकरीकृत्य पाठयितुं शक्नुवन्ति न तथा वेदपुराणधर्मशास्त्रादीनि। अत एव समुपस्थिते धर्मसंबन्धिनि प्रश्ने महाभागा एते परिष्कारादिना प्रतारयन्तो वा गजनिमीलिकामाचरन्त एव वा दृश्यन्ते।

मान्याः पाठकमहाभागाः! दिङ्मात्रमेवैतत्। किन्तु पौरोभाग्यमयमाचरतीति मन्यमानानामाधुनिकसंस्कृतज्ञानां लेखकः केवलं कोपभाजनतामेव नेयादिति विरम्यते विस्तरात्। किञ्च, परिणामदर्शिनां कृतविद्यानां कृते त्विदमपि पर्याप्तम्, पुनर्दुर्दुरूढास्ते x लेखसहस्रैरपि न शक्येरन्ननुनेतुम्।

अवसाने च साञ्जलिः पुनरप्येतदेव निवेदयामि यत् संस्कृतशिक्षाप्रणयिभिः प्राक्तनशैल्या सर्वविधविद्याप्रावीण्याय प्रचारः प्रारभ्यताम्, अध्याप्यन्तां च ते ते सर्वोपयोगिनो विषयाः सुविमर्शपूर्णया परिपाट्या, न विस्मर्यतां च परलोक इवायं लोकोऽपि। येन भगवतीयममरभारती भारतीयानां शिरः समुन्नमयन्ती पुनरप्युज्जीवितुं प्रभवेत्, उद्घोषयेम च पुनरपि वयमेकवारम्—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
सर्वा विद्याः सुशिक्षेरन् पृथिव्यां सर्वमानवाः॥

इत्यलमतिप्रपञ्चितेन। शिवमस्तु।

---

## ❀ शिक्षासमीक्षा ❀

महामहोपाध्याय पं० श्रीबालकृष्णमिश्रमहाभागः (प्रिंसिपल, प्राच्यविभाग-हिन्दुविश्वविद्यालय, बनारस)

सुखयतितरां न रचति परिचयलेशं वराङ्गनेव श्रीः।
कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि॥
'गोवर्धनाचार्याः।'

स्पृहणीय-प्राचीनविपश्चित्परम्परापरिप्राप्तपाठ—प्रणालिकापरिवर्तनाय परितो बहलं कोलाहलं कलयन्ति लोकाः, येनाकुलीक्रियन्ते श्रुतयः। तत्र परिवर्तनं नाम कीदृ-

# काशिकराजकीय-संस्कृतमहाविद्यालयस्येतिहासः

लेखकः पं० नारायणशास्त्री खिस्ते, साहित्याचार्यमहोदयः काशी।

भारतीयेतिहासक्षेत्रे समतीता अष्टादशी शताब्दी किल बहुभिर्हेतुभिश्चिरस्मरणीया वर्त्तते। भारतीया नैनमन्धकारमयं कालं सानन्दं स्मरिष्यन्ति। अष्टादश्यां शताब्द्यां हि मुगल-(यवन)साम्राज्यं जर्जराङ्गं सद् विनश्यदेवासीत्, महाराष्ट्रराज्यशक्तिरपि क्रमिकह्रासाभिमुखी आसीत, दक्षिणस्यां दिशि हैदरअली-टिपू-सुलतानराज्ये अपि नामशेषावस्थां गते आस्ताम्। 'ईस्ट-इंडिया-कंपनी' नाम्नी संस्था तदानीं मुगलराजसत्तां दुर्बलामाकलय्य प्रथमतो वङ्गदेशे स्वाधिपत्यं प्रत्यतिष्ठिपत्। क्रमशो व्यात्ताननां सती निखिलं भारतमात्मसात्कर्तुं प्रयतते स्म। संयुक्तप्रान्ते लखनऊ-शासकानां नवाबवंश्यानामाकण्ठं विलासार्णवमग्नतया संयुक्तप्रान्तशासनभारोऽपि पूर्वोदिताया 'ईस्टइंडियाकंपनी'संस्थाया एव हस्ते निपतितः। अत्रैवान्तरे काश्यां बलवन्तसिंहभूमिहारनाम्नो वीरस्योदयो बभूव। स च महावीरः स्वपराक्रमेण लखनऊ-शासकानां राज्यस्य पूर्वभागं स्वायत्तं चकार। परन्तु दुर्दैववशात्तदुत्तराधिकारिणः स्वाधिकारमक्षुण्णं रक्षितुं नापारयन्। कतिपयैरेव वर्षैस्तेऽपि 'ईस्टइंडियाकंपनी' संस्थाधीना अभवन्। इतिहासपुराणप्रसिद्धेयं काशीपुरी च ततः प्रभृत्येव काशीराज्याधिकारिणामाधिपत्यान्मुक्ता भूत्वा आङ्गलराज्यान्तर्गता बभूव।

ई. सन् १७८६ समये यदा लॉर्ड्-कार्नवालिस्महोदयो गवर्नरजेनरलपदे प्रतिष्ठित आसीत्, तदा जोनाथन्-डंकन्-नामकः शासकः (कमिश्नर) काशीं शास्ति स्म। 'ईस्टइंडियाकंपनी'कृतमादेशमनुसरता तेन काशी-राज्ये विद्यमानाः सर्वे कुप्रबन्धा निवारयितुमारब्धाः। ततः प्रभृत्येव काशीराज्ये भूकरस्य स्थायी प्रबन्धः Permanant Settlement) सञ्जातः, सहैव तेन काशी-राज्यस्यैको भागः काशी-राज्याधिकारिणां हस्तादपगतः।

जोनाथनडंकन्महोदयो विद्वान् उदाराशयः सहृदयश्चाऽऽसीत्। तदुपदेशानुसारमेव तात्कालिककाशी-राज्याधिकारिणा राज्ञा महीपनारायणसिंहदेवेन प्रतिवर्षं विंशतिसहस्रमुद्रात्मकाऽऽयकरशालिनी भूमिः काश्यामेकस्याः संस्कृतपाठशालायाः सञ्चालनार्थं प्रधानशासकानां सविधे न्यासीकृता। ई० सन् १७९१ समये पूर्वोक्तद्रव्यसाहाय्येन काशिकराजकीयसंस्कृतमहाविद्यालयः संस्थापितोऽभूत्।

इत्थं महाविद्यालयं संस्थाप्य, एतद्देशीया राजानो भारतीयां संस्कृतिं शास्त्राणि च यावता समादरेण पश्यन्ति, तदपेक्षयाप्यधिकेन समादरेण 'ईस्टइंडियाकंपनी' राजपुरुषाः पश्यन्तीति सक्रियं समुद्घोष्य जोनाथन् डंकन्महोदयेन जनताविश्वासभाजनता समासादिता।

किञ्च तदानीं मुगलराज-[illegible] नि-

पातेन उत्तरभारते याऽराजकता प्रसृताऽऽसीत्, तया वेदशास्त्राणां पठनपाठनप्रबन्धः प्रायोऽस्तमितोऽभूत् । जोनाथन्डंकन्महोदयः पूर्वोक्तया परिस्थित्या हिन्दूशास्त्राणां सर्वथा लोपमवश्यभाविनमाकलय्य तत्परिजिहीर्षया काश्यामेकां तथाविधां संस्कृतपाठशालां स्थापयितुमैच्छत्, यस्यां वेदशास्त्राणामध्ययनाध्यापने निर्बाधमखण्डं प्रचलेताम्, सत्यामावश्यकतायां तत्रत्याः पण्डिता हिन्दूधर्मशास्त्राणि (Hindu Laws) आङ्ग्लराजपुरुषान् बोधयितुं प्रभवेयुश्च ।

किञ्च तदानीं मुद्रणकलाया अप्रचारात् वेदशास्त्राणि हस्तलिखितपुस्तकावस्थितान्येवासन्, तानि पुस्तकानि सुरक्षितानि स्थापयितुं तद्द्वारा वेदशास्त्रविद्याप्रचारं च कर्तुं जोनाथन्डंकन्महोदयेन संस्कृतपाठशालासम्बद्ध एकः संस्कृतपुस्तकालयोऽपि स्थापयितुमुचित इति विमृश्य निर्द्धारितम् ।

इत्थं सदुद्देश्यप्रेरितस्य जोनाथन्डंकन्महोदयस्य प्रयत्नैः काशिराजदत्तद्रव्यसाहाय्येन च काश्यां प्राचीनहस्तलिखितपुस्तकसंग्रहालङ्कृतपुस्तकालयसहित एकः संस्कृतमहाविद्यालयः स्थापितोऽभूत् ।

इत्थं सुस्थापिते संस्कृतमहाविद्यालये प्रथमतः १पाणिनीयं व्याकरणम्, २ऋग्वेदभाष्यम्, वेदवेदान्तौ, ३न्यायशास्त्रम्, ४पुराणकाव्ये, ६ज्यौतिषशास्त्रम्, ७आयुर्वेदः, ८ धर्मशास्त्रं चाध्याप्यते स्म । पाठशालाप्रबन्धव्यवस्थापनार्थमेकः प्रधानपण्डितः पं० काशीनाथशास्त्री तर्कालङ्कारनामा च न्ययुज्यत । ई० सन् १८०१ समये पाठशालायां द्वादशाध्यापका आसन्, यत्र चतुर्णां वेदानां चत्वारोऽध्यापका अपि संमेलिताः । महाविद्यालयस्थापनावसरे ये ये नियमा निर्द्धारितास्तत्र 'आयुर्वेदातिरिक्तविषयाध्यापकाः सर्वेऽपि जन्मना ब्राह्मणा एव नियोक्तव्याः, प्रधानाध्यापकोऽपि यथासम्भवं ब्राह्मण एव नियोजनीयः' इति नियमो भूयान्भार आसीत् । ये विषया धर्मशास्त्रानुसारं द्विजात्यतिरिक्तानां पुरो नेतुमयोग्यास्तेषु विषयेषु ब्राह्मणपण्डितसमितिरेव परीक्षाग्रहणाधिकारिणी भवेदिति च नियमो निर्द्धारितोऽभवत् ।

इत्थमपि सुप्रतिष्ठितं महाविद्यालयं सञ्चालयितुमधिकृता राजपुरुषा अवसरेऽवसरे नैकविधा आपत्तीरनुपपत्तीश्चान्वभूवन्—भृतकाध्यापनं हि शास्त्रेषु निन्दितमिति तात्कालिकाः केऽपि प्रख्याताः पण्डिता वेतनं गृहीत्वा छात्राणामध्यापनं नान्वमन्यन्त । ये च केचन लोभाभिभूताः पण्डितास्तथाऽन्वमन्यन्त, तेषां स्वजातिबहिष्कारात्मको दण्डोऽप्यनुभवनीय आसीत् । एवंविधैः कारणैरेव पाठशालायाः सुप्रबन्धो न चिरमक्षुण्णो रक्षितोऽभूत् ।

अधिकारिणां राजपुरुषाणां विचारदृष्टौ भारतीयानां विदुषां संस्थासुप्रबन्धकरणे परमपाटवं निश्चितमभूत् । अत एव ई० सन १७९८ वर्षे पाठशालाप्रबन्धसञ्चालनायैका समितिः संस्थापिता, यस्याः प्रथमः प्रधानमन्त्री कॅप्टनविलफोर्डमहोदयो नियुक्तोऽभूत् । तस्मिन् समये पाठशाला काश्यामेव तत्तत्स्थानेषु भाटकगृहीतगृहेषु प्रचलति स्म ।

श्रीजटाशङ्कर-श्रीरामानन्दपण्डितावपि कियन्तंचित कालं यावत्प्रधानपण्डितासनासीनावास्ताम्। ई० सन् १८२० वर्षे कॅप्टन फेल Fell महोदयः पाठशालाया मुख्याधिकारित्वेन Suprintendent न्ययुज्यत। ई० सन् १८३०वर्षे आङ्गलविद्यापाठशालाऽपि प्रतिष्ठिताऽभूत्। केप्टनथोरेसबी Thoresby महोदयः उभयोः पाठशालयोः प्रधानाध्यक्षपदे कार्यं कृत्वा ई० १८३५ वर्षे सेवानिवृत्तोऽभूत्।

ई० १८३५ वर्षे निकल्स Nicholls महोयः पूर्वोक्तं पदं भेजे। ई० १८४० वर्षे जॅानम्यूरमहोदयस्तत्पदमारुरोह। ई०१८-४५ वर्षे मि० वालिस Wallis महोदयः समागतः। मासद्वयानन्तरमेव डॉ. बलंटाइन Dr. Ballantyne महोदयः पाठशालाद्वयी-प्रधानाध्यक्षपदं प्राप। ई० सन् १८-४७ वर्षे पाठशालाया वर्तमानभवनस्य शिलान्यासः तात्कालिककाशिराजकरकमलद्वारा सम्पन्नः। ई० सन् १८५२वर्षे वर्तमानभवनोद्घाटनमहोत्सवोऽपि सञ्जातः। डॉ. बलंटाइनमहोदयानन्तरं सम्भवतो ग्रिफिथ Griffith महोदयः प्रिंसिपलपदं भेजे। ततः परं डॉ. थिबो Dr. Thibout महोदयः ई. १८८८ वर्षपर्यन्तं स्वपदमलंचकार। तदनु डॉ. वेनिस Dr. Venis महोदयः ई०१९-१८ वर्षपर्यन्तं प्रिंसिपलपदं भूषयामास। डॉ. बलंटाइन, डॉ थिबो, डॉ. वेनिस-एते त्रयः प्रधानाध्यक्षाः परमसौभाग्यशालिन आसन्। एतेषामेव कार्यकाले पाठशालायाः क्रमशः समुन्नतिः, महतां विदुषां च संमेलनं समभूत्। डॉ० वेनिसमहोदयसत्सङ्गसौभाग्यं प्रकृतलेखलेखकस्यापि प्रायः पञ्चवर्षाधिककालं सम्पन्नम्।

प्रथितयशसः सर्वाङ्गीणसौभाग्यसम्पन्नाः पण्डितप्रवरा महामहोपाध्याय-डॉ. गङ्गानाथझामहोदयाः ई० १९२४ वर्षपर्यन्तं केवलसंस्कृतमहाविद्यालयप्रधानाध्यक्षपदमभजन्। तदनु योगिराजाः प्रशान्तमूर्तयो विद्यासागरा महामहोपाध्याय-श्रीगोपीनाथकविराजमहोदयाः ई० १९३७ वर्षपर्यन्तं तत्पदमलङ्कृत्यावकाशमगृह्णन्।

इदानीं प्राच्यप्रतीच्यविद्यापारङ्गमा डॉ. मङ्गलदेवशास्त्री, एम्. ए. डी. फिल (Oxen) महोदयाः पाठशालाप्रधानाध्यक्षपदं गौरवशिखरिशेखरमारोपयन्तो विराजन्ते।

---

शम् ? शास्त्रीयग्रन्थैरग्रगामिभिः सह संस्कृतनीतिनाटकगद्यपद्यकाव्यालङ्कारहिन्दी–व्याकरणेतिहासभूगोलगणितवैज्ञानिकादि–ग्रन्थानां बाहुल्यम् ? उत पूर्वेषामल्पत्वं परेषाञ्च तत् ? आहोस्विदेनयोर्वैपरीत्यम् ? तदुभयोरल्पत्वेन साम्यं वा ? अत्र क्रियमाणे विचारे मम चेतसि पौरस्त्यवासनावशाद्वा अनुपचितचैतन्याद्वा नैतच्चारुतया प्रतिभाति । तथा हि शास्त्रीयपदार्थानां तत्त्वनिर्णयो वा १ व्यावहारिकवस्तुबोधो वा २ सामान्यतः पुराप्रतिपादितपदार्थवस्तुनोर्ज्ञानं वा ३ परकीयाभिमानप्रत्याख्यानं वा ४ पाठयितृपदप्राप्तिर्वा ५ अपरजीविकालाभो वा ६ सत्कारो वा ७ तस्य प्रयोजनमभिमतम् ? एतस्यानधिगतौ प्रेक्षावतां प्रवृत्तेरनुत्पादात् । तेषु न प्रथमश्चतुर्थश्च कथमपि कथनपथमवतरति, असम्भवात् । यथा चायं तथोपरिष्टाद्व्यक्तीभविष्यति । न द्वितीयः, शास्त्रग्रन्थकथायाः प्रवेशस्य वैयर्थ्यापातात् । न तृतीयः, विगीयमाना पल्लवग्राहिता प्रसेत् तदभ्युपगमे मूलस्यैव शैथिल्यं स्यात् , सविशेषफलप्रसवासमर्थतया तत्कृते प्रयासस्याप्याकस्मिकत्वं प्रसज्येत । न पञ्चमः, प्रयोजकधर्मभेदस्य लब्धुमशक्यतया तद्वथावर्तमानं प्रयोज्यमपि व्यावर्तयेत् । तादृशा एव विद्यालयाः प्रादुर्भविष्यन्ति यत्रैतेऽध्यापकतया नियोक्ष्यन्त इति चेत् अनाश्वासो हृदयस्य । तदीयं दौर्बल्यमिति चेत्, अस्तु, दैवं निन्दनीयम्, यदिदमदिशदीदृशं मे हृदयम् । न षष्ठः, असङ्ख्याताङ्गलभाषाविदुषामनवकाशतया बाधकत्वमापद्येत येन नाप्रान्यायात् ।

नापि सप्तमः, पण्डितानां परिषदि तस्य व्याहृतिरपि न पादमादधाति किमुत स्वरूपम् । क्वाचित्कस्य चानभिलषणीयत्वमेव विवेकिनाम् । अपरव्यापारेण च समं समानयोगक्षेमता च क्षोदक्षमा । वस्तुतस्तु सम्मानलालसां प्रत्यादिशति भगवान् मनुः-

"सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव"

उपनयनात् प्राङ् नामलिङ्गवचनबोधनपुरस्सरं कोशस्य, परतश्च स्वस्वशाखासंहितायाः, विद्युद्विद्योतमानव्युत्पत्तिवैशद्याय कौमुद्या व्याकरणे विना विवेचनाविस्तारात्, एतेन च सार्धं न्याये सिद्धान्तमुक्तावल्याः, अलङ्कारे चन्द्रालोकस्य, काव्ये गद्यपद्ययोः कतिपयांशस्य, छन्दसि श्रुतबोधस्य, ज्यौतिषे च गुणनभागसंयोजनवियोजनानामध्ययनं समेषां द्विजन्मनामावश्यकम् ।

अनन्तरं मतिप्रतिभोत्साहानुसारेण वेदव्याकरणन्यायमीमांसावेदान्तज्योतिषसाहित्यायुर्वेदानामन्यतमस्य प्रधानतयाऽध्ययनम्, तत इतरेषु शास्त्रेषु परार्ध्यस्यैकैकस्य निबन्धस्य । तत्तन्निबन्धार्थबोधः कृतेऽप्यध्ययने यावत् सम्यक्तया नात्मानं लभेत तावदधीतस्यैव पुनरध्ययनं विधेयमवघातवत् । अन्तराले परस्ताच्च सब्रह्मचारिभिरपरैर्गुरुभिर्वा सह सहर्षमभिनिवेशनिवेशरहितो विचारः शेमुषीदार्ढ्याय कार्यः ।

संसर्गसमागतपाप्मानमपोहितुमेवंविधं प्राक्तनप्रणालिकायाः प्रदीपन परिवर्तनमी-

शम् ? शास्त्रीयग्रन्थैरग्रगामिभिः सह संस्कृतनीतिनाटकगद्यपद्यकाव्यालङ्कारहिन्दी–व्याकरणेतिहासभूगोलगणितवैज्ञानिकादि–ग्रन्थानां बाहुल्यम् ? उत पूर्वेषामल्पत्वं परेषाञ्च तत् ? आहोस्विदेनयोर्वैपरीत्यम् ? तदुभयोरल्पत्वेन साम्यं वा ? अत्र क्रियमाणे विचारे मम चेतसि पौरस्त्यवासनावशाद्वा अनुपचितचैतन्याद्वा नैतच्चारुतया प्रतिभाति। तथा हि शास्त्रीयपदार्थानां तत्त्वनिर्णयो वा १ व्यावहारिकवस्तुबोधो वा २ सामान्यतः पुराप्रतिपादितपदार्थवस्तुनोर्ज्ञानं वा ३ परकीयाभिमानप्रत्याख्यानं वा ४ पाठयितृपदप्राप्तिर्वा ५ अपरजीविकालाभो वा ६ सत्कारो वा ७ तस्य प्रयोजनमभिमतम् ? एतस्यानधिगतौ प्रेक्षावतां प्रवृत्तेरनुत्पादात्। तेषु न प्रथमश्चतुर्थश्च कथमपि कथनपथमवतरति, असम्भवात्। यथा चायं तथोपरिष्टाद्व्यक्तीभविष्यति। न द्वितीयः, शास्त्रग्रन्थकथायाः प्रवेशस्य वैयर्थ्यापातात्। न तृतीयः, विगीयमाना पल्लवग्राहिता प्रसेत् तदभ्युपगमे मूलस्यैव शैथिल्यं स्यात्, सविशेषफलप्रसवासमर्थतया तत्कृते प्रयासस्याप्याकस्मिकत्वं प्रसज्येत। न पञ्चमः, प्रयोजकधर्मभेदस्य लब्धुमशक्यतया तद्वथावर्तमानं प्रयोज्यमपि व्यावर्तयेत्। तादृशा एव विद्यालयाः प्रादुर्भविष्यन्ति यत्रैतेऽध्यापकतया नियोक्ष्यन्त इति चेत् अनाश्वासो हृदयस्य। तदीयं दौर्बल्यमिति चेत्, अस्तु, नैवं निन्दनीयम्, यदिदमदिशदीदृशं मे हृदयम्। न षष्ठः, असङ्ख्याताङ्गलभाषाविदुषामनवकाशतया बाधकत्वमापद्येत येन नाप्राप्तन्यायात्।

नापि सप्तमः, पण्डितानां परिषदि तस्य व्याहृतिरपि न पादमादधाति किमुत स्वरूपम्। क्वाचित्कस्य चानभिलषणीयत्वमेव विवेकिनाम्। अपरथ्यापारेण च समं समानयोगक्षेमता च क्षोदक्षमा। वस्तुतस्तु सम्मानलालसां प्रत्यादिशति भगवान् मनुः-

"सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव"

उपनयनात् प्राङ् नामलिङ्गवचनबोधनपुरस्सरं कोशस्य, परतश्च स्वस्वशाखासंहितायाः, विद्युद्विद्योतमानव्युत्पत्तिवैशद्याय कौमुद्या व्याकरणे विना विवेचनाविस्तारात्, एतेन च सार्धं न्याये सिद्धान्तमुक्तावल्याः, अलङ्कारे चन्द्रालोकस्य, काव्ये गद्यपद्ययोः कतिपयांशस्य, छन्दसि श्रुतबोधस्य, ज्यौतिषे च गुणनभागसंयोजनवियोजनानामध्ययनं समेषां द्विजन्मनामावश्यकम्।

अनन्तरं मतिप्रतिभोत्साहानुसारेण वेदव्याकरणन्यायमीमांसावेदान्तज्योतिषसाहित्यायुर्वेदानामन्यतमस्य प्रधानतयाऽध्ययनम्, तत इतरेषु शास्त्रेषु परार्ध्यस्यैकैकस्य निबन्धस्य। तत्तन्निबन्धार्थबोधः कृतेऽप्यध्ययने यावत् सम्यक्तया नात्मानं लभेत तावदधीतस्यैव पुनरध्ययनं विधेयमवघातवत्। अन्तराले परस्ताच्च सब्रह्मचारिभिरपरैर्गुरुभिर्वा सह सहर्षमभिनिवेशनिवेशरहितो विचारः शेमुषीदार्ढ्याय कार्यः।

संसर्गसमागतपाप्मानमपोहितुमेवंविधं प्राक्तनप्रणालिकायाः प्रदीपमं परिवर्तनमी-

हितं चेद् ओमिति ब्रवीमि विकस्वरैः स्वरैः । तथा सति दैवदाक्षिण्ये नातिविलम्बेन शास्त्रेषु स्पृहणीयं पाण्डित्यं सम्पत्तुमीष्टे, धर्मस्तु मातापित्रोर्गुरोरप्याचरणानामालोचनेन पुस्तकं विनाप्यनुशासनेन चावसातुं शक्यते। हिन्दीभाषादिज्ञानं व्यवहारेण तत्पुस्तकवाचनेन च पश्चात् स्वयमेव प्ररोढुमर्हति। अतस्तयोर्ग्रन्थानां परीष्टिकर्मकोटिप्रविष्टतयाऽध्ययनमतिभाराय कल्पमानं परिहरणीयमेव। तमेव हि विषयमधीयीत यस्य ग्रहो गुरुं विना न जायेतेति। उदीरितपरिवर्तनस्याङ्गीकारे पठनेनैव तारुण्यसमयः समापितः स्यादिति नाशङ्कनीयम्, पञ्चविंशवर्षात् प्रागेव पठनसमाप्तिसम्भवात्। यदि तावदेतदप्यसोढव्यमेवेत्यभिधीयते, तदा द्वादशाहसाध्यं सत्रमेकादशभिरहोभिः, सप्तसु वासरेषु आमयशामकमौषधं त्रिष्वेव वासरेषु कालात्ययमसहमानाः गृहंजनाननुरुन्धाना वा कुतो न विदधति निषेवन्ते चेति वक्तव्यमापतति। फलं नोद्भवेदिति चेत् तुल्यं प्रकृतेन। सन्तोषो हि मूलं धर्मस्य, तदुपयोगिनीनां च विद्यानाम्। अत एव शाकेनाप्युदरपूर्तौ तृप्तिमतां धृतधैर्याणां श्रद्धावतामौद्धत्यविधुराणामनालस्यवश्यानां किल्बिषाद् बिभ्यतां नित्यनैमित्तिककर्मानुष्ठाननिष्ठानामेवात्राधिकारः राजसूय इव पार्थिवानाम्, मुक्तिमार्ग इव साधनचतुष्टयवताम्। उक्तं हि केनचन कविना—

"नान्योद्योगवता न चाप्रवसता नाऽस्मानमुत्कर्षता
नालस्योपहतेन नामयवता नाचार्यविद्वेषिणा।
लज्जाशीलविलाससुन्दरतनुं सीमन्तिनीं नेच्छता
लोके ख्यातिकरः सतामभिमतो विद्यागुणः प्राप्यते॥"

नेतरेषां धनमात्रकामुकादीनाम्। तद्धि प्रयोजनमानुषङ्गिकम्। केवलं च तद्वाणिज्यनृत्यप्रभृतिक्रियातोऽप्यर्जयितुं शक्यत इति तत्प्रेप्सूनां पुरोदितक्रियायामेव प्रवृत्तिरौचित्यचारुतामञ्चति न तु कायकार्श्यकारकेषु शास्त्रशीलनेषु—

"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्"

इति भट्टकुमारिलोक्तेः। पुरातनप्रणालिकया सम्पदोऽवश्यंभाविता नियतिविरहात्तथाविधैव स्वाध्यायाध्ययनपद्धतिर्निबद्धव्या प्रबुद्धैः येन संयोगपृथक्त्वन्यायादुभयं फलं सिद्ध्येदिति देशना तु सन्निपातज्वरसन्तापसन्तानस्यापनोदनाय सद्मनामुद्भासनाय च फणिपतिचूडामणिहरणदेशनायाः सदृशी दिवानिशमेकमेव पुस्तकं कतिपयान् मासान् संवत्सरान् वाऽनुसन्दधानः संविदो वैशारद्यं विन्दति प्रशस्तदृढाभ्यासातिशयलभ्यम् ब्रह्मसंस्थ इव कैवल्यम्, न हि सूक्ष्मे समयेऽन्तरायेण सान्तर आयते वा तत्र वितन्यमानोऽप्यभ्यासः प्रतिपद्यते दृढताम्, यदाह पारमर्षे योगानुशासने सूत्रम्।

"स तु दीर्घकालादरनैरन्तर्यसेवितो दृढभूमिः"

विजातीयचमत्कारे काव्यार्थभावनाया एव पुनः पुनरनुसन्धानात्मिकायाः साधनतां दर्शयन् रसगङ्गाधरे पण्डितराजोऽपि तत्रैव चक्षुर्निक्षिपति। तस्मात्तमेव व्यापारमध्ययनपरायणा विदधीरन् येन मनोविक्षेपक्षोणितां नाच्छेत्। यदि विसंवादीनि पुस्तकानि सह पाठ्यतया निर्दिश्येरन् तदा

कथमिव प्रतिष्ठिता फलेग्रहिः प्रज्ञा समुन्मिषेत्, विशेषतो बालकानामितस्ततः सञ्चरमाणेषु हृदयेष्विति सहृदयाः कोविदा विदन्त्येव। सन्मार्गपथिकता लोकान् नेतव्या कारुण्यसङ्कुलस्वान्तेन कविकुलेन, न तु तेषां मानसानुसारेण तावदुपदेश उदर्ककल्याणाय कल्पते। तदप्रीतिपात्रतादित्रासस्त्याज्य एव हितं वाञ्छता केवलं दैवबलमवलम्बमानेन विशदहृदयेन। तापससितसप्तमीनिशावसानसमयेऽतिस्यदेन सरति समीरणे साम्प्रतिकशारीरक्लेशातिशयसाधनात् सितासितसरस्वतीसरित्सङ्गमस्नानात् सुकृतिना सावकेन किं स्रवदश्रुसम्पाताः समुत्सार्यन्ते शिशवः? अत एव–

"उपरि करवालधाराकाराः
क्रूरा भुजङ्गमपुङ्गवाः।
अन्तः साक्षाद् द्राक्षादीक्षागुरवो
जयन्ति केऽपि जनाः॥'
'परिणामसुखे गरीयसि
व्यथकेऽस्मि न् वचसि क्षतौजसाम्।
अतिवीर्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः॥"

महाकवीनां गिरोऽपि सञ्चक्षन्ते।

अथ गार्हस्थ्ये परिवारपोषणमावश्यकमनुमतञ्च स्मृतिकृताम्, यदन्तरेण द्रव्यं कथमपि न सम्भवति। न हि तदिदानीं महामनीषिणेऽपि वितीर्यते केनापि। विलुप्तप्रायाण्येव सन्ति यजनादीनि कर्माणि, आशरदः सरिदिव शनैरपचीयते सुकृताचरणम्, यस्मिन् विचक्षणा अपेक्ष्यन्त इति चेत्, तुल्यमेतत् परिवर्तनेऽपि। न हि अत्रापि जीविकालाभो नियतो धनावाप्तिर्वा। तस्मात् साधारणैरशनवसनवेशप्रभृतिभिर्वर्तनम्, विवाहव्रतबन्धनादिविषयेषु व्ययस्य धर्मशास्त्राविरोधेनाल्पीकरणम्, आडम्बरत्यागः, सत्सङ्गमनम्, भक्तिः, भगवदाराधनम्, विद्याध्ययनम्, पोषणचिन्तातिरस्करणं विधेयम्। भक्तिं विनाऽध्ययनस्यापि वैफल्यमेव, अर्थस्य प्रज्ञातुमशक्यत्वात्, यदाह–

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥'

इत्युपनिषद्वाक्यम्।

सत्येवं स्वयमेव साहाय्यमाचरिष्यन्ति बहवः,

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्"
(मुरारिः)

आश्रमनिर्वाहभारोपि लघुतामासादयन्नाराधनेऽध्ययने चान्तस्तरलतां न यापयिष्यति। भगवत्करुणया सर्वमेव साधुतयाऽवश्यमसंशयं सम्पत्स्यते–

"भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः।
योऽसौ विश्वम्भरो देवः स भक्तान् किमुपेक्षते॥"

स्मरति च भगवान् वेदव्यासो भगवद्गीतासु

'नहि कल्याणकृत् कश्चिद् दुर्गतिं तात! गच्छति।
कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति॥"

न च दारिद्र्याद् भेतव्यम्, तद्धि किल पावनं पाण्डित्यस्य। भक्तास्तु विपदमपि वाञ्छन्ति, कैव कथा दरिद्रतायाः। यत् प्रतिपादयति अनुज्ञालङ्कारनिदर्शनतया द्रविडशिरोमणिः

'विपदः सन्तु नः शश्वद् यासु सङ्कीर्त्यते हरिः।'

'सत्यं वद धर्मं चर' इत्याद्युपनिषद्-

हितं चेद् श्रोमिति ब्रवीमि विकस्वरैः स्वरैः । तथा सति दैवदाक्षिण्ये नातिविलम्बेन शास्त्रेषु स्पृहणीयं पाण्डित्यं सम्प्राप्तुमीष्टे, धर्मस्तु मातापित्रोर्गुरोरप्याचरणानामालोचनेन पुस्तकं विनाप्यनुशासनेन चावसातुं शक्यते। हिन्दीभाषादिज्ञानं व्यवहारेण तत्पुस्तकवाचनेन च पश्चात् स्वयमेव प्ररोढुमर्हति। अतस्तयोर्ग्रन्थानां परीष्टिकर्मैकोटिप्रविष्टतयाऽध्ययनमतिभाराय कल्पमानं परिहरणीयमेव। तमेव हि विषयमधीयीत यस्य ग्रहो गुरुं विना न जायेतेति। उदीरितपरिवर्तनस्याङ्गीकारे पठनेनैव तारुण्यसमयः समापितः स्यादिति नाशङ्कनीयम्, पञ्चविंशवर्षात् प्रागेव पठनसमाप्तिसम्भवात्। यदि तावदेतदप्यसोढव्यमेवेत्यभिधीयते, तदा द्वादशाहसाध्यं सत्रमेकादशभिरहोभिः, सप्तसु वासरेषु आमयशामकमौषधं त्रिष्वेव वासरेषु कालात्ययमसहमानाः गृहजनाननुरुन्धाना वा कुतो न विदधति निषेवन्ते चेति वक्तव्यमापतति। फलं नोद्भवेदिति चेत् तुल्यं प्रकृतेन। सन्तोषो हि मूलं धर्मस्य, तदुपयोगिनीनां च विद्यानाम्। अत एव शाकेनाप्युदरपूर्तौ तृप्तिमतां धृतधैर्याणां श्रद्धावतामौद्धत्यविधुराणामनालस्यवश्यानां किल्विषाद् बिभ्यतां नित्यनैमित्तिककर्मानुष्ठाननिष्ठानामेवात्राधिकारः राजसूय इव पार्थिवानाम्, मुक्तिमार्ग इव साधनचतुष्टयवताम्। उक्तं हि केनचन कविना—

"नान्योद्योगवता न चाप्रवसता नात्मानमुत्कर्षता
नालस्योपहतेन नामयवता नाचार्यविद्वेषिणा ।
लज्जाशीलविलाससुन्दरमुखीं सीमन्तिनीं नेच्छता
लोके ख्यातिकरः सतामभिमतो विद्यागुणः प्राप्यते ॥"

नेतरेषां धनमात्रकामुकादीनाम्। तद्धि प्रयोजनमानुषङ्गिकम्। केवलं च तद्वाणिज्यनृत्यप्रभृतिक्रियातोऽप्यर्जयितुं शक्यत इति तत्प्रेप्सूनां पुरोदितक्रियायामेव प्रवृत्तिरौचित्यचारुतामञ्चति न तु कायकार्श्यकारकेषु शास्त्रशीलनेषु—

"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्"

इति भट्टकुमारिलोक्तेः। पुरातनप्रणालिकया सम्पदोऽवश्यंभाविता नियतिविरहात्तथाविधैव स्वाध्यायाध्ययनपद्धतिर्निबद्धव्या प्रबुद्धैः येन संयोगपृथक्त्वन्यायादुभयं फलं सिद्ध्येदिति देशना तु सन्निपातज्वरसन्तापसन्तानस्यापनोदनाय सद्मनामुद्भासनाय च फणिपतिचूडामणिहरणदेशनायाः सदृशी दिवानिशमेकमेव पुस्तकं कतिपयान् मासान् संवत्सरान् वाऽनुसन्दधानः संविदो वैशारद्यं विन्दति प्रशस्तदृढाभ्यासातिशयलभ्यम् ब्रह्मसंस्थ इव कैवल्यम्, न हि सूक्ष्मे समयेऽन्तरायेण सान्तर आयते वा तत्र वितन्यमानोऽप्यभ्यासः प्रतिपद्यते दृढताम्, यदाह पारमर्षे योगानुशासने सूत्रम्।

"स तु दीर्घकालादरनैरन्तर्यसेवितो दृढभूमिः"

विजातीयचमत्कारे काव्यार्थभावनाया एव पुनः पुनरनुसन्धानात्मिकायाः साधनतां दर्शयन् रसगङ्गाधरे पण्डितराजोऽपि तत्रैव चक्षुर्निक्षिपति। तस्मात्तमेव व्यापारमध्ययनपरायणा विदधीरन् येन मनोविक्षेपक्षोणितां नाच्छेत्। यदि विसंवादीनि पुस्तकानि सह पाठ्यतया निर्दिश्येरन् तदा

कथमिव प्रतिष्ठिता फलेग्रहिः प्रज्ञा समुन्मिषेत्, विशेषतो बालकानामितस्ततः सञ्चरमाणेषु हृदयेष्विति सहृदयाः कोविदा विदन्त्येव। सन्मार्गपथिकता लोकान् नेतव्या कारुण्यसङ्कुलस्वान्तेन कविकुलेन, न तु तेषां मानसानुसारेण तावदुपदेश उदर्ककल्याणाय कल्पते। तदप्रीतिपात्रतादित्रासस्त्याज्य एव हितं वाञ्छता केवलं दैवबलमवलम्बमानेन विशदहृदयेन। तापससितसप्तमीनिशावसानसमयेऽतिस्यदेन सरति समीरणे साम्प्रतिकशारीरक्लेशातिशयसाधनात् सितासितसरस्वतीसरित्सङ्गमस्नानात् सुकृतिना सावकेन किं स्रवदश्रुसम्पाताः समुत्सार्यन्ते शिशवः? अत एव—

"उपरि करवालधाराकाराः
क्रूरा भुजङ्गमपुङ्गवाः।
अन्तः साक्षाद् द्राक्षादीक्षागुरवो
जयन्ति केऽपि जनाः'॥

'परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम्।
अतिवीर्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः॥"

महाकवीनां गिरोऽपि सङ्गच्छन्ते।

अथ गार्हस्थ्ये परिवारपोषणमावश्यकमनुमतञ्च स्मृतिकृताम्, यदन्तरेण द्रव्यं कथमपि न सम्भवति। न हि तदिदानीं महामनीषिणेऽपि वितीर्यते केनापि। विलुप्तप्रायाण्येव सन्ति यजनादीनि कर्माणि, आशरदः सरिदिव शनैरपचीयते सुकृताचरणम्, यस्मिन् विचक्षणा अपेक्ष्यन्त इति चेत्, तुल्यमेतत् परिवर्तनेऽपि। न हि अत्रापि जीविकालाभो नियतो धनावाप्तिर्वा। तस्मात् साधारणैरशनवसनवेशप्रभृतिभिर्वर्तनम्, विवाहव्रतबन्धनादिविषयेषु व्ययस्य धर्मशास्त्राविरोधेनाल्पीकरणम्, आडम्बरत्यागः, सत्सङ्गमनम्, भक्तिः, भगवदाराधनम्, विद्याध्ययनम्, पोषणचिन्तातिरस्करणं विधेयम्। भक्तिं विनाऽध्ययनस्यापि वैफल्यमेव, अर्थस्य प्रज्ञातुमशक्यत्वात्, यदाह—

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥'

इत्युपनिषद्वाक्यम्।

सत्येवं स्वयमेव साहाय्यमाचरिष्यन्ति बहवः,

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्"
(मुरारिः)

आश्रमनिर्वाहभारोपि लघुतामासादयन्नाराधनेऽध्ययने चान्तस्तरलतां न यापयिष्यति। भगवत्करुणया सर्वमेव साधुतयाऽवश्यमसंशयं सम्पत्स्यते—

भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः।
योऽसौ विश्वम्भरो देवः स भक्तान् किमुपेक्षते॥"

स्मरति च भगवान् वेदव्यासो भगवद्गीतासु

'नहि कल्याणकृत् कश्चिद् दुर्गतिं तात! गच्छति।
कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति॥"

न च दारिद्र्याद् भेतव्यम्, तद्धि किल पावनं पाण्डित्यस्य। भक्तास्तु विपदमपि वाञ्छन्ति, कैव कथा दरिद्रतायाः। यत् प्रतिपादयति अनुज्ञालङ्कारनिदर्शनतया द्रविडशिरोमणिः

'विपदः सन्तु नः शश्वद् यासु सङ्कीर्त्यते हरिः।'

'सत्यं वद धर्मं चर' इत्याद्युपनिषद-

श्च। विज्ञानयुगे कूपमण्डूकाचार्याणामनुशासनं न कोऽपि श्रोष्यति नापि करिष्यतीति चेत्, सत्यं पदवाक्यप्रमाणपारावारीणाः साहित्यसौहित्यसहिताः परिशीलितनीतिविद्याः सकललोकहितकारिणः कारुणिकाः कूपमण्डूकाचार्याः। सर्वज्ञपदमध्यासितुं वैदुष्यतं वस्तु निर्मातुं वा परिवर्तनस्याग्रह आस्ताम्, किन्तु सन्ति बहवो भविष्यन्ति च ये तेषामेवाचार्याणामादेशानुसारेण प्रवर्तन्ते प्रवर्तिष्यन्ते च।

"कालो ह्ययं निरवधिर्विपुला च पृथ्वी" (भवभूतिः)

तत् कस्य हेतोः? इदानीमपि आशासु भूयसा तादृशामेव सविशेषादरस्य शारदराकाकलाकरकरनिकरनिकारकारिकीर्तेश्चाकलनात् साधुजनसङ्गतेः पुरोपार्जितपुण्यपरिपाकप्रभावाच्च। तेऽपि तथा नाद्रियन्ते यथा परे इत्यत्र एतेऽपि तथा नाद्रियन्ते यथेतर इत्यनवस्थादौस्थ्यम्, प्रकृताबाधकत्वं च। अल्पीयांसः प्रतिपादितप्रवृत्तिभाज इति चेत् का हानिः? एकश्चन्द्रस्तमो हन्ति इति किं नाश्रावि, नापि चान्वभावि परिवर्तनवादिभिः। न च विद्याया व्यापकत्वानुपपत्तिः—इष्टत्वात्, तदनुयायिनामपि प्रागभावप्रतियोगिभावेन सम्प्रदायोन्मूलनभीतिविरहात्। अङ्कुरकल्पनं तु स्वपक्षस्यापि व्याघातकतया जात्युत्तरम् अनुचितं च "आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप" इति राद्धान्तात्।

इतरेषां का गतिरित्यनुयोगे तेऽपि मदीया एवेति प्रसङ्गत सम्यक्तया सत्याग्रहावहेलनायां प्रतिबोधनीया येन तेऽप्यभ्युदयभागिनो भवेयुरितिसमाधानम्। यदि तथापि न बुध्येरन् तदा तान् प्रति मौनमालम्ब्यताम्, तेषां सन्मतये च परमेश्वरः प्रार्थ्यताम्, विद्याभिवर्धनाय च भारतधराधीश्वरप्रतिनिधीनां सविधे सविनयं निवेद्यताम्। केचित्तु प्राहुः स्थूलारुन्धतीन्यायात्, शाखाचन्द्रन्यायात्, गुडजिह्विकान्यायाद्वा कृष्यादिवत् सम्भावनया जीविकाभ्यः प्रवृत्तिमनुमन्यमानानां तेषां कृते अधिकारिभेदेन क्रियोपदेशविशेषविधानमिव कापि प्रत्यग्रा पठनप्रणालिका निर्मातव्या येन विद्याया आदराय गौरवग्राहणाय चोत्साहः प्ररोहेत, विरोधाय बुद्धिरुदयं नासादयेत, स्वरूपयोग्यता च न विलीयेत, येन समयान्तरेपि वैदुष्यं स्यादित्याहुः॥ अहन्तु प्रत्यहं महेश्वरं

'काले कारुणिक! त्वयैव कृपया ते बोधनीया नराः'

इत्येतया किञ्चित् परिवर्तितयोदयनाचार्यवाचा याचामि॥ नचेदृशकृतयुगोपदेशदायिनोऽदभ्रा दृश्यन्ते, न पुनरेककोप्यनुष्ठाताऽद्यत्वे दृश्यते इति देश्यम्, अन्विष्यताम् "न रत्नमन्विष्यति मृग्यते हि तत्" (कालिदासः) किञ्च—

'यानि अनवद्यानि कर्माणि
तानि सेवितव्यानि नो इतराणि"

इत्यौपनिषदवाक्यप्रामाण्यात् मादृशां वचनं धर्माविरोधिकर्माप्यनुसरणीयम्। एवंविधैर्वचोभिरसकृत् प्रचुरसमुदीरितैर्मादृशानामपि कदाचिदनुष्ठातृता स्यादित्येषा दिक्। वंकष्यसरन्तु जन्मान्तरेऽप्यनुगामिनी देहि-

कामुष्मिकफलप्रजननोपयोगिनी भारतवर्षवैजयन्ती विद्या सुखविलासलालसाशून्यमपारिप्लवं च मानसं सम्पाद्य लौकायतेन पुण्यपदवीव नापनोदनीया, तत्रापिकैव पठन-प्रणाली समाश्रयणीयेति । अन्ते

'सरस्वती श्रुतिमहती न हीयताम्'

इति दूयमानेन हृदा श्री १०८ सदाशिवपदाम्बुजमर्थयमानो विरमामि विस्तरात् ॥

# आयुर्वेदे प्राक्तनः-शिक्षाऽऽदर्शः

श्रीजयरामदासः स्वामी भिषगाचार्यः, जयपुरीयमहाराज-संस्कृतविद्यालये आयुर्वेदाऽध्यापकः ।

सनातनो ह्ययमायुर्वेदः । शिक्षा चास्य कालक्रमाऽनुसारं विभिन्नैः प्रकारैरादिकाले सर्वेषामेवाऽङ्गानां समुचितैवाऽऽसीत् । मध्यकाले (विशेषतो बौद्ध-जैन-यावनशासनकाले) विलुप्तप्राया विशृङ्खलिता विरलप्रचारा चाऽभूत् । सैवेदानीं पुनः स्वोन्नत्यै हस्तपादप्रचालनाऽऽदिकं प्रकुर्वन्ती प्रान्तान्तरेषु एकस्य द्वयोर्वाऽङ्गयोः परिवर्धमाना समवलोक्यते । निःसंशयं यवनराज्याऽपेक्षयाऽद्यत्वे समुन्नतिरेव, परमेषाऽपि न सन्तोषकरी । अस्मिन् राज-तन्त्र-पाश्चात्य-चिकित्सापरमोत्कर्षकाले शिक्षैषा यया दोषपूर्णविधया प्रदीयते, तयाऽनुमीयते शीघ्रमेवास्या विनाशकालः । यतो ह्यस्या हीनाऽङ्गानां पूर्त्यर्थं नवीनविज्ञानाऽभिलाषिणः सर्वथाऽन्येषामेव पद्धतिमभिवाञ्छन्ति, परं नात्मशिक्षाया उपादेयप्रकारान् परिशोधयन्ति । इदानीन्तनाः शिष्याः केवलया परिभ्रष्टया प्राचीनपद्धत्या शिक्षिता अपि प्रागिव न हि शास्त्रतत्त्वज्ञा नाऽपि च प्रायोगिककर्मनिष्णाता लोककार्यकुशलाश्च जायन्ते । ये पुनरादितो नवीनशिक्षाप्राधान्यमवलम्ब्यात्र प्रवर्तन्ते ते आर्षशिक्षायां नाऽनुभवन्ति समादरम् । ते ह्यार्षेषु सिद्धान्तेषु अनास्थावन्तः शास्त्रतत्त्वमविज्ञाय नवीनानामेव पृष्ठपोषका जायन्ते । न ते चरकादिमुनिप्रणीतग्रन्थेषु बद्धाऽऽदरा नाऽपि च तत्पद्धतिप्रचारकाः प्रत्युतोपहासं कुर्वन्तोऽपाटवं वा प्रदर्शयन्तस्तद्विघातका एव जायन्ते । अत एवैषा पद्धतिः कालान्तरे समुन्नमिष्यतीति संशयाऽऽस्पदमेव । सर्वमिदं समालोच्य यद्यस्माभिः प्राचीनाया निर्दुष्ट-भिषग्विद्यायाः परितः प्रचारः काम्यते तदा तां पद्धतिमेवोरीकृत्याग्रे पादन्यासो विधेयः स्यात् । परमत्राऽनुभूयमाना यास्त्रुटयस्सन्ति ता अवश्यं पूरणीयाः । शास्त्रं हीदं साम्प्रतिक्या पद्धत्यैव त्रुटिपूर्णमवलोक्यते । वस्तुतस्तु—अस्मिन् त्रुटिर्नाऽस्ति, अपि तु प्राचां तन्त्रकाराणां तन्त्रनिर्माणे 'सूत्र'निर्माणप्रवणा नीतिरेव सेयमासीत् । इदानीन्तनाश्च जना विस्तृतव्याख्यापराः । एवं च सर्वेषामेव विषयाणां सूत्ररूपेण वर्णनेऽपि सन्निवेशो नैवैतेषां बुद्धि-

गम्यो भवति । सूत्ररूपेण प्रतिपादितेषु विषयेषु विस्तृतव्याख्याद्वारा समयोपयोगिता संपाद्या स्यात् । पुराकाले च सर्वेषामेव विषयाणां विस्तरस्तन्त्रेष्वावश्यको नाभूत्, अत एव शास्त्रेषु सूत्ररूपेण न्यस्तानां विषयाणामध्यापनं गुरव उपरिष्टाद्दनुतिष्ठन्ति स्म । तदर्थमेव—

"शास्त्रं गुरुमुखोद्गीर्णमादायोपास्य चाऽसंकृत् ।
यः कर्म कुरुते वैद्यः स वैद्योऽन्ये तु तस्कराः ॥"

इति भिषगाचार्याणामुक्तिः । अर्थात्-गुरुभिः संक्षिप्तविषयास्ससन्देहनिराकरणं साङ्गोपाङ्गं सविस्तरञ्चाऽध्याप्याः । परं दुर्दैववशात्प्रमादाद्वा आयुर्वेदस्याऽध्ययनाऽध्यापनरीतिरेषा प्रायः सर्वथैव मध्यमकाले विलुप्ता । इदानीं पुनः प्रचालिताऽपि न सर्वाङ्गपूर्णा । काले ह्यस्मिन् शास्त्रस्याऽस्याऽध्ययनादिकं न प्राचीनशैल्या, नाऽपि च परिष्कृतया नवीनपद्धत्या संजायते । पुरा हि प्रत्यक्षज्ञानदर्शनपूर्विका शिक्षा अवश्यमासीदिति तत्र तत्र वर्णितानां प्रसङ्गानां सूक्ष्मेक्षिकया निरीक्षणेन सुस्पष्टं विज्ञायते । चरकसुश्रुतादीनां वर्णनशैलीं विलोक्याऽपि कस्य नाम संशयोऽवशिष्यते । एषा वर्णना किं प्रयोगशालासु रात्रिन्दिवा कर्माऽभ्यासं विनैव सुसम्भवा? न हि कदाऽपि केनाऽपि एवंप्रकारेण कर्तुं शक्यते । तत्तत्प्रकरणानामवधानपूर्वकमालोचनेनेदमेव विज्ञायते यच्छास्त्रस्याऽस्य यदा परा समुन्नतिरासीत्, तदा तत्र तत्र तेषां तेषामाचार्याणां विशालाः प्रयोगशिक्षणशालाः सर्वाङ्गपूर्णाश्च कर्माऽभ्यासशालाः, एवं प्रत्यक्षज्ञानप्रदानकुशलाश्च गुरवोऽप्यासन् । तदा हि विस्तृतासु तासु विज्ञानशालासु सर्वेषामेवाङ्गानामध्ययनादेः समुचित प्रबन्ध आसीत् । यदि चेदुच्यते यदस्माकं भारतीयाऽऽयुर्वेदशास्त्रमिदानीं तनदृष्ट्याऽपूर्णम्, तत्सत्यम्, तत्पूर्त्यर्थं शिक्षाक्रमः संशोधनीयः । परीक्षणशालाश्च संस्थाप्याः, तास्वपूर्णानां विनष्टप्रायाणामङ्गानां पूर्तिर्विधेया । संशोधनाऽऽवश्यकतामननुभूय, स्वशास्त्रस्थितपूर्तिप्रकारान्नालोच्य, इतरसमुन्नतपद्धतेर्गुणदोषाननाऽऽकलय्य, सदोषामपि पद्धतिं सर्वथा दोषरहितामेवाऽवधार्य तद्विषयाणां समावेशनत्वरा न कार्या । एतस्याः परिणामो न सुखाऽऽवहो भविष्यति । यदि चेत्किमप्यन्यतो ग्राह्यमेव तत्सम्यगालोच्य ग्राह्यम् । न हि तावत्किमपि जगति आरम्भतः पूर्णम् । न च कदाऽपि केनाऽपि ज्ञानस्येयत्ता कर्तुं पार्यते, तदुत्तरोत्तरं वर्धनशीलमेव । न हि पाश्चात्त्य-ज्ञान-विज्ञानं प्रथमत एवेदृशं निष्पन्नमासीत् । तदुन्नतिरपि क्रमेण बद्धपरिकरैर्विद्वद्भिर्महता श्रमेण कालेन च समवाप्ता । तथैवाऽस्माभिरपि विधेयम् ।

आयुर्वेदीयशिक्षणं सर्वथा प्रायोगिकं भवेत्तदर्थं य इदानीं सञ्चाल्यन्ते विद्यालयास्ते सर्वसाधनसम्पन्ना राज्याश्रिताश्च कार्याः । ततश्च विभिन्नविषयाणां तेषु तेषु विभागेषु नवीनपरिष्कृतप्रणाल्यनुमोदिताऽऽयोऽध्ययनाऽध्यापनपद्धति परिचालनीया ।

ततोऽपि प्राक् पाठ्यप्रणाली पाठ्यग्रन्थाश्च समयोचितास्सज्जीकरणीयाः।

प्रागपि अस्य शास्त्रस्याऽष्टावङ्गान्यासन्। तेषां पृथक् पृथगेवाध्यापका आसन्। अत एव "अत्र धान्वन्तरीयाणामधिकारः क्रियाविधौ" इत्यादिवचनानि सूपपन्नानि। इदानीं पुनरेकस्मिन् विद्यालये एकैकेनैवाऽध्यापकेनैकैका श्रेणिरध्याप्यते। तत्र चैवंविधानि पुस्तकानि पाठ्यन्ते येष्वार्षसैद्धान्तिकी व्यवस्था नास्ति। आर्षे हि काले सर्वतः प्राक् तन्त्राऽध्याप्याऽध्यापकानामेव परीक्षोच्यते। तत्र तन्त्रपरीक्षाविषये भगवता चरकाऽऽचार्येण विमानस्थानस्याऽन्तिमेऽध्याये विषयमिममधिकृत्यैवमुच्यते यत्–

"बुद्धिमानाऽऽत्मनः कार्यगुरुलाघवं कर्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनाद् भिषग्बुभूषुः शास्त्रमेवादितः परीक्षेत विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोके, तत्र यन्मन्येत सुमहद्यशस्विपुरुषाऽऽसेवितमर्थबहुलमाप्तजनपूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसङ्ग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमाऽगतार्थमर्थतत्त्वविनिश्चयप्रधानं सङ्गतार्थमसङ्कुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च तदभिप्रपद्येत शास्त्रम्। शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्वम्"। अस्मिन् समये केनाऽप्येकेनैव पुस्तकेन सर्वस्याऽप्यपेक्षितस्य ज्ञानस्य पूर्तेर्भवेत्त्वाद्दुर्लभमेव। ततः कारणादवशिष्टांशपूर्त्यर्थमेकस्यामेव कक्षायामनेकानि पुस्तकानि स्थाप्यन्ते, तेषु च ते त एव विषयाः पुनः पुनस्समायान्ति येषामध्ययनम्पुनरुक्तिबहुलत्वात्पिष्टपेषणमिव प्रायो भवति।

अनन्तरमाचार्यम्परीक्षेत तद्यथा—

"पर्यवदातश्रुतं, परिदृष्टकर्माणं, शुचिं, दक्षं, दक्षिणं, जितहस्तमुपकरणवन्तं सर्वेन्द्रियोपपन्नं, प्रकृतिज्ञं, प्रतिपत्तिज्ञमुपस्कृतविद्यमनहङ्कृतमनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनसमर्थञ्चेति। एवं गुणो ह्याचार्यः सुक्षेत्रमार्तवो मेघ इव सस्यगुणैस्सुशिष्यमाशुवैद्यगुणैः सम्पादयति।"

एवमेवाऽध्यापने कृतबुद्धिराचार्यः शिष्यमपि परीक्षेत॥ तद्यथा-

"प्रशान्तमार्यप्रकृतिकमक्षुद्रकर्माणमृजुचक्षुर्मुखनासावंशं तनुरक्तविशदजिह्वमविकृतदन्तौष्ठममिन्मिनं धृतिमन्तमनहङ्कृतं मेधाविनं वितर्कस्मृतिसम्पन्नमुदारसत्त्वं तद्विद्यकुलजमथवा तद्विद्यवृत्तं तत्त्वाऽभिनिवेशिनमव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतवेशमर्थतत्त्वभावकमकोपनमव्यसनिनं शीलशौचाचारानुरागदाक्ष्यप्रादाक्षिण्योपपन्नमध्ययनाऽभिकाममर्थविज्ञाने कर्मदर्शने चानन्यकार्यमलुब्धमनलसं सर्वभूतहितैषिणमाचार्यसर्वानुशिष्टिप्रतिकरमनुरक्तं चैवंगुणसमुदितं शिष्यमाचार्या अध्याप्यमाहुः।

असावपि शिष्यस्तं गुरुमुपसृत्योपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च भर्तृ-

-वधाऽप्रमत्तः ।

एवंविधमध्ययनार्थिनमुपस्थितमाचार्योऽनुभाषेत—उदगयने, शुक्लपक्षे प्रशस्तेऽहनि, तिष्यादिशुभनक्षत्रेण योगमुपगते भवति शशिनि, कल्याणे च करणे, मैत्रे मुहूर्ते मुण्डः कृतोपवासः स्नानादिकं कृत्वा स्रक्चन्दनाऽऽदिपूजोपकरणमादायोपतिष्ठस्वेति । स तथा कुर्यात् । तमुपस्थितमाज्ञाय समे शुचौ देशे प्राक्प्रवणे उदक्प्रवणे वा चतुष्किष्कुमात्रं चतुरस्रं स्थण्डिलं गोमयोदकेनोपलिप्तं कुशास्तीर्णं सुपरिहितं परिधिभिश्चतुर्दिशं यथोक्तचन्दनाऽऽदिपूजोपकरणाऽलङ्कृतं मेध्यभक्ष्यान्नगन्धमालाक्षताद्युपशोभितं कृत्वा तत्र समिद्भिरग्निं समुपधाय प्राङ्मुखः शुचिरध्ययनविधिमनुविधाय मधुसर्पिर्भ्यां त्रिस्त्रिर्जुहुयादग्निमाशीःसंप्रयुक्तैर्मन्त्रैर्ब्राह्मणमग्निं धन्वन्तरिं प्रजापतिमश्विनाविन्द्रमृषींश्च सूत्रकारानभिमन्त्रयमाणः पूर्वं स्वाहेति । शिष्यश्चैनमन्वालभेत । हुत्वा च प्रदक्षिणमग्निमनुपरिक्रामेत् । परिक्रम्य ब्राह्मणान् स्वस्ति वाचयेत् भिषजश्चाऽभिपूजयेत् ।

अथैनमग्निसकाशे ब्राह्मणसकाशे भिषक्सकाशे चाऽनुशिष्यात्—ब्रह्मचारिणा श्मश्रुधारिणा सत्यवादिनाऽमांसादेन मेध्यसेविना निर्मत्सरेणाऽशस्त्रधारिणा च भवितव्यम् । न च ते मद्वचनादकार्यं किञ्चिदपि स्यादन्यत्र राजद्विष्टात्प्राणहराद्विपुलादधर्म्यादनर्थप्रयुक्ताद्वाप्यर्थात्, मदर्पणेन, मत्प्रधानेन मदधीनेन मत्प्रियहितानुवर्तिना च शश्वद्भवितव्यम् । पुत्रवद्दासवदर्थिवच्चोपचरताऽनुवस्तव्योऽहम् । अनुत्सुकेन अवहितेनाऽनन्यमनसा विनीतेनाऽवेद्यावेद्यकारिणाऽनसूयकेन चाऽभ्यनुज्ञातेन प्रविचरितव्यम् । ततश्च प्रतिदिनं नीरोगः कृतक्षणः प्रातरुत्थायोपव्यूषं वा कृत्वाऽऽवश्यकमुपस्पृश्योदकं देवर्षिगोब्राह्मणगुरुवृद्धसिद्धाऽऽचार्येभ्यो नमस्कृत्य समे शुचौ देशे सुखोपविष्टो मनःपुरस्सराभिर्वाग्भिः सूत्रमनुक्रामन् पुनः पुनरावर्तयेत्, बुद्ध्वा सम्यगनुप्रविश्यार्थतत्त्वं स्वदोषपरिहारार्थं परदोषप्रमाणार्थं च एवं मध्यन्दिनेऽपराह्णे रात्रौ च शश्वदपरिहापयन्नध्ययनमभ्यस्येत् । अध्ययनान्ते च—

'वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्मनैपुणे ।
तदभ्यासे च सिद्धौ च यतेताऽध्ययनान्तगः ॥"
(सुश्रुते)

यतो हि केवलेन शास्त्रतत्त्वज्ञानेन क्रियाऽभ्यासेन वा भिषगुत्तमो भवितुन्नार्हति । तथा हि—

'यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने ।
आहवे कर्म निर्वोढुं द्विचक्रः स्यन्दनो यथा ॥'—"

प्रकारेणाऽनेन निखिलमायुर्वेदतत्त्वं गुरुकृपयोपलभ्य कृतकृत्यो भवेच्छिष्यः । इत्थमेवोपयुक्तकृत्यकलापनिपुणो हि वैद्यस्तुत्यर्हः, अत्रैव तन्त्रकाराणामपि वचनानि—

'श्रुते पर्यवदातत्वं बहुशो दृष्टकर्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥
तस्माच्छास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्मदर्शने ।
भिषक् चतुष्टये युक्तः प्राणाऽभिसर उच्यते ॥
हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे ।
ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः ॥
विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया ।

यस्यैते षड्गुणास्तस्य न साध्यमतिवर्तते ॥
शास्त्रं ज्योतिःप्रकाशार्थं दर्शनं बुद्धिरात्मनः ।
ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन्नापराध्यति ॥
प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः ।
जीविताऽभिसरास्ते स्युर्वैद्यत्वं तेष्ववस्थितम् ॥
यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः ।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम् ॥

तदनन्तरं सुनिष्पन्नं शिष्यमेवमनुज्ञापयेदाचार्यः—

'चिकित्सार्थं प्रविचरता त्वया कर्मसिद्धिमर्थसिद्धिं यशोलाभं प्रेत्य च स्वर्गमिच्छता भिषजा गोब्राह्मणमादौ कृत्वा सर्वप्राणभृतां शर्माशासितव्यमहरहरुत्तिष्ठता चोपविशता च सर्वात्मना चातुराणामारोग्याय प्रयतितव्यम् । जीवितहेतोरपि चातुरेभ्यो नाऽभिद्रोग्धव्यम्, मनसाऽपि च परस्त्रियो नाऽभिगमनीयाः, तथा सर्वमेव परस्वम् । निभृतवेशपरिच्छदेन भवितव्यम् । अमद्यप्रचारिणा अपापेन अपापसहायेन च श्लक्ष्णशुक्लधर्म्यशर्म्यधन्यसत्यहितमितवचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरणसम्पत्सु नित्यं यत्नवता च, न च कदाचिद्राजद्विष्टानां राजद्वेषिणां वा महाजनद्विष्टानां महाजनद्वेषिणां वाप्यौषधमनुविधातव्यम् । तथा सर्वेषामेवाऽत्यर्थविकृतदुष्टदुःखशीलाऽऽचारोपचाराणामनपवादप्रतिकाराणां मुमूर्षूणाञ्च, तथैवाऽसन्निहितेश्वराणां स्त्रीणामनध्यक्षाणां वा । न कदाचित्स्त्रीदत्तमामिषमादातव्यमननुज्ञातं भर्त्राऽथवाऽध्यक्षेण । आतुरकुलञ्चाऽनुप्रविशता विदितेनाऽनुमतप्रवेशिना सार्धं पुरुषेण सुसंवीतेनावाक्शिरसा स्मृतिमता स्तिमितेनाऽवेक्ष्यावेक्ष्य मनसा सर्वमाचरता सम्यगनुप्रवेष्टव्यम्, अनुप्रविश्य च वाङ्मनोबुद्धीन्द्रियाणि न क्वचित्प्रणिधातव्यान्यन्यत्राऽऽतुरादातुरोपकारार्थादातुरगतेष्वन्येषु वा भावेषु । न चातुरकुलप्रवृत्तयो बहिर्निश्चारयितव्याः, ह्रसितं चाऽऽयुषः प्रमाणमातुरस्य जानतापि त्वया न वर्णयितव्यम् । तत्र यत्रोच्यमानमातुरस्याऽन्यस्य वाऽप्युपघाताय सम्पद्यते, ज्ञानवताऽपि नाऽत्यर्थमात्मनो ज्ञाने विकत्थितव्यम्, आप्तादपि हि विकत्थमानादत्यर्थमुद्विजन्त्यनेके ।

न चैव ह्यस्त्यायुर्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत्, एतच्च कार्यम् । एवं भूयश्च वृत्तसौष्ठवमनसूयता परेभ्योऽप्यागमयितव्यम् । कृत्स्नो हि लोको बुद्धिमतामाचार्यः शत्रुश्चाबुद्धिमताम् । अतश्चाऽभिसमीक्ष्य बुद्धिमताऽमित्रस्याऽपि धन्यं यशस्यमायुष्यं पौष्टिकं लौक्यमुपदिशतो वचः श्रोतव्यमनुविधातव्यञ्चेति । अतः परमिदं ब्रूयात्—

''देवताग्निद्विज-गुरुवृद्धसिद्धाचार्येषु ते नित्यं सम्यग्वर्तितव्यम्, तेषु सम्यग्वर्तमानस्यायमग्निः सर्वगन्धरसरत्नबीजानि यथेरिताश्च देवताः शिवाय स्युः, अतोऽन्यथा वर्तमानस्याऽशिवायेति । एवं ब्रुवति चाचार्ये शिष्यस्तथेति ब्रूयात् । यथोपदेशञ्च कुर्वन्नध्याप्यः अतोन्यथा त्वनध्याप्यः । अध्याप्यमध्यापयन्नाचार्यो यथोक्तैश्चाध्यापनफलैर्योगमाप्नोत्यन्यैश्चानुक्तैः श्रेयस्करैर्गुणैः शिष्यमा-

त्मानं च युनक्तीत्यध्यापन-विधिरुक्तः।" (चरकविमानस्थानेऽध्यायः ८)

इत्येवं समवलोकिता भवद्भिः प्राचामाचार्याणामस्मिन् विषये पूता मननीया माननीयाश्च वाचः। एतमादर्शं लक्ष्यीकृत्य यदि शास्त्रस्यास्याध्ययनादिकं भवेत् तदा यत्र तत्र श्रूयमाणा, मिथ्यापदवीप्रदानादिना शास्त्रमहत्त्वनाशनतत्पराणामर्थलोलुपानां वैद्याधमानामेकदिनमपि पुस्तकमुद्घाट्यैकाक्षरमपि शिष्यायाऽप्रदाय गुरुत्वगौरवलोभलालसा न पुनस्तत्र भवतां दृग्गोचरी भवेत्। यस्याः प्रतिषेधाय गुरुपरम्परयाऽधीतशास्त्राणां विदुषां वैद्यानां प्रतिसम्मेलनं प्रतिदिनमनुष्ठीयमानो महान् प्रयत्नोऽपि वैफल्याय जायते।

एवमेव साम्प्रतिकलोकरुचिमनुरुद्ध्यास्य शास्त्रस्य बहुव्ययवहनसमर्थैरेव छात्रैरधीत्य कार्यक्षेत्रे साफल्यं प्राप्तुं शक्यत इति यद् वर्तमानो वास्तविकोऽनुभवः प्रतिक्षणं सर्वैरनुभूयते असावपि सुपरीक्षितो भवेद्येनाऽनया पद्धत्या छात्रावस्थाविनिर्गतान् कार्यक्षेत्रप्रविविक्षून् वैद्यान् अर्थाऽभावकष्टावस्था न पुनः परिपीडयेत्। यतो हि अध्यापनकक्षाप्रवेशात् पूर्वं गुरुभिरेव सर्वतः सुपरीक्षिता योग्याः समर्था मेधाविन एव छात्राः स्वीकार्याः स्युः। अतो यदि नवीनविज्ञानाऽनुमोदिता सर्वाङ्गपूर्णैषा पद्धतिरभीष्टा चेत्तदा प्राक्तनशिक्षादर्शः सर्वथा समादरणीय एव। प्राक्तनशिक्षाऽऽदर्शस्य नवीनं सामयिकं रूपं कीदृशं भवेत्? तदवसरान्तरे अन्यैर्महोदयैरालोचयिष्यमाणमाशास्य लेखकलेवरवृद्धिभयादधुना विरम्यत इति॥

---

# शिक्षाया मुख्यमुद्देश्यम्

(मथुरावास्तव्यपण्डितभट्टश्रीवल्लभद्रशर्म्मकविकाव्यरत्नाकरकविचूडामणिशुद्धाद्वैतभूषणकविरत्नमहामहोपदेशकविद्यालङ्कारवेदान्तविद्यानिधिः)

सत्यं तपो ज्ञानमहिंसता च
विद्याऽनवद्या च सुशीलता च।
एतानि यो धारयते स विद्वान्
न केवलं यः पठते स विद्वान्।
दानाय लक्ष्मीः सुकृताय विद्या
चिन्ता परब्रह्मविनिश्चयाय।
परोपकाराय वचांसि यस्य
वन्द्यस्त्रिलोकीतिलकः स एव।
प्राचाम्।

शिक्षाया मुख्यमुद्देश्यमित्येषा जिज्ञासा किं शिक्षायाः स्वप्रवृत्तौ किम्मुख्यमुद्देश्यमितितात्पर्य्यिका किं वा शिक्षापेक्षिणां शिक्षाग्रहणे किम्मुख्यमुद्देश्यमित्येतद्विषयिका, यद्वा शिक्षावतां शिक्षायाः केन मुख्येनोद्देश्येन भवितव्यमित्येतदभिप्रायिका, उताहो का नाम शिक्षा, किञ्च तस्या मुख्यमुद्देश्यमित्येतदर्थार्था। उक्तसर्वार्थनिर्धारणार्थेति तावदध्यवस्यामः।

शिक्षा तावदनन्तविधभेदविभिन्ना । विविधानन्तविषयविभेदात् । तेनोद्देश्यमपि तस्यास्तत्तद्विषयभेदेनाऽनन्तविधं प्रतिशिक्षं तदेव मुख्यञ्च । यथा प्रथममक्षरशिक्षाऽपेक्षिता भवति । तस्या अक्षरज्ञानमेव मुख्यं प्रयोजनम् । यदर्थं शिक्षायाः प्रवृत्तिस्तदर्थनिष्पत्तिरेव तस्या मुख्यमुद्देश्यम् । अक्षरशिक्षा ह्यक्षरराशिपरिज्ञानार्थं प्रवृत्ता तदुत्पाद्य निर्वृत्तस्वप्रयोजना परिसमाप्ता भवतीति तन्न्यक्कृत्य विशेषान्तरस्य मुख्यत्वाभ्यूहनमनुचितम् ।

तदनन्तरं शब्दानुशासनशिक्षा प्रवर्त्तते । सा च लौकिकवैदिकविभेदविभिन्नसुप्तिङ्कृत्तद्धितसमासवृत्तिविभिन्नानन्तशब्दराशि-प्रकृतिप्रत्ययागमादेशविकरणादिततसिद्ध्युपयुक्तप्रक्रिया—तच्छक्तितात्पर्य्यवाक्यार्थविज्ञानजनितलौकिकवैदिकाखिलवाङ्मयाध्ययनावगमयोग्यतानुकूलशक्तिलाभमुद्दिश्य प्रवृत्तेति तमन्तरेण नाऽस्याः पृथक्प्रयोजनम् ।

एवमेव काणादादिविषयान्तरशिक्षाऽपि तत्तत्प्रातिस्विकविषयविषयिणीति तत्तत्स्वप्रतिपाद्यवस्तुप्रतिपत्तिप्रतिपन्नपरिपूर्त्तिर्न प्रयोजनान्तरमनुबध्नाति ।

तेन स्वस्वविषयशिक्षैव शिक्षाया मुख्यमुद्देश्यमिति शिक्षैव शिक्षाया मुख्यमुद्देश्यमिति सुवचम् । येन परिपूर्य्यते तदेव शिक्षाया मुख्यमुद्देश्यम् । शिक्षा हि शिक्षया परिपूर्य्यते । अस्तु नाम शिक्षा । यदि तया बटुर्न पटु शिक्षितो नैषा शिक्षा शिक्षाकक्षामधिरोहति । बटोः प्रतिपाद्य पटवी प्रतिपत्तिर्हि शिक्षापदस्य प्रवृत्तिनिमित्तम् । यतस्तां विना शिक्षापदमेव नोत्पद्यते । एवञ्च शिक्षापदादपृथक्सिद्धमेव मुख्यमुद्देश्यमिति शिक्षैव शिक्षाया मुख्यमुद्देश्यमित्यतिरोहितमेतत् ।

यैस्तु वस्तुविमूढैः प्रयोजनान्तरं व्युत्पत्त्यधिगमादि प्रथङ्मृग्यते न शिक्षाया याथात्म्येऽभिनिविश्यते तैर्लक्ष्यं विच्युतमेव । ते पङ्क एव तिष्ठन्ति । तैर्व्युत्पत्त्यादि किमपि वास्तवं नाऽऽसाद्यते । तत्प्रत्यक्षं ह्यैष्या शिक्षया संस्कृतं गृह्णानेषु, ये प्राक्तनपरिपाट्या समासादितपाण्डित्यानां विदुषां गोष्ठीषु तत्प्रौढिभ्ना तुहिनोपहतवदनारविन्दाश्चुलम्पितरसनाञ्चलचाञ्चल्याश्च प्रवेशमपि परिहरन्तो व्युत्पत्त्यादेः का दिगित्येतदपि परिचेतुं दैवरोषान्न प्रभवन्ति ।

शिक्षा चेत्सुशिक्षा तदाऽनुद्दिष्टान्यपि तानि तानि प्रयोजनानि समये समये स्वत एवोपनमन्ति सिद्ध्यन्ति च । यदि तु सा अशिक्षा कुशिक्षा वा तदा तूद्दिष्टान्यपि प्रयोजनानि परतः पराक्रियन्ते । न सिद्ध्यन्ति । तत्सिद्धिर्विचारपदवीवन्ध्या ।

यावदभिमतसम्पत्तिसिद्धिसाधिनी हि विद्या शिक्षा च । तस्या अन्यतमप्रयोजनविशेषमात्रे केवल एकाकिनि मुख्योद्देश्यताकत्वाङ्गीकारः शतधा च्छिनत्तीव मर्मविदां विदुषां हृदयम् ।

यद्यप्यस्ति शास्त्रेषु साधनेषु फलेषु च मुख्यामुख्यत्वविचारः । तेन तस्या एकमुख्योद्देश्यताकत्वस्वीकारो यद्यपि नातिदुष्ट-

स्तथापि सिद्धान्ते स तावत्साङ्गाङ्गिभावः । नाऽङ्गाङ्गिभावनिरपेक्षः । तस्मान्नाऽङ्गाङ्गिभावान्मुख्यामुख्यत्वविचारोऽतिरिच्यते । अङ्गाङ्गिभाव एव मुख्यो न मुख्यो मोक्षतत्साधनाद्यर्थो मुख्योऽमुख्यो वा । अङ्गाङ्गिभावाभावे तस्योभयविधस्याऽपि मुख्यामुख्यतायां प्रयोजकाभावात् । अङ्गाङ्गिभाव एव हि साध्यसाधनयोः स्वप्रयुक्तामङ्गाङ्गित्वैकनिमित्तां गौणमुख्यतां जनयति न तु हेयोपादेयभावं प्रयुनक्ति । अङ्गाङ्गिनोरुभयोरपि परिग्राह्यत्वात् । तदर्थं शास्त्रारम्भात् । द्वयोरपि परस्परान्वयव्यतिरेकनिरूपणीयत्वात् । अन्यथाऽङ्गाङ्गिभावोच्छेदापत्तेः । तेन शिक्षाया मुख्यमुद्देश्यं पुरुषस्य यावदभिमताशेषसुखसम्पत्तिसिद्धिर्वा शिक्षायाः शिक्षात्वसम्पत्तिरेव वा नेतरत्तुच्छतममल्पज्ञपरिषत्परिगृहीतं तदप्यंशत एकतमत्फलम् । तुच्छैकद्वित्रिप्रयोजनाय हि शिक्षादेवी जगति न कृताविर्भावा किन्तु महाप्रौढप्रगल्भानन्तमहाफलदित्सया । तेनाऽशेषक्लेशनिवृत्तिपूर्वकानन्ताशेषसुखावाप्तिर्वा सा शिक्षयैव सुसम्पन्ना भवतीति शिक्षैव वा शिक्षाया मुख्यमुद्देश्यमिति विविच्य निश्चित्य ये शिक्षादेवीचरणौ क्षालयन्ति तैरिदं विद्धं विद्यानां तलमासादितं ज्ञानमर्जितं व्युत्पत्तिर्लब्धा । तेषामुद्दिष्टान्यनुद्दिष्टान्युभयान्यशेषाणि प्रयोजनानि करतलगतानि फलन्ति । ते पूर्णा भवन्ति विद्यया धनेन धान्येन । किम्बहुना, ऐहिकामुष्मिकयोः किमपि वाञ्छितं तेषामसिद्धं नास्ति । तत एव—

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चापि रमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किं किं न साधयति कल्पलतेव विद्या ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥

येषां न विद्या न तपो न दानं
ज्ञानं न शीलं न गुणो न धर्मः ॥
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥

यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
तल्लभ्यं कृतिनैव नैव हठतः पाठप्रतिष्ठाजुषा ।
कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ॥

इत्यादीनि तानि तान्यभियुक्तवचनानि गीयन्ते ।

इदानीन्तना जनास्तु दुर्दारिद्र्यदशापिशाचनिचयपरिभूता अशेषपुरुषार्थसिद्धिर्वा तत्सम्पादिका शिक्षैव वा शिक्षाया मुख्यमुद्देश्यमिति तत्त्वमनामृशन्तो व्युत्पत्त्याद्यधिगममपि वा तन्मुख्यप्रयोजनमनुत्प्रेक्षमाणाः केवलमेकं जीविकालाभमेव तदुद्देश्यमाकलयन्तः शिक्षाविष्टिनिविष्टा जायन्ते । न शिक्षायां तेषामभिरुचिरस्ति ।

शिक्षा ध्वान्ध्यमपनयति, जाड्यमुज्ञासयति, तिमिराणि तिरस्करोति, मन्दतामुदस्यति, अलक्ष्मीकत्वं विलुम्पति, निकर्षं कर्षति, अपूर्णतां परिहरति, सर्वांशेषु प्रकाशं प्रकाशयति, नैपुण्यं पल्लवयति, तेजांस्युत्तेजयति, परिस्फूर्त्तिं प्रबलयति, लक्ष्मीः पद्मलयति, उत्कर्षमुत्कर्षयति, परिपूर्णतां परिपूरयति । किम्बहुना । ऐहिकामुष्मिकयोः किमपि ना-

+ शिक्षा नार्थः ।

ऽवशेषयति संसाधयितुं यद्यदर्थनीयं पुरुषेण।

तस्या एतस्याः पीयूषादपि सुमधुराणि फलानि प्रसविन्याः कल्पलतामप्यतिशयानायाः शिक्षाया जीविकालाभमात्रं फल्गु कृच्छ्रञ्च फलं मुख्यमित्युद्दिशतां कियतीं काष्ठां महतीमधिरूढा भ्रान्तिर्जनानामिति द्रष्टव्यमेतत् ।

तयैवोपहतविवेका लोका यदुद्देश्यं शिक्षाभिरुचिस्तां नोद्दिशन्ति यच्चाऽनुद्देश्यं जीविकालाभमात्रं तदुद्दिशन्ति । तत उभयादपि परिभ्रष्टा दुष्प्रसहैर्विपत्तिपादप्रहारैः परिक्लिश्यन्ति कर्त्तव्यं च न स्मरन्ति ।

वस्तुतो जीविकालाभः शिक्षाया उद्देश्यं नास्ति । किन्त्वसौ पुरुषस्योद्देश्यं दुर्दारिद्र्यदशापिशाचनिचयाविष्टस्य। भ्रान्त्यैव तदुद्देश्यं शिक्षायाः शिरसि निक्षिप्यते । शिक्षा तु तपस्विनी निरवशेषक्लेशनिरसननिरन्तरनिरतिशयाशेषसुखसन्दोहसम्पत्तिहेतुं विवक्षितस्वरूपां स्वशिक्षामेव स्वप्रवृत्तौ प्रयोजनमुद्दिशत्युपदिशति च । तदुद्देशान्यथाकरणादेव गृहीताऽपि शिक्षा सुशिक्षा न सम्पद्यते । किन्तु कुशिक्षैव जायते । ततश्च यो जीविकालाभः सुशिक्षायां सत्यां स्वतः सिद्ध्यति नैवाऽपेक्षणीयो भवति स प्रयत्नशतैरपि नाऽन्तिकमासीदति दूराद्दूरं विद्रवति सततापेक्षितताञ्च न जहाति ।

शिक्षा चोद्देश्यभेदेन सर्वथाऽपि रूपान्तरविपर्य्यासं लम्भिता वस्तुतो जीविकालाभे प्रतिबन्धिकैव भवति । न तत्साधिका। शिक्षा च जीविकापेक्षा चेति भूत उपहासस्याऽऽस्पदं यथा धनाधिपस्य कुबेरस्य गृहे धान्यचिन्ता । बाधितार्थाभिधानमिदं भवतीति । यथा ललाटन्तपे भगवति भास्करे व्योममूर्ध्नि विभ्राजमाने सूचीभेद्यतमस्सञ्चारचर्चा सविस्मितस्मितचन्द्रिकया धवलयत्यधरपल्लवमाकर्णयितुस्तथैव सुशिक्षितस्य जीविकापेक्षेति कथनं कस्य सुधियः सस्मितं विस्मितं चेतसि नोल्लासयेत् । तथापि जीविकापेक्षा जीवत्येव चतुरचेतसोऽपि नाऽञ्चलं विमुञ्चति यत्तच्छिक्षाया जीविकालाभमात्रायैव विनियोगापराधादिति नैतद्विस्मर्त्तव्यं सुधीभिः ।

परन्तु दुर्दारिद्र्यदवानलोपहतस्य जनस्य जीविकालाभ एव प्रथममेषणीयोऽन्वेषणीयश्च । तस्य क तावत्तावद्धैर्य्यं येन शिक्षास्वरूपं तन्माहात्म्यञ्च स वेत्तु, शिक्षाभिरुचिञ्च गृह्णातु । ततश्च जीविकालाभानुरूपतैव शिक्षायां बहोः कालात्प्रविष्टा । सा च शनैः शनैरेधमाना सम्प्रति सर्वथैव कवलसात्कर्त्तुमारभते विलुम्पतीव च शिक्षायाः स्वाभिप्रेतं स्वरूपम् ।

अस्ति शिक्षायाः स्वाभिप्रेतं स्वरूपं यत्केवलं बुधजनैकमानससंवेद्याभिनन्दनीयगुणगणगरिष्ठम् । यच्च प्रमत्तैरविवेकोपहतैश्चेष्यमाणमन्यथाभावमात्मनो न क्षमते सोढुम् । शिक्षा ह्यज्ञातज्ञापनार्थमुपयुक्ता । तत्रादौ तावच्छिक्षास्वरूपमेवाऽज्ञातं यस्मिन्विदित एवाऽग्रिमसाध्यसाधनसम्पत्तिसंनिधानसिद्धिसम्भवो न त्वन्यथाऽपि सर्वथा तदेव प्रथमतस्तया ज्ञापनीयमिति । तदिदं 'मष्टवर्षं

ब्राह्मणमुपनयीत तमध्यापयीत' । 'स्वाध्यायोऽध्येतव्यः' । 'ब्राह्मणेन निष्कारणो वेदः षडङ्गोऽध्येयो ज्ञेयश्च । शौचाचारांश्च शिक्षयेत्' । 'अहेरिव गणाद्भीतः सौहित्याच्च विषादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति' । 'यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपासयति । तस्य दिवाकरकिरणैर्नलिनीदलमिव विकासमेति मतिः । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' ॥ 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' । 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति । 'यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्' । 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' ॥ 'न म्लेच्छितवै नाऽपभाषितवै' । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' । 'यदेव श्रद्धया करोति विद्ययोपनिषदा तदेवाऽऽस्य वीर्य्यवत्तरं भवति' । 'ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति' । 'विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्' । 'आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षडभिरङ्गैः । छन्दांस्येतं जातकाले त्यजन्ति नीडं यथा जातपक्षाः शकुन्ताः' । 'आचाराद्विच्युतो विप्रो न वेदफलमश्नुते' । 'सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः' । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' । 'कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्' । 'मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि' । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' । 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' । 'यस्य स्मृत्या च नामोक्त्या तपोदानक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्' । 'य उदास्ते स आस्ते' इत्याद्यसंख्येयैः श्रुतिस्मृत्यभियुक्तवचनैर्निरूप्यते ।

तस्याऽस्य विलोपेऽशेषपुरुषार्थहानिर्भवेत्तन्माभूदित्येतदर्थमवश्यमेव प्राप्तकालमवधातव्यं प्रयतितव्यञ्च विद्वज्जनैः । न तु जीविकालाभमात्रसाधनतामेव नेया शिक्षेति नैतद्विस्मर्त्तव्यम् । यथाऽऽहुः परावरविदां प्रवराः परमर्षयः 'आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनम् । वृत्त्यर्थं यस्य चाऽधीतं निष्फलं तस्य जीवितमिति' । अत्राऽऽत्मार्थमित्यादि त्रयमपि सावधारणम् । सर्वं वाच्यं सावधारणमिति न्यायात् । तेनाऽऽत्मार्थमेव पचनं न देवपित्रतिथिसमाराधनार्थम्, रत्यर्थमेव मैथुनं न धर्मार्थम्, न वा धार्मिकप्रजाप्रजननार्थम्, वृत्त्यर्थमेव चाऽधीतं नाऽशेषपुरुषार्थार्थं यस्य, तस्य जीवितं निष्फलमित्यर्थो भवति । तथासति पचनादेरात्मार्थत्वादि न प्रतिषिध्यते किन्तु प्रयोजनान्तरसहकारोऽधिको विधीयत इति नाऽशक्योपदेशताप्रसङ्गः ।

जीविकालाभमात्रसाधनतया शिक्षोपादेयतायां शिक्षायाः सार्वत्रिकः प्रचार उपरुद्ध्यते । अनेन प्रकारेण जीविकालाभे

सति शिक्षाग्रहणे प्रवृत्त्यनुदयात् । जीविकालाभापेक्षितायामपि यावत्या तल्लाभस्तावत्या एव शिक्षायाः कथञ्चिदर्जनं न पूर्णायाः । ततश्च मौर्ख्यापगमाभावात्पदे पदे कण्टकाकीर्णता । दुर्वृत्तिदुश्चरित्रदुर्गत्यादिदूषणानपगमात् । जीविकालाभश्च प्रायो दास्यवृत्तिरूप एव जायते यस्तावच्छिक्षानभिप्रेतः। तत्र तु 'विद्या ददाति विनयं विनयाद्याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मस्ततः सुखम् । विनयिनि गुणा गुणाच्छ्रीः श्रीमत्याज्ञा ततो राज्यमि' त्यत्युत्कृष्टमेव फलं कीर्त्यते । दास्यन्तु—'उन्नतिहेतोः प्रणमति जीवनहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूढः सेवकादन्य' इत्यादिभिर्निन्द्यते ।

तस्माज्जीविकामात्रलाभरूपं दास्यपर्यवसायि सुखमार्य्यावर्तशिक्षाया उद्देश्यं नाऽस्ति किन्तु भ्रान्तिकृतमेवेत्यत्र नास्ति स्तोकोऽपि सन्देहः ।

तदेवमशेषपुरुषार्थसिद्धिस्तत्साधिका शिक्षा च तादृशी शिक्षैव वा शिक्षाया मुख्यमुद्देश्यमिति स्थितम् ।

तादृशी शिक्षा च न केवलेन व्याकरणादिनैकेन शास्त्रेण परिसमाप्यते, किन्तु सकलसपरिकरसाङ्गोपाङ्गवेदाध्ययनेन । तत्तदेकैकशास्त्रशिक्षा तु तत्तदेकैकदेशविज्ञानार्था न सार्वदेशिकविज्ञानार्था । तेन तत्तद्देशविज्ञानस्य तत्तच्छास्त्रीयमुख्योद्देश्यतायामपि स्वतः पुरुषार्थत्वाभावादौपाधिकत्वमेव । दुःखाभावः सुखं चेति पुरुषार्थद्वयं मतमिति वचनात् । पुरुषार्थप्राप्त्यैव हि शिक्षा सफलेति तयैव सा परिपूर्य्यते परिसमाप्यते च न त्वन्यथाऽपि । सा तु सरहस्येन साङ्गेन विज्ञानसमन्वितेन परमगुह्येन ज्ञानेन भवति । तादृशं ज्ञानञ्च पूर्वोक्तसकलसच्छास्त्राध्ययनेन तदुक्तार्थानुष्ठानेन तदभिप्रेतया प्रक्रियया च संस्कारब्रह्मचर्य्यगुरुकुलवासगुरूपासनब्राह्ममुहूर्त्तप्रबोधादिविविधरूपया ।

तदिदं सर्वमिदानीं कालदोषेण बुद्धिदोषेण भाग्यदोषेण च विध्वस्तं केवला जीविकामात्रसाधनतैव च शिक्षायामवशिष्टा सापि नाऽव्यभिचारिणी परन्तु पङ्गूवीति दुरुन्नमनमेव दुरानयनमेव दुस्सम्पादमेव च भारतीयशिक्षाया याथार्थ्यं याथात्म्यं च तादृशविशिष्टराज्याश्रयणमन्तरेति हा हन्त हन्त महतीयं विनष्टिरुपस्थिता ।

भगवन् ! त्रायस्व भारतम् । त्वमेकोऽस्माकं शरणम् । देहि नः सद्बुद्धिं परिपूर्णां शिक्षां निश्शेषक्लेशोपशमनीमशेषपुरुषार्थसिद्धिञ्चेति ।

तस्मै नमो भगवते य इदं स्वेन तेजसा ।
आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥

इति शिवम् ।

---

# शिक्षासारम्

अनन्तपारं किल शास्त्रमेतत्
स्वल्पं तथाऽऽयुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥

प्राचाम्

ब्राह्मणमुपनयीत तमध्यापयीत'। 'स्वाध्यायोऽध्येतव्यः'। 'ब्राह्मणेन निष्कारणो वेदः षडङ्गोऽध्येयो ज्ञेयश्च । शौचाचारांश्च शिक्षयेत्'। 'अहेरिव गणाद्भीतः सौहित्याच्च विषादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति'। 'यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपासयति। तस्य दिवाकरकिरणैर्नलिनीदलमिव विकासमेति मतिः। पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश'॥ 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'। 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति। 'यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्'। 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्'॥ 'न म्लेच्छितवै नाऽपभाषितवै'। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'। 'यदेव श्रद्धया करोति विद्ययोपनिषदा तदेवाऽऽस्य वीर्य्यवत्तरं भवति'। 'ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति'। 'विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत्'। 'आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः। छन्दांस्येतं जातकाले त्यजन्ति नीडं यथा जातपक्षाः शकुन्ताः'। 'आचाराद्विच्युतो विप्रो न वेदफलमश्नुते'। 'सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः'। 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'। 'कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्'। 'मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि'। 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः'। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः'। 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्'। 'यस्य स्मृत्या च नामोक्त्या तपोदानक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्'। 'य उदास्ते स आस्त' इत्याद्यसंख्येयैः श्रुतिस्मृत्यभियुक्तवचनैर्निरूप्यते।

तस्याऽस्य विलोपेऽशेषपुरुषार्थहानिर्भवेत्तन्माभूदित्येतदर्थमवश्यमेव प्राप्तकालमवधातव्यं प्रयतितव्यञ्च विद्वज्जनैः। न तु जीविकालाभमात्रसाधनतामेव नेया शिक्षेति नैतद्विस्मर्त्तव्यम्। यथाऽऽहुः परावरविदां प्रवराः परमर्षयः 'आत्मार्थं पचनं यस्य रत्यर्थं यस्य मैथुनम्। वृत्त्यर्थं यस्य चाऽधीतं निष्फलं तस्य जीवितमिति'। अत्राऽऽत्मार्थमित्यादि त्रयमपि सावधारणम्। सर्वं वाच्यं सावधारणमिति न्यायात्। तेनाऽऽत्मार्थमेव पचनं न देवपितृतिथिसमाराधनार्थम्, रत्यर्थमेव मैथुनं न धर्मार्थम्, न वा धार्मिकप्रजाप्रजननार्थम्, वृत्त्यर्थमेव चाऽधीतं नाऽशेषपुरुषार्थार्थं यस्य, तस्य जीवितं निष्फलमित्यर्थो भवति। तथासति पचनादेरात्मार्थत्वादि न प्रतिषिध्यते किन्तु प्रयोजनान्तरसहकारोऽधिको विधीयत इति नाऽशक्योपदेशताप्रसङ्गः।

जीविकालाभमात्रसाधनतया शिक्षोपादेयतायां शिक्षायाः सार्वत्रिकः प्रचार उपरुद्ध्यते। अन्येन प्रकारेण जीविकालाभे

सति शिक्षाग्रहणे प्रवृत्त्यनुदयात् । जीविकालाभापेक्षितायामपि यावत्या तल्लाभस्तावत्या एव शिक्षायाः कथञ्चिदर्जनं न पूर्णायाः । ततश्च मौर्ख्यापगमाभावात्पदे पदे कण्टकाकीर्णता । दुर्वृत्तिदुश्चरित्रदुर्गत्यादिदूषणानपगमात् । जीविकालाभश्च प्रायो दास्यवृत्तिरूप एव जायते यस्तावच्छिक्षानभिप्रेतः । तत्र तु 'विद्या ददाति विनयं विनयाद्याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मस्ततः सुखम् । विनयिनि गुणा गुणाच्छ्रीः श्रीमत्याज्ञा ततो राज्यमि' त्यत्युत्कृष्टमेव फलं कीर्त्यते । दास्यन्तु–'उन्नतिहेतोः प्रणमति जीवनहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूढः सेवकादन्य' इत्यादिभिर्निन्द्यते ।

तस्माज्जीविकामात्रलाभरूपं दास्यपर्यवसायि सुखमार्य्यावर्तशिक्षाया उद्देश्यं नाऽस्ति किन्तु भ्रान्तिकृतमेवेत्यत्र नास्ति स्तोकोऽपि सन्देहः ।

तदेवमशेषपुरुषार्थसिद्धिस्तत्साधिका शिक्षा च तादृशी शिक्षैव वा शिक्षाया मुख्यमुद्देश्यमिति स्थितम् ।

तादृशी शिक्षा च न केवलेन व्याकरणादिनैकेन शास्त्रेण परिसमाप्यते, किन्तु सकलसपरिकरसाङ्गोपाङ्गवेदाध्ययनेन । तत्तदेकैकशास्त्रशिक्षा तु तत्तदेकैकदेशविज्ञानार्था न सार्वदेशिकविज्ञानार्था । तेन तत्तद्देशविज्ञानस्य तत्तच्छास्त्रीयमुख्योद्देश्यतायामपि स्वतः पुरुषार्थत्वाभावादौपचारिकत्वमेव । दुःखाभावः सुखं चेति पुरुषार्थद्वयं मतमिति वचनात् । पुरुषार्थप्राप्त्यैव हि शिक्षा सफलेति तयैव सा परिपूर्य्यते परिसमाप्यते च न त्वन्यथाऽपि । सा तु सरहस्येन साङ्गेन विज्ञानसमन्वितेन परमगुह्येन ज्ञानेन भवति । तादृशं ज्ञानञ्च पूर्वोक्तसकलसच्छास्त्राध्ययनेन तदुक्तार्थानुष्ठानेन तदभिप्रेतया प्रक्रियया च संस्कारब्रह्मचर्य्यगुरुकुलवासगुरूपासनब्राह्ममुहूर्त्तप्रबोधादिविविधरूपया ।

तदिदं सर्वमिदानीं कालदोषेण बुद्धिदोषेण भाग्यदोषेण च विध्वस्तं केवला जीविकामात्रसाधनतैव च शिक्षायामवशिष्टा सापि नाऽव्यभिचारिणी परन्तु पङ्ग्वीति दुरुन्नमनमेव दुरानयनमेव दुस्सम्पादमेव च भारतीयशिक्षाया याथार्थ्यं याथात्म्यं च तादृशविशिष्टराज्याश्रयणमन्तरेति हा हन्त हन्त महतीयं विनष्टिरुपस्थिता ।

भगवन् ! त्रायस्व भारतम् । त्वमेकोऽस्माकं शरणम् । देहि नः सद्बुद्धिं परिपूर्णां शिक्षां निश्शेषक्लेशोपशमनीमशेषपुरुषार्थसिद्धिञ्चेति ।

तस्मै नमो भगवते य इदं स्वेन तेजसा ।
आत्मस्थं व्यञ्जयामास स धर्मं पातुमर्हति ॥

इति शिवम् ।

# शिक्षासारम्

अनन्तपारं किल शास्त्रमेतत्
स्वल्पं तथाऽऽयुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥
प्राचाम्

# ❀ आङ्गलकालेजीया शिक्षापरिपाटी ❀

## घनाक्षरी

[ १ ]

चित्तपरिष्कारे या हि शिक्षा भूरिदक्षाऽभवद्वित्तपुरस्कारेणैव १साद्य सुपटीयसी
पूर्वपुरुषाणां पुरा पद्धतिः प्रकृष्टाऽभवन्नन्यपुरुषाणामद्य सरणिर्गरीयसी ।
मञ्जुनाथ जानीयाम दूरदूरदेशकथां 'को धर्मोऽथ, के वयम्' कथेयं तु २दवीयसी
वर्तमानकाले बत शिक्षावधूभालेऽलेखि कालेजेन चारुचित्र३मालेयं महीयसी ॥

[ २ ]

बाल्यादेव भूरि भूरि पुस्तकानि घोषन्तोपि शिक्षायां न सन्तोषं सृजन्ति जना ४मीयताम्
पूर्वजपरिचयाय पाठ्यमितिहासाद्यपि देशभाषां त्यक्त्वा हूणभाषया ह्यधीयताम् ।
सर्वमेतत्सोढ्वापि च भ्रम्यतां ५बुभुक्षावशात् शिक्षाफल६माध्यात्मिकशान्तिः क्वोपनीयताम्
मन्दतम७माटीकितविद्यावृक्षवाटीसुखा वर्तमानशिक्षापरिपाटीयं निपीयताम् ॥

[ ३ ]

वैदेशिकभाषाचाकचक्याऽऽचान्तचित्तस्थले रोहति, विमोहजलैः सिक्तो यो विधीयते
आत्ममातृभाषात्यागखाद्यपरिपुष्टो यो हि गौरवगरिष्ठो गर्वशाखाशतैर्गीयते ।
चित्रं बहुकालाज्जात-'बी. ए.' 'एम्. ए.'पुष्पोदयो, नेत्रद्युतिमन्दताऽऽमयोपि सह नीयते
भाग्यतोभिरूढराजतन्त्रभृतिभिक्षाफलाद्वर्तमानशिक्षा८कुब्जवृक्षात्को महीयते ॥

भट्टश्रीमथुरानाथशास्त्री

---

१-अस्मिन् युगे धनप्राप्त्यैव शिक्षा साधीयसी (गण्यते) २ दूरदूरदेशानां कथां जानीमः किन्तु 'वयं के' 'अस्माकं धर्मः कः' इत्यात्मकथा तु अतिदूरस्था । ३—वधूनां शृङ्गारार्थं भाले पत्ररेखा विरच्यन्ते, तथा शिक्षारूपाया वध्वा ललाटे—दूरदूरकथाबोधेऽपि आत्मकथानभिज्ञतारूपचित्रस्य (आश्चर्यस्य) माला अलेखीत्यर्थः । ४—शिक्षायां संतोषं नोत्पादयन्तीति मीयताम् ज्ञायताम् । ५-उपर्युक्तं सर्वं सहित्वापि भृतिकार्यस्यालाभे क्षुधितैराहिण्ड्यतामित्यर्थः । ६-ततश्च शिक्षायाः फलं या आध्यात्मिकी शान्तिः सा क्व प्राप्यताम् ? ७—अतिमन्दम् आटीकितम् (प्राप्तम्) विद्यारूपायाः वृक्षावाट्याः सुखं यया । विद्यारूपायां वृक्षवाट्यां शान्तिसुखं लभ्यते, परम् अत्र तत् अतिन्यूनं लभ्यते । ८ वर्तमान-शिक्षारूपात् कुब्ज(लघु वक्र)वृक्षात् को महितो भवति ? इदानीं वृक्षस्य रूपकम्—वैदेशिकभाषाचाक-चक्येन (नेत्रमोहकचमत्कारेण) अभिभूते चित्तरूपे स्थलेऽयं रोहति । मातृभाषात्याग एवात्र खाद्यम् (खाद)तेन परिपोषः । वृक्षे यथा शाखाभिर्गौरवं भवति तथाऽस्मिन् अभिमानस्य शाखा(अवान्तरप्रकार)-शतैर्गौरवं गरिष्ठता । भाग्यवशात् अभिरूढ राजतन्त्रसकाशात् भृतिभिक्षाप्राप्तिरूपं फलं यस्य ।

## श्रीऋषिकुलब्रह्मचर्याश्रमः,-हरिद्वार

( पं० लीलाधरशास्त्री, आचार्य-ऋषिकुल, हरिद्वार )

विश्वविदितबुद्धिवैभवानां तपःप्रभाव-संसाधित-मनसां महर्षीणां जगदुपकारकारी ज्ञानरविः प्रकाशतां जगत्, विधर्मिजनानवरतप्रवर्त्यमानदुःशङ्कादुर्दिनभेदनायोदीयतां सनातनधर्मभास्वता, त्रिविष्टपपरिगीतकीर्तेर्मातुः सुरभारत्या दर्शनैर्दरीदृश्यतामात्मतत्त्वम् । उभयलोकशासनपटुभिः शास्त्रैः शास्यन्तां लोकाः, ब्रह्मचर्यपरिपालनपद्धत्या दुराचारदुर्विदर्पं विपाट्य यूनां शरीरमनांसि भवन्तु नीरुजानि मातृभूप्रेमभरभरितानि चेति विचार्य वेदवेदाङ्गानां प्रचाराय, संस्कृतज्ञेषु धर्मशास्त्रसामयिकभूगोलायुर्वेदेतिहासादीनां समुपयुक्तानां विषयाणां तदध्येतृभिः परित्यक्तप्रायाणां प्रचाराय । १९६३ तमे संवत्सरे १९०६ तमे ऐसवीये वर्षे हरिद्वारतीर्थपुरोहितानामग्रेसरैर्ब्रह्मवंशावतंसैः स्वर्गीय–सरदारेन्द्रराज–परमानन्द–ताराचन्द्र-प्रभृतिभिर्ज्वालापुरनगरे नैनीतालमण्डलान्तर्गतकाशीपुरवास्तव्यः कूर्माखिलभूषणं वाग्मी दुर्गादत्तपन्तमहोपदेशकमहानुभाव आकारितः ।

अस्य च वाग्मिनः सदुपदेशपरम्पराप्रभावेण जाता ब्रह्मचर्याश्रमस्थापना । नाम चास्याकारि प्रारम्भे 'पण्डाकुमारब्रह्मचर्याश्रम' इति । नातिचिरात् संस्थामिमामखिलभारतीयां विधातुमभिधानपरिवर्तनं व्यधायि 'ऋषिकुलमिति' ।

प्रारम्भे पन्तोपनामानः अल्मोडावास्तव्यास्तपस्विनः श्रीदुर्गादत्तशास्त्रिणो नाथूरामशर्माणश्चाध्यापकत्वमकुर्वन् । तस्मिन्नेवावसरे भारतीयेषु विदेशीयेषु च संस्कृतविद्वत्सु लब्धप्रतिष्ठा जयपुरपण्डितसमाजशिरोरत्नायमानाः समीक्षाचक्रवर्तिनो विद्यावाचस्पतयः प्रातःस्मरणीया मधुसूदनशर्माणो जयपुरराजपण्डिता ज्वालापुरे आश्रमपदं सनाथ्य ज्वालापुरस्थान् पण्डितानन्यांश्चाश्रमकार्यकर्तॄन् प्रोत्साह्य वर्तमाने स्थाने आश्रमस्य स्थानान्तरीकरणाय मन्त्रेणानेन निरदिक्षन्–'उपह्वरे गिरीणां सङ्गमे च नदीनां धिया विप्रो अजायत' । 'यजुः'

उपदेशमिममूरीकृत्यैव कार्यकर्तृभिश्च 'ऋषिकुलम्' ज्वालापुरहरिद्वारयोर्मध्ये वर्तमानस्थान आनायि । तदानीन्तनानां ब्रह्मचारिणां पर्णकुटीराण्येवावासस्थानानि, बिल्वाधस्तादेव यज्ञशाला, कतिचिन्मासानेकाशनमेवाशनं प्रावर्तत ।

अनन्तरं नियमादिव्यवस्थायै स्वर्गीयो व्याख्यानवाचस्पतिः श्री पं० दीनदयालुशर्मा, देहरादूनवास्तव्यः पण्डितोपनामा श्री पं० आनन्दनारायणशर्मा प्रथमसभापतिश्च आयोजनां व्यधाताम् । शिक्षाप्रश्ने समागते स्वर्गीयविद्यावारिधिज्वालाप्रसादमिश्रमहोदयानां सम्मत्या गुरुचरणानां विद्यानिधिवि० वा०महामहोपाध्यायश्रीगिरिधरशर्ममहोदयानां शिक्षाध्यक्षपदे नियुक्तिरभूत् । सततः शिक्षाप्रक्रया परिचालनं म-

हामहोपाध्यायैरेवात्र समारब्धम् । संस्कृत-शिक्षापद्धतिपरिष्काराय चाखिलभारतीय-विद्वद्भिः सह विचारपरिवर्तनं व्यधायि । अस्मिन्नेवोपक्रमे स्वर्गीयानां म० म० शिवावताररूपाणां शिवकुमारमिश्राणां समक्षमखिलभा.संस्कृतसाहित्यसम्मेलनं समास्थापि । यदद्य काशीपरीक्षासमित्या तदधिकारिभिश्च समयोपयुक्तानां विषयाणां नियोजनमकारि, उपनिषदां निरुक्तादीनाञ्च समावेशोऽन्वभावि, तदिदं प्रायो महामहोपाध्यायपादानां कामविजृम्भितमेव । ऐसवीय १९०७ संवत्सरे ऋषिकुलं राजनियमानुसारेण राज्यलिपिबद्धं जातम् । अनन्तरं तच्छिक्षाक्रमे सामान्यविशेषक्रमेण द्वौ विभागौ जातौ । सामान्यविभागः सप्तमकक्षापर्यन्तम्, विशिष्टविभागश्च द्वादशश्रेणिं यावत् प्रचलति स्म । विशिष्टविभागे च पञ्च विभागाः पदमापेदिरे । नामानि च तेषां यथा—अध्यापनविभागः, आयुर्वेदविभागः, उपदेशकविभागः, ज्यौतिषविभागः, कर्मकाण्डविभागश्चेति । महामहोपाध्यायपादा नववर्षाणि यावत्—अस्य आचार्यपदमलञ्चक्रुः । शिक्षाक्रमश्च तेषां संरक्षणे निरीक्षणे चातीव प्रशस्यया रीत्या प्रचलति स्म । य एव विभागा महामहोपाध्यायैः प्रारब्धा आसन् त एवाद्यत्वेऽपि स्वकार्यमनुतिष्ठन्त अग्रेसरा इवानुभूयन्ते । अध्यापनविभागे पूर्वशिक्षासमित्या राजकीयपरीक्षाऽस्वीकृता आसीत् परमद्यत्वे सा स्वीकृतेति नव्यप्राचीनव्याकरणयोर्वेदे सांख्ये पुराणे साहित्ये काशीस्थराजकीयपरीक्षासु आचार्यशास्त्रिश्रेण्योः खण्डेषु प्रविष्टाश्छात्रा उत्तीर्णतां लभन्ते । अनेके वेदव्याकरणसाहित्याचार्यपरीक्षामुत्तीर्णाः विद्यालयेषु महाविद्यालयेषु शिक्षका आचार्याश्च सन्तो धर्मोपदेशद्वारा भारतीयानुपसेवन्ते । अद्यत्वे आश्रमविभागे सपादशतब्रह्मचारिणोऽध्ययनमनुतिष्ठन्ति । कर्मकाण्डविभागे च द्वादश छात्रा नियतां वृत्तिमाददाना परीक्षासु प्रविशन्ति, कार्यकलापांश्च शिक्षन्ते । अध्यापकानाञ्चाद्यत्वे संख्या ११ (एकादश) । तेषु चत्वार आचार्याः, द्वौ चाङ्गलभाषोच्चशिक्षितौ B. A. LL B., M. A. पदभाजौ, एकश्च मीमांसाया विद्वान्, अन्ये च सहायकाः । इत्थं अध्यापनविभागीयं कार्यं प्रचलति ।

आयुर्वेदविभागे च दश महोपाध्यायाः कार्यमनुतिष्ठन्ति । तत्र सन्ति षडायुर्वेदशिक्षकाश्चत्वारश्च नूतनशरीरविज्ञानशिक्षायै नियुक्ताः । छात्रसंख्या च प्रायः पादोनशतद्वयी । वन्यमहौषधज्ञानाय निर्माणाय च रसासवचूर्णादीनां सुदूरदेशेभ्य आनायिता भिषङ्मणयः सन्ति ऋषिकुलायुर्वेदमहाविद्यालये सन्निहिताः । शास्त्रप्रवक्तारश्च-कविराजश्रीज्ञानेन्द्रनाथसेन B. A. महोदयस्याचार्यत्वे स्वकार्यं सुचारुरूपेण सम्पादयन्ति ।

अत्रत्येभ्यो वैद्येभ्यो युक्तप्रान्तीयशासकैः राजकीयौषधालयेषु प्रतिशतं पञ्चचत्वारिंशत् स्थानानि प्रदाय, सप्तविंशतिमण्डलसभाभिः (डिस्ट्रिक्टबोर्डैः) अस्या एव रसायनशालातः सिद्धौषधान्यानाय्य, या-इयं सम्मानना कृता तां दृष्ट्वा महाविद्यालयसम्बन्धिच्छात्रवर्गं

कार्यकर्तृषु नवनवस्योत्साहज्योतिषः प्रादुर्भावोऽनुभूयते ।

प्रायः सर्वेभ्योऽपि प्रान्तेभ्यश्छात्रा आयान्त्यत्राध्ययनाय ।

इत्थमेवैकस्यां ऋषिकुलशाखापाठशालायामत्र तीर्थपुरोहितानां छात्रा ब्रह्मचर्याश्रमं सेवितुमसमर्था अध्ययनं विदधति । साप्यस्ति ऋषिकुलजन्मस्थाने त्रयस्त्रिंशद्वर्षेभ्यः कार्यमनुतिष्ठती । अत्र द्वात्रिंशद्वर्षाणि यावत् सुगृहीतनामधेयाः स्वर्गीया वंशीधरशर्माणः पाण्डेया मुख्याध्यापकत्वमकुर्वन् । स्वःप्रयाणानन्तरं च महानुभावस्यास्य सुपुत्रः साहित्याचार्यः श्रीहरिदत्तशर्मा आयुर्वेदाचार्यः F. A. तत्स्थानपूर्तिमकार्षीत् । तदध्यक्षतायां त्रयोऽन्येऽप्यध्यापनकार्यमनुतिष्ठन्ति पण्डिताः । अस्ति चात्र छात्रसंख्या सपादशतम् ( १२५ ) ।

उपदेशकज्यौतिषविभागयोश्चास्ति महत्यावश्यकता । सनातनधर्मिजनसंख्यामपेक्ष्य द्वाविंशकोटिजनेभ्योपेक्ष्यन्ते परःशता उपदेशकमहाविद्यालयाः । परमिदमस्माकमनवहेलनीयहमुपेक्षणं यदद्य नैकोऽपि प्रचारकविद्यालयः कार्यक्षेत्रमवतीर्णो दरीदृश्यते । तदत्राश्रमोयं दत्तेक्षणः स्वसहायकान् निर्निमेषमीक्षते ।

ज्यौतिषविभागेन विना तत्कालफलदात्री ज्योतिर्विद्यैव लोपमिवानुभवन्ती दृश्यते । यथाकथञ्चिद् राष्ट्रीयमन्त्रिमण्डले विद्याया अस्या अनुरागिणः श्रीसम्पूर्णानन्दस्य प्रवेशोऽभवत्, प्रादायि चानेन महानुभावेन साहाय्यवचनम् । परं न तन्मन्त्रिमण्डलं कार्यमनुशेते । ऋषिकुलसञ्चालकमण्डलस्यास्ति विचारो यदस्मिन्-पौर्वात्यपाश्चात्ययोर्विद्ययोः समावेशो भवेदिति ।

मन्ये न चिराज्जनता दत्तहस्ता कार्यरूपे परिणतं विभागद्वयं द्रक्ष्यति ।

अद्यत्वे ऋषिकुलस्य विभागेषु द्विचत्वारिंशत्सहस्राणि प्रतिमासं व्ययीभवन्ति ।



हामहोपाध्यायैरेवात्र समारब्धम् । संस्कृत-शिक्षापद्धतिपरिष्काराय चाखिलभारतीय-विद्वद्भिः सह विचारपरिवर्तनं व्यधायि । अस्मिन्नेवोपक्रमे स्वर्गीयानां म० म० शिवावताररूपाणां शिवकुमारमिश्राणां समक्षमखिलभा.संस्कृतसाहित्यसम्मेलनं समास्थापि । यदद्य काशीपरीक्षासमित्या तदधिकारिभिश्च समयोपयुक्तानां विषयाणां नियोजनमकारि, उपनिषदां निरुक्तादीनाञ्च समावेशोऽन्वभावि, तदिदं प्रायो महामहोपाध्यायपादानां कामविजृम्भितमेव । ऐसवीय १९०७ संवत्सरे ऋषिकुलं राजनियमानुसारेण राज्यलिपिबद्धं जातम् । अनन्तरं तच्छिक्षाक्रमे सामान्यविशेषक्रमेण द्वौ विभागौ जातौ । सामान्यविभागः सप्तमकक्षापर्यन्तम्, विशिष्टविभागश्च द्वादशश्रेणिं यावत् प्रचलति स्म । विशिष्टविभागे च पञ्च विभागाः पदमापेदिरे । नामानि च तेषां यथा—अध्यापनविभागः, आयुर्वेदविभागः, उपदेशकविभागः, ज्यौतिषविभागः, कर्मकाण्डविभागश्चेति । महामहोपाध्यायपादा नववर्षाणि यावत्—अस्य आचार्यपदमलञ्चक्रुः । शिक्षाक्रमश्च तेषां संरक्षणे निरीक्षणे चातीव प्रशस्यया रीत्या प्रचलति स्म । य एव विभागा महामहोपाध्यायैः प्रारब्धा आसन् त एवाद्यत्वेऽपि स्वकार्यमनुतिष्ठन्त अग्रेसरा इवानुभूयन्ते । अध्यापनविभागे पूर्वंशिक्षासमित्या राजकीयपरीक्षाऽस्वीकृता आसीत् परमद्यत्वे सा स्वीकृतेति नव्यप्राचीनव्याकरणयोर्वेदे सांख्ये पुराणे साहित्ये काशीस्थराजकीयपरीक्षासु आचार्यशास्त्रिश्रेण्योः खण्डेषु प्रविष्टाश्छात्रा उत्तीर्णतां लभन्ते । अनेके वेदव्याकरणसाहित्याचार्यपरीक्षासुत्तीर्णाः विद्यालयेषु महाविद्यालयेषु शिक्षका आचार्याश्च सन्तो धर्मोपदेशद्वारा भारतीयानुपसेवन्ते । अद्यत्वे आश्रमविभागे सपादशतब्रह्मचारिणोऽध्ययनमनुतिष्ठन्ति । कर्मकाण्डविभागे च द्वादश छात्रा नियतां वृत्तिमाददाना परीक्षासु प्रविशन्ति, कार्यकलापांश्च शिक्षन्ते । अध्यापकानाञ्चाद्यत्वे संख्या ११ (एकादश) । तेषु चत्वार आचार्याः, द्वौ चाङ्गलभाषोच्चशिक्षितौ B. A. LL B., M. A. पदभाजौ, एकश्च मीमांसाया विद्वान्, अन्ये च सहायकाः । इत्थं अध्यापनविभागीयं कार्यं प्रचलति ।

आयुर्वेदविभागे च दश महोपाध्यायाः कार्यमनुतिष्ठन्ति । तत्र सन्ति षडायुर्वेदशिक्षकाश्चत्वारश्च नूतनशरीरविज्ञानशिक्षायै नियुक्ताः । छात्रसंख्या च प्रायः पादोनशतद्वयी । वन्यमहौषधज्ञानाय निर्माणाय च रसासवचूर्णादीनां सुदूरदेशेभ्य आनायिता भिषङ्मणयः सन्ति ऋषिकुलायुर्वेदमहाविद्यालये सन्निहिताः । शास्त्रप्रवक्तारश्च-कविराजश्रीज्ञानेन्द्रनाथसेन B. A. महोदयस्याचार्यत्वे स्वकार्यं सुचारुरूपेण सम्पादयन्ति ।

अत्रत्येभ्यो वैद्येभ्यो युक्तप्रान्तीयशासकैः राजकीयौषधालयेषु प्रतिशतं पञ्चचत्वारिंशत् स्थानानि प्रदाय, सप्तविंशतिमण्डलसभाभिः (डिस्ट्रिक्टबोर्डैः) अस्या एव रसायनशालातः सिद्धौषधान्यानाय्य, या-इयं सम्मानना कृता तां दृष्ट्वा महाविद्यालयसम्बन्धिच्छात्रवर्गं

कार्यकर्तृषु नवनवस्योत्साहज्योतिषः प्रादुर्भावोऽनुभूयते ।

प्रायः सर्वेभ्योऽपि प्रान्तेभ्यश्छात्रा आयान्त्यत्राध्ययनाय ।

इत्थमेवैकस्यां ऋषिकुलशाखापाठशालायामत्र तीर्थपुरोहितानां छात्रा ब्रह्मचर्याश्रमं सेवितुमसमर्था अध्ययनं विदधति । साप्यस्ति ऋषिकुलजन्मस्थाने त्रयस्त्रिंशद्वर्षेभ्यः कार्यमनुतिष्ठती । अत्र द्वात्रिंशद्वर्षाणि यावत् सुगृहीतनामधेयाः स्वर्गीया वंशीधरशर्माणः पाण्डेया मुख्याध्यापकत्वमकुर्वन् । स्वःप्रयाणानन्तरं च महानुभावस्यास्य सुपुत्रः साहित्याचार्यः श्रीहरिदत्तशर्मा आयुर्वेदाचार्यः F. A. तत्स्थानपूर्तिमकार्षीत् । तदध्यक्षतायां त्रयोऽन्येऽप्यध्यापनकार्यमनुतिष्ठन्ति पण्डिताः । अस्ति चात्र छात्रसंख्या सपादशतम् ( १२५ ) ।

उपदेशकज्यौतिषविभागयोश्चास्ति महत्यावश्यकता । सनातनधर्मिजनसंख्यामपेक्ष्य द्वाविंशकोटिजनेभ्योपेक्ष्यन्ते परःशता उपदेशकमहाविद्यालयाः । परमिदमस्माकमनवहेलनीयमुपेक्षणं यदद्य नैकोऽपि प्रचारकविद्यालयः कार्यक्षेत्रमवतीर्णो दरीदृश्यते । तदत्राश्रमोयं दत्तेक्षणः स्वसहायकान् निर्निमेषमीक्षते ।

ज्यौतिषविभागेन विना तत्कालफलदात्री ज्योतिर्विद्यैव लोपमिवानुभवन्ती दृश्यते । यथाकथञ्चिद् राष्ट्रीयमन्त्रिमण्डले विद्याया अस्या अनुरागिणः श्रीसम्पूर्णानन्दस्य प्रवेशोऽभवत, प्रादायि चानेन महानुभावेन साहाय्यवचनम् । परं न तन्मन्त्रिमण्डलं कार्यमनुशेते । ऋषिकुलसञ्चालकमण्डलस्यास्ति विचारो यदस्मिन्-पौर्वात्यपाश्चात्ययोर्विद्ययोः समावेशो भवेदिति ।

मन्ये न चिराज्जनता दत्तहस्ता कार्यरूपे परिणतं विभागद्वयं द्रक्ष्यति ।

अद्यत्वे ऋषिकुलस्य विभागेषु द्विचत्वारिंशत्सहस्राणि प्रतिमासं व्ययीभवन्ति ।



छात्रा निष्कासितस्थितिस्तया सह वर्तमानः ? ग्रन्थेचार्यः प्रकृते न संगच्छते।



# ❀ प्राक्तनशिक्षापद्धतिः ❀

( लेखकः-पं० योगीन्द्रशर्मा वेदव्याकरणाचार्यः, हरिद्वार ऋषिकुलवेदकर्मकाण्डाध्यापकः )

अयि लोकाभ्युदयविचारचारुचतुराः, शिष्यशिक्षादीक्षादानदक्षा विचक्षणाः! प्रागास्माकीनशिक्षापद्धतिः कीदृशी समुन्नताऽऽसीत्साम्प्रतञ्च तस्याः कीदृशी दुरवस्था जातेति यद्यपि नाप्रत्यक्षम्प्रेक्षावतामत्रभवताम्भवतान्तथापि शुभावसरमिमं समवाप्यात्र विषये किञ्चिन्मयोच्यते ततो नीरक्षीरविवेकन्यायेन भारतावतंसैः सुधीहंसैः फल्गुवपास्य सारग्रहणं कर्तव्यमिति भूयोभूयः सम्प्रार्थये ॥

अयि पुरातत्त्वविदो विद्वांसः! पुरा किल "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत एकादशवर्षं राजन्यन्द्वादशवर्षं वैश्य" मितिश्रुतिप्रतिपादितं स्वं स्वं कालमनुसृत्य आचार्यसमीपमुपेताः सुकुमारा उपनीतद्विजकुमाराः कुशपवित्रपाणयो भस्मरुद्राक्षदण्डाजिनोपवीतिनो मेखलिनः कौपीनकटिसूत्रवस्त्रजलपात्राण्यादधानाः सायम्प्रातः सन्ध्यातर्पणसमिदाधानवृद्धाभिवादनभिक्षाचरणगुरुशुश्रूषणानि कुर्वाणाः स्वीयानवद्यैः सदाचाराचरणैर्लोकपावनान्सनकसनन्दनादीनाजन्मब्रह्मचारिणोऽनुकुर्वाणाः सागरवसनमनेकपुण्यनदीदेशवनोपवनविलसितं श्रुतिस्मृतिपुराणेतिहासजेगीयमानं सहर्षमिमं भारतवर्षम्पुनानाः "इतः पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति" श्रुत्यनुसारेण जगदुपकुर्वाणा व्याकरणाद्यङ्ग समवायसमन्वितं वेदमधीयाना उपकुर्वाणा ब्रह्मचारिणो निजनाम सान्वयं कुर्वाणा विराजन्ते स्म। तदानीं ब्रह्मचर्यतपश्चरणनिर्मलान्तःकरणा वर्णिन आचार्यमुखादुपदिष्टषडङ्गवेदं सकृदुपश्रुत्यैव धारयन्तिस्मातस्तदानीं तेषां कृते वेदस्य श्रुतिरिति संज्ञा सान्वयाऽऽसीत्ततो दैवात्कालेषु गतेषु द्वापरादौ तत्तपोह्रासेन बुद्धिह्रासात्सकृच्छ्रवणमात्रेण सम्पूर्णवेदग्रहणायोग्याञ्छिष्यानवेक्ष्य विष्णवतारो वेदव्यासस्तत्कृपया चतुर्द्धा विभज्यर्ग्यजुःसामाथर्वाख्यांश्चतुरो वेदान्पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश। ते चानेकधा तान्विभज्य ग्रहणशक्त्यनुसारेण स्वशिष्येभ्य उपदिदेशुरेवञ्चानन्तशाखो वेदो जातः। उक्तञ्च "शिष्योपशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्निति"। ततः परं श्रवणमात्रेणैकमपि मन्त्रं ग्रहीतुमसमर्थानज्ञानविलसितान् कलिघोराजगरकवलितानतिमन्दधियोऽन्तेवासिनोऽवेक्ष्यातिदयालवो गुरवो "गुणिता शतशो विद्या सहस्रावर्तिता पुनः। आगमिष्यति जिह्वाग्रे स्थलं निम्नमिवोदकम्" इत्यादिवचनैरभ्यासप्रकारञ्जगति प्रवर्तयामासुस्ततःप्रभृति वेदस्याम्नायसंज्ञा ख्यातिं गताद्यापि दुर्निवारैव दरीदृश्यते।

ननु हारीतस्मृतौ—

"द्विधा स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च तत्र ब्रह्मवादिनीनामुपनयनं वेदाध्ययनं भिक्षाचर्या च" "सद्योवधूनान्तूपस्थिते विवा-

+ क्षणा निर्व्यापार स्थिति स्तया स
प्रकृते न संगच्छते।



# ❀ प्राक्तनशिक्षापद्धतिः ❀

( लेखकः-पं० योगीन्द्रशर्मा वेदव्याकरणाचार्यः, हरिद्वार ऋषिकुलवेद

अयि लोकाभ्युदयविचारचारुचतुराः, शिष्यशिक्षादीक्षादानसक्षणा+ विचक्षणाः! प्रागास्माकीनशिक्षापद्धतिः कीदृशी समुन्नताऽऽसीत्साम्प्रतञ्च तस्याः कीदृशी दुरवस्था जातेति यद्यपि नाप्रत्यक्षम्प्रेक्षावतामत्रभवताम्भवतान्तथापि शुभावसरमिमं समवाप्यात्र विषये किञ्चिन्मयोच्यते ततो नीरक्षीरविवेकन्यायेन भारतावतंसैः सुधीहंसैः फल्गुत्वपास्य सारग्रहणं कर्तव्यमिति भूयोभूयः सम्प्रार्थये ॥

अयि पुरातत्वविदो विद्वांसः! पुरा किल "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत एकादशवर्षं राजन्यन्द्वादशवर्षं वैश्य" मितिश्रुतिप्रतिपादितं स्वं स्वं कालमनुसृत्य आचार्यसमीपमुपेताः सुकुमारा उपनीतद्विजकुमाराः कुशपवित्रपाणयो भस्मरुद्राक्षदण्डाजिनोप[illegible]तो मेखलिनः कौपीनकटिनवब्र[illegible]ादधानाः सायम्प्रातः सयातप[illegible]नवृद्धाभिवादनभिक्षाचरगुरुश्[illegible] कुर्वाणाः स्वीयान[illegible]ः [illegible]णैर्लोकपावनान्सनकन्दना[illegible]ब्रह्मचारिणोऽनुकुर्वाणाः रव[illegible]नदीदेशवनोपवनविल[illegible]पुराणेतिहासजेगीयमानं [illegible]पुनानाः "इतः पञ्च[illegible] [illegible] कुर्वाणा व्याकरणाद्य-

ब्रह्मचारिणो निजना[illegible] राजन्ते स्म। तदानीं [illegible] मलान्तःकरणा वर्णि[illegible] दिष्टषडङ्गवेदं सकृदुप[illegible] तस्तदानीं तेषां कृते वे[illegible] साम्वयाऽऽसीत्ततो दैवा[illegible] दौ तत्तपोह्रासेन बुद्धिह्[illegible] त्रेण सम्पूर्णवेदग्रहणाय[illegible] विष्णवतारो वेदव्यासस्त[illegible] भज्यऋग्यजुःसामाथर्वाख्यांश्[illegible] वैशम्पायनजैमिनिसुमन्तुभ्[illegible] देश। ते चानेकधा तान्वि[illegible] नुसारेण स्वशिष्येभ्य उप[illegible] शाखो वेदो जातः। उक्तञ्च '[illegible] स्तच्छिष्यैर्वेदास्ते शाखिनोऽभ[illegible] परं श्रवणमात्रेणैकमपि मन्त्रं [illegible] र्थानज्ञानविलसितान् कलि[illegible] लितानतिमन्दधियोऽन्तेवासिनो[illegible] यालवो गुरवो 'गुणिता शतशो[illegible] न्नावर्तिता पुनः। आपमिव[illegible] स्थलं निम्नमिवोदकम्' इत्यादि[illegible] प्रकारखगति प्रवर्तयामासुस्त[illegible] स्याम्नायसंज्ञा ख्याति गतापि [illegible] दरीदृश्यते।

नन्वु हारीतस्मृती-

द्विधा स्त्रियो ब्रह्मवादिन्यः स[illegible]
तत्र ब्रह्मवादिनीनामुपनयनं वेदाध्य[illegible]

+ क्षणो निर्व्यापारस्थितिस्तया सह वर्तमानः । प्रयोगश्चार्यः प्रकृते न संगच्छते ।



# ❁ प्राक्तनशिक्षापद्धतिः ❁

( लेखकः-पं० योगीन्द्रशर्मा वेदव्याकरणाचार्यः, हरिद्वार ऋषिकुलवेदकर्मकाण्डाध्यापकः )

अयि लोकाभ्युदयविचारचारुचतुराः, शिष्यशिक्षादीक्षादानसक्षणा + विचक्षणाः! प्रागास्माकीनशिक्षापद्धतिः कीदृशी समुन्नताऽऽसीत्साम्प्रतञ्च तस्याः कीदृशी दुरवस्था जातेति यद्यपि नाप्रत्यक्षम्प्रेक्षावतामत्रभवताम्भवतान्तथापि शुभावसरमिमं समवाप्यात्र विषये किञ्चिन्मयोच्यते ततो नीरक्षीरविवेकन्यायेन भारतावतंसैः सुधीहंसैः फल्गुवपास्य सारग्रहणं कर्तव्यमिति भूयोभूयः सम्प्रार्थये ॥

अयि पुरातत्त्वविदो विद्वांसः! पुरा किल "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत एकादशवर्षं राजन्यन्द्वादशवर्षं वैश्य" मितिश्रुतिप्रतिपादितं स्वं स्वं कालमनुसृत्य आचार्यसमीपमुपेताः सुकुमारा उपनीतद्विजकुमाराः कुशपवित्रपाणयो भस्मरुद्राक्षदण्डाजिनोपवीतिनो मेखलिनः कौपीनकटिसूत्रवस्त्रजलपात्राण्यादधानाः सायम्प्रातः सन्ध्यातर्पणसमिदाधानवृद्धाभिवादनभिक्षाचरणगुरुशुश्रूषणानि कुर्वाणाः स्वीयानवद्यैः सदाचाराचरणैर्लोकपावनान्सनकसनन्दनादीनाजन्मब्रह्मचारिणोऽनुकुर्वाणाः सागरवसनमनेकपुण्यनदीदेशवनोपवनविलसितं श्रुतिस्मृतिपुराणेतिहासजेगीयमानं सहर्षमिमं भारतवर्षम्पुनानाः "इतः पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति" श्रुत्यनुसारेण जगदुपकुर्वाणा व्याकरणाद्यङ्गसमवायसमन्वितं वेदमधीयाना उपकुर्वाणा ब्रह्मचारिणो निजनाम सान्वयं कुर्वाणा विराजन्ते स्म । तदानीं ब्रह्मचर्यतपश्चरणनिर्मलान्तःकरणा वर्णिन आचार्यमुखादुपदिष्टषडङ्गवेदं सकृदुपश्रुत्यैव धारयन्तिस्मातस्तदानीं तेषां कृते वेदस्य श्रुतिरिति संज्ञा सान्वयाऽऽसीत्ततो दैवात्कालेषु गतेषु द्वापरादौ तत्तपोह्रासेन बुद्धिह्रासात्सकृच्छ्रवणमात्रेण सम्पूर्णवेदग्रहणायोग्याञ्छिष्यानवेक्ष्य विष्णवतारो वेदव्यासस्तत्कृपया चतुर्द्धा विभज्यर्ग्यजुःसामाथर्वाख्यांश्चतुरो वेदान्पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमादुपदिदेश । ते चानेकधा तान्विभज्य ग्रहणशक्त्यनुसारेण स्वशिष्येभ्य उपदिदेशैवञ्चानन्तशाखो वेदो जातः। उक्तञ्च "शिष्योपशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्निति"। ततः परं श्रवणमात्रेणैकमपि मन्त्रं ग्रहीतुमसमर्थानज्ञानविलसितान् कलिघोराजगरकवलितानतिमन्दधियोऽन्तेवासिनोऽवेक्ष्यातिदयालवो गुरवो "गुणिता शतशो विद्या सहस्रावर्तिता पुनः । आगमिष्यति जिह्वाग्रे स्थलं निम्नमिवोदकम्" इत्यादिवचनैरभ्यासप्रकारञ्जगति प्रवर्तयामासुस्ततःप्रभृति वेदस्याम्नायसंज्ञा ख्यातिं गताद्यापि दुर्निवारैव दरीदृश्यते ।

ननु हारीतस्मृतौ—

"द्विधा स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च तत्र ब्रह्मवादिनीनामुपनयनं वेदाध्ययनं भिक्षाचर्या च सद्योवधूनामुपस्थिते विवा-

द्वे यथाकथञ्चिदुपनयनं विधाय विवाहः कर्तव्य इति" कन्याया अप्युपनयनपूर्वकवेदाध्ययनाद्यनुज्ञादर्शनेन सिद्धान्तकौमुद्यां "जातेरस्त्रीविषयादयोपधादित्यत्र" कठी, बह्वृचीत्युदाहरणद्वयदर्शनेन चाद्यत्वेऽपि कन्याया उपनयनपूर्वकवेदाध्ययनाद्यावश्यकमिति नाशङ्कनीयम्" ।

"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत"

इत्यादिपूर्वोक्तश्रुतौ ब्राह्मणादिवर्णत्रयग्रहणेन पुंल्लिङ्गस्य विवक्षितत्वेन च स्त्रीशूद्रयोरुपनयननिषेधावगमेन तन्निमित्तकवेदाध्ययनादिनिषेधस्यायत्नसिद्धत्वात् ।

न च स्त्रीत्वस्याविवक्षया पुंव्यक्तावपि मक्षिकाशब्दप्रयोगवत् अष्टवर्षं ब्राह्मणमुपनयीतेत्यादावपि ब्राह्मणशब्दगतं स्त्रीत्वमविवक्षितमितिवाच्यम् "वाक्तऽआप्यायतामितिमन्त्रे" मेढ्रन्तऽआप्यायतामिति विशेषाङ्गाप्यायनदर्शनेन "पशुमालभेतेत्यत्र" पशुशब्दनिष्ठपुंस्त्वविवक्षावदत्रापि "न स्त्रीशूद्रौ वेदमधीयातामिति" विशेषप्रामाण्यसद्भावेन पुंस्त्वस्य विवक्षितत्वादिति ।

अतएव महर्षियाज्ञवल्क्येन—

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ।
एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥"

इत्युक्त्वा मध्ये चोपनयनं परित्यज्य—

"तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः"

इत्युक्तम् ततो

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् " ॥

इत्युपनीतिरभिहिता,

यदि स्त्रीशूद्रयोरुपनयनं याज्ञवल्क्यसम्मतं स्यात्तदा 'चूडा कार्या यथाकुलम्' इत्यस्याग्रे 'गर्भाष्टमे' इत्येकम्पद्यमुक्त्वा "एवमेनः शमं याति बीजगर्भसमुद्भवम्" ।
"तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः"

इत्यवदयत,

अतः कन्याया उपनयनं नास्त्येवेति ज्ञेयम् । यत्तु प्रागुक्तं हारीतवाक्यं तत्कल्पान्तरविषयकम् । यथाह यमः—

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ॥
अध्यापनञ्च वेदानां सावित्रीग्रहणं तथा ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः ॥
स्वगृहे चैव कन्याया भैक्षचर्या विधीयते ॥ इति

ननु मुख्यमुपनयनं यद्यपि कन्याया नास्ति तथाप्यातिदेशिकन्तदस्त्येव, यदाह मनुः—

वैवाहिको विधिः स्त्रीणामौपनायनिकः परः ।
(संस्कारो वैदिकः स्मृतः)
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥इति॥

ततश्च कन्याया वैवाहिकविधेरेवोपनयनसमत्वेन "संस्काराश्चोपरितनकर्महेतवः" इति शिष्टोक्त्या 'पतिसेवा गुरौ वास' इति पद्यांशोपदेशेन च मनुना कन्यायाः कृते वेदाध्ययनमन्वज्ञायीति चेन्न, 'गौर्वाहीक' इतिवत् पूर्वोक्तवाक्ये वैवाहिकोपनायनिकपदयोरेकधर्मिबोधकत्वरूपसामानाधिकरण्याभावेनान्वयानुपपत्त्या तात्पर्यानुपपत्त्या चौपनायनिकपदस्य तत्सादृश्ये लाक्षणिकत्वेन यथा 'चन्द्रवन्मुख' मित्यत्र चन्द्रभिन्नमुखे चन्द्र-

नार्वाचीनच्छात्राणां वेदादिशास्त्राध्ययनप्रथापि सङ्गच्छते ।

अथेदानीमिदं विमृश्यते-किं रात्रेः पश्चिमयामेऽध्ययनपरिश्रान्तेन च्छात्रेण श्रमदूरीकरणाय पुनः शयितव्यन्न वा ? अत्र केचित् "नचाऽपररात्रमधीत्य पुनः स्वपेत्" । "निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेदिति" स्मृतिवचने अनुसरन्तो ब्रह्मपदस्य वेदाङ्गादेरप्युपलक्षकत्वेन वेदतदङ्गान्यधीत्य न पुनः शयीतेति मन्यन्ते ।

अपरे तु पूर्वोक्तस्मृतिवाक्ययोः केवलवेदाध्ययनानन्तरस्वापनिषेधकत्वेन रात्रिपश्चिमयामे व्याकरणाद्यङ्गोपाङ्गाद्यध्ययनानन्तरस्वापः किञ्चिच्छात्रैः श्रमापनोदनायावश्यमनुष्ठेयोऽन्यथोत्तरदिने स्वयं गुरुमुखाद्वा, व्याकरणाध्ययनसमये नितान्तालस्याभिभूतस्वान्तैर्निद्रामुद्रितलोचनैश्च च्छात्रैः सम्यक्पाठतात्पर्यबोधासम्भव, इति वदन्ति ।

अत्र प्रथमपक्ष एव मे समीचीन आभाति, यामद्वयं शयनमाचरतां स्वस्थानां "अन्नव्यञ्जनयोर्भागौ तृतीयमुदकस्य च । वायोः सञ्चरणार्थाय चतुर्थमवशेषये" दितिरीत्या भोजनमाचरतां ब्रह्मचारिणां पश्चिमयामाध्ययने उत्तरदिनपाठक्षतिकारकश्रमाभावानुभवात् ॥

किञ्च पुराऽन्तेवासिनो गुरवश्च प्रातःकालिकनित्यकर्म समाप्य ब्रह्मयज्ञञ्च विधाय भिक्षाचरणभोजनादिकार्यमाचरन्तिस्म । तदानीं "न भुक्त्वा न नक्तम्प्रब्रूयाद्ब्रह्मराशिरितीति" श्रुतन्त्रव्याकरणधृतश्रुतिरपि कृतार्थासीत् ।

अद्यत्वे त्वस्माकं दौर्भाग्याद्वाराणसेयविद्यालयान्विहायान्यत्रेयम्प्रथा लुप्तप्रायैवेति, स्मारं स्मारं खिद्यते चेतः ।

ननु ब्रह्मयज्ञशब्दो वेदाध्ययनाध्यापनोभयबोधकस्तदन्यतरबोधको वेति सन्देहे, 'यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः । स चार्वाकृतर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यत्रेत्यनिमित्तकात् ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥' इति स्मृतिवचनाभ्यां वेदाध्ययनाध्यापनोभयबोधकः इत्यध्यवसीयते ।

ननु 'न भुक्त्वा न नक्तम्प्रब्रूयाद्ब्रह्मराशि' रित्यत्र ब्रह्मराशिशब्देन ब्रह्मप्रतिपादकवर्णसमाम्नायस्य ग्रहणेन भोजनोत्तरं तन्मूलकव्याकरणाध्ययनस्यैव निषेधेन वेदाध्ययने निषेधाभाव इति चेन्न, कैमुतिकन्यायेन ब्रह्मप्रतिपादकमन्त्रब्राह्मणोभयसमुदायस्यापि ब्रह्मराशिपदवाच्यत्वेन च भोजनोत्तरकाले व्याकरणाद्यङ्गसमवायसमन्वितवेदाध्ययने दोषाधिगमात् ।

न च तथा सति समयाभावेन शास्त्राभ्यासमननयोरभावादधीतविषयविस्मृतिरिति वाच्यम्, प्रब्रूयादितिपदस्याध्यापनार्थकत्वेन दिवा भोजनोत्तरं रात्रेः पूर्वोत्तरयामयोश्चाधीतविषयाभ्यासमननयोरनिषेधात् । न च रात्रेर्मध्ययामद्वयेऽपि केषा-

हे यथाकथञ्चिदुपनयनं विधाय विवाहः कर्तव्य इति" कन्याया अप्युपनयनपूर्वकवेदाध्यनाद्यनुज्ञादर्शनेन सिद्धान्तकौमुद्यां "जातेरस्त्रीविषयादयोपधादित्यत्र" कठी, बह्वृचीत्युदाहरणद्वयदर्शनेन चाद्यत्वेऽपि कन्याया उपनयनपूर्वकवेदाध्ययनाद्यावश्यकमिति नाशङ्कनीयम्" ।

"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत"

इत्यादिपूर्वोक्तश्रुतौ ब्राह्मणादिवर्णत्रयग्रहणेन पुंल्लिङ्गस्य विवक्षितत्वेन च स्त्रीशूद्रयोरुपनयननिषेधावगमेन तन्निमित्तकवेदाध्ययनादिनिषेधस्यायत्नसिद्धत्वात् ।

न च स्त्रीत्वस्याविवक्षया पुंव्यक्तावपि मक्षिकाशब्दप्रयोगवत् अष्टवर्षं ब्राह्मणमुपनयीतेत्यादावपि ब्राह्मणशब्दगतं स्त्रीत्वमविवक्षितमितिवाच्यम् "वाक्तऽआप्यायतामितिमन्त्रे" मेढ्रन्तऽआप्यायतामिति विशेषाङ्गाप्यायनदर्शनेन "पशुमालभेतेत्यत्र" पशुशब्दनिष्ठपुंस्त्वविवक्षावदत्रापि "न स्त्रीशूद्रौ वेदमधीयातामिति" विशेषप्रामाण्यसद्भावेन पुंस्त्वस्य विवक्षितत्वादिति ।

अतएव महर्षियाज्ञवल्क्येन—

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनम्मासि चूडा कार्या यथाकुलम्
एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥"

इत्युक्त्वा मध्ये चोपनयनं परित्यज्य—

"तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः"

इत्युक्तम् ततो

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥" ॥

इत्युपनीतिरभिहिता,

यदि स्त्रीशूद्रयोरुपनयनं याज्ञवल्क्यसम्मतं स्यात्तदा 'चूडा कार्या यथाकुलम्' इत्यस्याग्रे 'गर्भाष्टमे' इत्येकम्पद्यमुक्त्वा.

"एवमेनः शमं याति बीजगर्भसमुद्भवम्" ।

"तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः"

इत्यवक्ष्यत,

अतः कन्याया उपनयनं नास्त्येवेति ज्ञेयम् । यत्तु प्रागुक्तं हारीतवाक्यं तत्कल्पान्तरविषयकम् । यथाह यमः—

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ॥
अध्यापनञ्च वेदानां सावित्रीग्रहणं तथा ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः ॥
स्वगृहे चैव कन्याया भैक्षचर्या विधीयते ॥ इति

ननु मुख्यमुपनयनं यद्यपि कन्याया नास्ति तथाप्यातिदेशिकन्तदस्त्येव, यदाह मनुः-

वैवाहिको विधिः स्त्रीणामौपनायनिकः परः ।
(संस्कारो वैदिकः स्मृतः)
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥इति॥

ततश्च कन्याया वैवाहिकविधेरेवोपनयनसमत्वेन "संस्काराश्चोपरितनकर्महेतवः" इति शिष्टोक्त्या 'पतिसेवा गुरौ वास' इति पद्यांशोपदेशेन च मनुना कन्यायाः कृते वेदाध्ययनमन्वज्ञायीति चेन्न, 'गौर्वाहीक' इतिवत् पूर्वोक्तवाक्ये वैवाहिकोपनायनिकपदयोरेकधर्मिबोधकत्वरूपसामानाधिकरण्याभावेनान्वयानुपपत्त्या तात्पर्यानुपपत्त्या चौपनायनिकपदस्य तत्सादृश्ये लाक्षणिकत्वेन यथा 'चन्द्रवन्मुख' मित्यत्र चन्द्रभिन्नमुखे चन्द्र-

नार्वाचीनच्छात्राणां वेदादिशास्त्राध्ययनप्रथापि सङ्गच्छते ।

अथेदानीमिदं विमृश्यते-किं रात्रेः पश्चिमयामेऽध्ययनपरिश्रान्तेन च्छात्रेण श्रमदूरीकरणाय पुनः शयितव्यन्न वा ? अत्र केचित् "नचाऽपररात्रमधीत्य पुनः स्वपेत्" । "निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेदिति" स्मृतिवचने अनुसरन्तो ब्रह्मपदस्य वेदाङ्गादेरप्युपलक्षकत्वेन वेदतदङ्गान्यधीत्य न पुनः शयीतेति मन्यन्ते ।

अपरे तु पूर्वोक्तस्मृतिवाक्ययोः केवलवेदाध्ययनानन्तरस्वापनिषेधकत्वेन रात्रिपश्चिमयामे व्याकरणाद्यङ्गोपाङ्गाद्यध्ययनानन्तरस्वापः किञ्चिच्छात्रैः श्रमापनोदनायावश्यमनुष्ठेयोऽन्यथोत्तरदिने स्वयं गुरुमुखाद्वा, व्याकरणाध्ययनसमये नितान्तालस्याभिभूतस्वान्तैर्निद्रामुद्रितलोचनैश्च च्छात्रैः सम्यक्पाठतात्पर्यबोधासम्भव, इति वदन्ति ।

अत्र प्रथमपक्ष एव मे समीचीन आभाति, यामद्वयं शयनमाचरतां स्वस्थानां "अन्नव्यञ्जनयोर्भागौ तृतीयमुदकस्य च । वायोः सञ्चरणार्थाय चतुर्थमवशेषये" दितिरीत्या भोजनमाचरतां ब्रह्मचारिणां पश्चिमयामाध्ययने उत्तरदिनपाठक्षतिकारकश्रमाभावानुभवात् ॥

किञ्च पुराऽन्तेवासिनो गुरवश्च प्रातःकालिकनित्यकर्म समाप्य ब्रह्मयज्ञञ्च विधाय भिक्षाचरणभोजनादिकार्यमाचरन्तिस्म । तदानीं 'न भुक्त्वा न नक्तम्प्रब्रूयाद्ब्रह्मराशिरितीति" अकृतन्त्रव्याकरणधृतश्रुतिरपि कृतार्थासीत् ।

अद्यत्वे त्वस्माकं दौर्भाग्याद्वाराणसेयविद्यालयान्विहायान्यत्रेयम्प्रथा लुप्तप्रायैवेति, स्मारं स्मारं खेखिद्यते चेतः ।

ननु ब्रह्मयज्ञशब्दो वेदाध्ययनाध्यापनोभयबोधकस्तदन्यतरबोधको वेति सन्देहे, 'यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः । स चार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यत्रेत्यनिमित्तकात् ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥' इति स्मृतिवचनाभ्यां वेदाध्ययनाध्यापनोभयबोधकः इत्यध्यवसीयते ।

ननु 'न भुक्त्वा न नक्तम्प्रब्रूयाद्ब्रह्मराशि' रित्यत्र ब्रह्मराशिशब्देन ब्रह्मप्रतिपादकवर्णसमाम्नायस्य ग्रहणेन भोजनोत्तरं तन्मूलकव्याकरणाध्ययनस्यैव निषेधेन वेदाध्ययने निषेधाभाव इति चेन्न, कैमुतिकन्यायेन ब्रह्मप्रतिपादकमन्त्रब्राह्मणोभयसमुदायस्यापि ब्रह्मराशिपदवाच्यत्वेन च भोजनोत्तरकाले व्याकरणाद्यङ्गसमवायसमन्वितवेदाध्ययने दोषाधिगमात् ।

न च तथा सति समयाभावेन शास्त्राभ्यासमननयोरभावादधीतविषयविस्मृतिरिति वाच्यम्, प्रब्रूयादितिपदस्याध्यापनार्थकत्वेन दिवा भोजनोत्तरं रात्रेः पूर्वोत्तरयामयोश्चाधीतविषयाभ्यासमननयोरनिषेधात् । न च रात्रेर्मध्ययामद्वयेऽपि केषा-

ब्रच्छिष्याणामध्ययनदर्शनेन तत्राप्यध्ययनं विधेयमिति शङ्क्यम्, तस्य राक्षसवेलापानध्यायत्वेन तत्राध्ययननिषेधस्य महर्षिभिरङ्गीकारादिति बोध्यम्। उक्तञ्च स्मृतौ—

अनध्यायेष्वध्ययनात्प्रज्ञामायुः प्रजां श्रियम्।
ब्रह्मवीर्यं बलन्तेजो निष्कृन्तति यमः स्वयम् ॥१॥
मन्त्रवीर्यंक्षयभयादिन्द्रो वज्रेण हन्ति च।
ब्रह्मराक्षसताञ्चैति नरकञ्च भजेद्ध्रुवम् ॥२॥

अन्येऽपि प्रतिपदष्टमीचतुर्दश्यमापूर्णिमाप्रदोषादयोऽनध्यायाः स्मृत्युक्ताः सन्ति तेष्वप्यध्ययने प्रज्ञादिनाश इति ज्ञेयम्। सन्ध्यावन्दनादिनित्यकर्मसु त्वनध्यायाभावो ब्रह्मसत्ररूपत्वात्तेषाम्। तथाच मनुः—"नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम्। ब्रह्माहुतिहुतम्पुण्यमनध्यायवषट्कृतम्" ॥१॥ किञ्च प्राक्तनसमये ब्रह्मचारिणो विद्याध्ययनार्थं सुदूरमपि ऋषिकुलं गत्वा "न भाषेत स्त्रियं काञ्चित् पूर्वदृष्टान्न च स्मरेत्। कथाञ्च वर्जयेत्तासान्न पश्येल्लिखितामपीति" प्रमाणमनुसरन्तः स्मरणकीर्तनाद्यष्टविधव्यवायाभावरूपं ब्रह्मचर्यम्पालयन्तो, "यदिच्छन्तो ब्रह्मचर्यञ्चरन्ति" इति निजोद्देश्यं सफलीकुर्वन्तः, प्रथमे वयसि विद्यामधीत्य विद्यास्नातक, व्रतस्नातक, विद्याव्रतस्नातका,न्यतमोपाधिभाजो गृहस्थाश्रममाविशन्ति स्म। ननु 'अधीयानो योजनात्परमिति' प्रातिशाख्यसूत्रानुसारेणाध्ययनार्थं योजनाधिकगमननिषेधात्तेषामध्ययनार्थं सुदूरगमनमयुक्तमिति चेन्न, अध्ययनमाचरताम्प्रतिदिनमिति भावार्थे योजनाधिकमार्गगमननिषेधात्। न च पूर्वोक्तप्रातिशाख्यसूत्रे 'अधीयान' इत्यत्र शानच्प्रत्ययमहिम्ना 'अह्ना क्रोशेन वानुवाकोऽधीत' इतिसिद्धान्तकौमुद्युदाहरणेन च योजनपर्यन्तं मार्गङ्गच्छन्तो ब्रह्मचारिणो वेदादिशास्त्राण्यध्येतुमर्हन्तीति वाच्यम्,

"नोच्छिष्टः संवसेन्नित्यं न नग्नः स्नानमाचरेत्।
न गच्छन्वै पठेद्वापि न चैव स्वशिरः स्पृशेत् ॥

इति कूर्मपुराणीयवचनात्।

'यः पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ॥
रथ्याञ्च सञ्चरन् विप्रो वेदमुद्गीरयेत्तथा ॥
विप्रस्य पठनं क्वापि शृणोति तावतान्त्यजः।
तेन पापेन लिप्यापि यदि नायामि ते गृहम् ॥"

इति शिवरात्रिकथायां मृगव्याधसंवादे श्लोकदर्शनाच्च मार्गे गच्छतामध्ययननिषेधेन पूर्वोक्तार्थस्यैव समीचीनत्वात्। किञ्च यद्यपि कात्यायनेन "भोजनम्मधुरस्निग्धम्" (प्रा० अ०। सू०२५) 'वर्णदोषविवेकार्थम्' (प्रा०।अ०१।सू०२६) इति सूत्रद्वयं सामान्यरूपेण भोजनविषये उपदिष्टं, परन्तूव्वटेनाऽकारादयो वर्णास्तेषां विवेकाय नानाकरणाय मधुररसप्रायं घृतप्रायञ्चान्नं भुञ्जीतेति व्याख्यातम्। वस्तुतस्तु पूर्वोक्तसूत्रद्वयेन त्रिफलादन्तकाष्ठयोरपि भक्षणं ध्वन्यते, सजलत्रिफलाभक्षणे-निम्नलिखितकण्टक्यादिवृक्षीयदन्तधावनभक्षणे च माधुर्यरसानुभवात्। उक्तं च याज्ञवल्क्येन शिक्षायाम्—

त्रिफलां लवणाक्तां वै भक्षयेच्छिष्यकः सदा।
दीपनमेधाजनन्येषा स्वरवर्णकरी तथा ॥

गवाह्लादकत्वादिकतिपयधर्माणामेवातिदेशो न शैत्यादेरपि । तथैवात्रोपनयनगतद्विजत्वसिद्धिकामाचारकामभक्ष्याभावत्वादिधर्माणामेव विवाहद्वारा स्त्रीष्वतिदेशेन मनुवाक्यचारितार्थ्यसम्भवे, तेन वेदाध्ययनातिदेशासम्भवात् । अतएव स्त्रीशूद्रप्रतिकूलसंस्काराणां वेदाध्ययननिषेधपरं महा-भारतवाक्यमपि सङ्गच्छते तद्यथा—

स्त्रीशूद्रद्विजबन्धूनान्त्रयी न श्रुतिगोचरा ।
इतिभारतमाख्यानं कृपया मुनिना कृतम् ॥

इति अयम्भावः, स्त्रीभिर्विवाहात्प्राक्पित्रादिद्वारा विवाहानन्तरं भर्तृद्वारा रामायणाद्यध्ययनं विधेयं न वेदवेदाङ्गाध्ययनमिति तेनैव वेदगतनिगूढपदार्थजातस्याञ्जसाऽल्पकालेन ज्ञानावाप्तिरिति शास्त्राशयः । उक्तं च वाचस्पतिमिश्रेण 'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत । इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत' इति ॥' अत्र तावत्किमंगान्यादावधीत्य वेदोऽध्येय उत वेदमधीत्यांगान्यध्येयान्युत युगपदुभयमध्येयमिति विचारणायाम्, वर्णोच्चारणोपयोगिताल्वादिस्थानकरणनादानुप्रदानशिक्षणाय प्रथमं व्याकरणाध्ययनमुचितमिति प्रतीयते । उक्तञ्च महाभाष्यकारेण पतञ्जलिना तद्यथा "पुराकल्प एतदासीत्संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते तेभ्यस्तत्तत्स्थानकरणनादानु-प्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते तदद्यत्वे न तथा वेदमधीत्य त्वरिता वक्तारो भवन्तीत्यादि (म० भा० अ१ पा० १.) न च तथासति—

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

(मनुस्मृति अध्याय २७ श्लोक १६८)

इति मनुवचनविरोध इति शङ्कनीयम्, तस्य व्याकरणादिवेदाङ्गस्मृतिभिन्नार्थशास्त्राद्यध्ययननिन्दापरत्वेन पूर्वं व्याकरणाद्यध्ययने विरोधाभावात्, 'न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः' इति शङ्खलिखितस्मृतिप्रामाण्यानुग्रहाच्च । अयम्भावः— उपनयनानन्तरं प्रथमन्ताल्वादिस्थानप्रयत्नादिज्ञानोपयोगिव्याकरणग्रन्थं लघुकौमुद्यादिरूपं स्वल्पकालेनाधीत्य श्रावण्यां पौर्णमास्यां विधिवदुपाकृत्य मन्त्रब्राह्मणात्मकं वेदमर्द्धपञ्चमानर्द्धषष्ठानर्द्धसप्तमान्वा मासानधीत्योत्सृज्य त्रिरात्रं पक्षिणीं च रात्रिमधीत्य पश्चात्प्रतिमासं शुक्लपक्षे मन्त्रब्राह्मणात्मकं वेदं, कृष्णपक्षे व्याकरणाद्यङ्गजातं फक्किकाभाष्यवृत्त्यादियुक्तं यथाशक्यमधीयीत । वेदाध्ययनात्प्राक् सूत्रभाष्यवृत्त्यादिसकलव्याकरणग्रन्थाध्ययने वेदाभ्यासस्याल्पवयस्कब्रह्मचारिसाध्यत्वेन पश्चात्तदध्ययनन्दुश्शकमिति ज्ञेयम् । उक्तञ्च मनुना—

अत ऊर्ध्वन्तु छन्दांसि शुक्लेषु नियतः पठेद् ।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठेद् ॥

इति ॥ (म० अ० ४।६८)

किञ्च प्राचीनकाले यद्यपि-

विद्या हवै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम् १॥

श्चिच्छिष्याणामध्ययनदर्शनेन तत्राप्यध्ययनं विधेयमिति शङ्क्यम्, तस्य राक्षसवेलारूपानध्यायत्वेन तत्राध्ययननिषेधस्य महर्षिभिरङ्गीकारादिति बोध्यम्। उक्तञ्च स्मृतौ—

अनध्यायेष्वध्ययनात्प्रज्ञामायुः प्रजां श्रियम्।
ब्रह्मवीर्यं बलन्तेजो निष्कृन्तति यमः स्वयम् ॥१॥
मन्त्रवीर्यक्षयभयादिन्द्रो वज्रेण हन्ति च।
ब्रह्मराक्षसताञ्चैति नरकञ्च भजेद्ध्रुवम् ॥२॥

अन्येऽपि प्रतिपदष्टमीचतुर्दश्यमापूर्णिमाप्रदोषादयोऽनध्यायाः स्मृत्युक्ताः सन्ति तेष्वप्यध्ययने प्रज्ञादिनाश इति ज्ञेयम्। सन्ध्यावन्दनादिनित्यकर्मसु त्वनध्यायाभावो ब्रह्मसत्ररूपत्वात्तेषाम्। तथाच मनुः—"नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम्। ब्रह्माहुतिहुतम्पुण्यमनध्यायवषट्कृतम्" ॥१॥ किञ्च प्राक्तनसमये ब्रह्मचारिणो विद्याध्ययनार्थं सुदूरमपि ऋषिकुलं गत्वा "न भाषेत स्त्रियं काञ्चित् पूर्वदृष्टान्न च स्मरेत्। कथाञ्च वर्जयेत्तासाञ्च पश्येल्लिखितामपीति" प्रमाणमनुसरन्तः स्मरणकीर्तनाद्यष्टविधव्यवायाभावरूपं ब्रह्मचर्यम्पालयन्तो, "यदिच्छन्तो ब्रह्मचर्यञ्चरन्ति" इति निजोद्देश्यं सफलीकुर्वन्तः, प्रथमे वयसि विद्यामधीत्य विद्यास्नातक, व्रतस्नातक, विद्याव्रतस्नातका,न्यतमोपाधिभाजो गृहस्थाश्रममाविशन्ति स्म। ननु 'अधीयानो योजनात्परमिति' प्रातिशाख्यसूत्रानुसारेणाध्ययनार्थं योजनाधिकगमननिषेधात्तेषामध्ययनार्थं सुदूरगमनमयुक्तमिति चेन्न, अध्ययनमाचरतामप्रतिदिनमिमदार्थं योजनाधिकमार्गगमननिषेधात्। न च पूर्वोक्तप्रातिशाख्यसूत्रे 'अधीयान' इत्यत्र शानच्प्रत्ययमहिम्ना 'अह्ना क्रोशेन वानुवाकोऽधीत' इतिसिद्धान्तकौमुद्युदाहरणेन च योजनपर्यन्तं मार्गङ्गच्छन्तो ब्रह्मचारिणो वेदादिशास्त्राण्यध्येतुमर्हन्तीति वाच्यम्,

"नोच्छिष्टः संवसेन्नित्यं न नग्नः स्नानमाचरेत्।
न गच्छन्वै पठेद्वापि न चैव स्वशिरः स्पृशेत् ॥

इति कूर्मपुराणीयवचनात्।

'यः पठेत् स्वरहीनन्तु लक्षणेन विवर्जितम् ॥
रथ्याञ्च सञ्चरन् विप्रो वेदमुद्गीरयेत्तथा ॥
विप्रस्य पठनं क्वापि शृणोति तावतान्त्यजः।
तेन पापेन लिप्याापि यदि नायामि ते गृहम् ॥"

इति शिवरात्रिकथायां मृगव्याधसंवादे श्लोकदर्शनाच्च मार्गे गच्छतामध्ययननिषेधेन पूर्वोक्तार्थस्यैव समीचीनत्वात्। किञ्च यद्यपि कात्यायनेन "भोजनम्मधुरस्निग्धम्" (प्रा० अ०। सू० २५) 'वर्णदोषविवेकार्थम्' (प्रा०।अ०१।सू०२६) इति सूत्रद्वयं सामान्यरूपेण भोजनविषये उपदिष्टं, परन्तूष्वटेनाऽकारादयो वर्णास्तेषां विवेकाय नानाकरणाय मधुररसप्रायं घृतप्रायञ्चान्नं भुञ्जीतेति व्याख्यातम्। वस्तुतस्तु पूर्वोक्तसूत्रमुखेन त्रिफलादन्तकाष्ठयोरपि भक्षणं ध्वन्यते, सजलत्रिफलाभक्षणे-निम्नलिखितकण्टक्यादिवृक्षीयदन्तधावनभक्षणे च माधुर्यरसानुभवात्। उक्तं च याज्ञवल्क्येन शिक्षायाम्—

त्रिफलां लवणाक्तां वै भक्षयेच्छिष्यकः सदा।
क्षीणमेधाजनन्येषा स्वरवर्णकरी तथा ॥

गवाह्लादकत्वादिकतिपयधर्माणामेवातिदेशो न शैत्यादेरपि । तथैवात्रोपनयनगतद्विजत्वसिद्धिकामाचारकामभक्ष्याभावत्वादिधर्माणामेव विवाहद्वारा स्त्रीष्वतिदेशेन मनुवाक्यचारितार्थ्यसम्भवे, तेन वेदाध्ययनातिदेशासम्भवात् । अतएव स्त्रीशूद्रप्रतिकूलसंस्काराणां वेदाध्ययननिषेधपरं महा-भारतवाक्यमपि सङ्गच्छते तद्यथा—

स्त्रीशूद्रद्विजबन्धूनान्त्रयी न श्रुतिगोचरा ।
इतिभारतमाख्यानं कृपया मुनिना कृतम् ॥

इति अयम्भावः, स्त्रीभिर्विवाहात्प्राक्पित्रादिद्वारा विवाहानन्तरं भर्तृद्वारा रामायणाद्यध्ययनं विधेयं न वेदवेदाङ्गाध्ययनमिति तेनैव वेदगतनिगूढपदार्थजातस्याज्ञसाऽल्पकालेन ज्ञानावाप्तिरिति शास्त्राशयः । उक्तं च वाचस्पतिमिश्रेण 'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत । इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत' इति ॥' अत्र तावत्किमंगान्यादावधीत्य वेदोऽध्येय उत वेदमधीत्यांगान्यध्येयान्युत युगपदुभयमध्येयमिति विचारणायाम्, वर्णोच्चारणोपयोगिताल्वादिस्थानकरणनादानुप्रदानशिक्षणाय प्रथमं व्याकरणाध्ययनमुचितमिति प्रतीयते । उक्तञ्च महाभाष्यकारेण पतञ्जलिना तद्यथा "पुराकल्प एतदासीत्संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते तेभ्यस्तत्तत्स्थानकरणनादानु-प्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते तदद्यत्वे न तथा वेदमधीत्य त्वरिता वक्तारो भवन्तीत्यादि (म. भा. अ१ पा. १.) न च तथासति—

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

(मनुस्मृति अध्याय २७ श्लोक १६८)

इति मनुवचनविरोध इति शङ्कनीयम्, तस्य व्याकरणादिवेदाङ्गस्मृतिभिन्नार्थशास्त्राद्यध्ययननिन्दापरत्वेन पूर्वं व्याकरणाद्यध्ययने विरोधाभावात्, 'न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः' इति शङ्खलिखितस्मृतिप्रामाण्यानुग्रहाच्च । अयम्भावः— उपनयनानन्तरं प्रथमन्ताल्वादिस्थानप्रयत्नादिज्ञानोपयोगिव्याकरणग्रन्थं लघुकौमुद्यादिरूपं स्वल्पकालेनाधीत्य श्रावण्यां पौर्णमास्यां विधिवदुपाकृत्य मन्त्रब्राह्मणात्मकं वेदमर्द्धपञ्चमानर्द्धषष्ठानर्द्धसप्तमान्वा मासानधीत्योत्सृज्य त्रिरात्रं पक्षिणीं च रात्रिमधीत्य पश्चात्प्रतिमासं शुक्लपक्षे मन्त्रब्राह्मणात्मकं वेदं, कृष्णपक्षे व्याकरणाद्यङ्गजातं फक्किकाभाष्यवृत्त्यादियुक्तं यथाशक्यमधीयीत । वेदाध्ययनात्प्राक् सूत्रभाष्यवृत्त्यादिसकलव्याकरणग्रन्थाध्ययने वेदाभ्यासस्याल्पवयस्कब्रह्मचारिसाध्यत्वेन पश्चात्तदध्ययनन्दुश्शकमिति ज्ञेयम् । उक्तञ्च मनुना—

अत ऊर्ध्वन्तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठेत् ॥

इति ॥ (म० अ० ४।९८)

किञ्च प्राचीनकाले यद्यपि—

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम् ११॥

'य मे विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् यस्तेन द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्'' ॥२॥

कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः ।
अध्याप्या धर्मतः साधु शक्ताप्तज्ञानवित्तदाः ॥

इति ऋग्वेदयाज्ञवल्क्यस्मृतिप्रमाणेभ्यो ब्रह्मचारिणे, कृतज्ञाय, मेधाविने, शुचये, अरोगिणे, असूयारहिताय, ग्रहणधारणशीलाय, बान्धवाय, विद्यान्तरदानशीलाय, धनदात्रे, शुश्रूषवे च, शिष्याय वेदादिशास्त्राणि, उपदिशन्ति स्माचार्या इत्यवगम्यते, तथापि–

धर्माथौं यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं बीजमिवेरिणे ॥१॥
गुरुशुश्रूषया विद्या, पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थन्नोपलभ्यते ॥२॥

इति मनुयाज्ञवल्क्यवचनाभ्यां धर्माचरणगुरुशुश्रूषणयोः सति सम्भवे धनदातृत्वस्य पूर्वोक्तशिष्ये ऽवश्यावश्यकत्वं प्रतीयते ( धनाभावे विद्यान्तरदानद्वारापि शिष्येण गुरोः सकाशात् वेदाद्यधिगन्तुं शक्यते ) अत एव–

"गुरवे तु धनं दत्त्वा स्नायीत तदनुज्ञया।''
इति स्मृतिवाक्यम्

"वित्तस्य विद्यापरिसंख्यया मे
कोटीश्चतस्रो दश चाहरेत्यादि''

कौत्सवरतन्तुसम्वादोऽपि सङ्गच्छेते। ननु वित्तग्रहणेच्छया शास्त्राध्यापने गुरूणां भृतकाध्यापकत्वापत्तिरिति शङ्कनीयम्। एतावता द्रव्येणेदं शास्त्रं पुस्तकं वा अध्यापयिष्यामीति निश्चयपूर्वकाध्यापन एवोक्तप्रसरेण, स्वेच्छया भक्तिपुरस्सरशिष्यदत्तद्रव्यग्रहणे दोषाभावात्। अपि च पूर्वस्मिन्काले वर्णिनो रात्रेः पूर्वोत्तरयामयोर्वेदादिशास्त्राण्यधीयाना यामद्वयञ्च शयाना आसन्नद्यत्वेऽपीयम्प्रथा तथैव वर्तते। उक्तञ्च मनुयाज्ञवल्क्याभ्याम्—

रात्रेः पूर्वोत्तरौ यामौ वेदाभ्यासेन यो नयेत्।
यामद्वयं शयानश्च ब्रह्मभूयाय कल्पते ॥मनुः॥
हयानामिव जात्यानामर्द्धरात्रार्द्धशायिनाम् ।
नहि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥
॥इतिया० शि०॥

यद्यप्येतत्पद्यद्वयेन सामान्यरूपेण सर्वर्तुषु रात्रेः पूर्वोत्तरयामयोरध्ययनं कार्यमिति ज्ञाप्यते-तथापि 'ऋतुम्प्राप्य' हेमन्तर्तुम्प्राप्य रात्र्याश्चतुर्थप्रहरेऽधीयीतेति कातीयप्रातिशाख्यसूत्रतद्भाष्याभ्यां पूर्वोक्तमनुयाज्ञवल्क्यपद्यद्वयस्याप्यत्रैव तात्पर्यमित्यवसेयम्। अयम्भावः—रात्रेः पूर्वयामाऽध्ययनं सर्वथा सर्वेषामभिमतमेव केवलमुत्तरयामाध्ययनं पूर्वोक्तमनुयाज्ञवल्क्यवचनाभ्यां सामान्यरूपेण सर्वर्तुषु प्राप्तम् प्रातिशाख्यसूत्रतद्भाष्याभ्यां नियम्यत इति, यद्यप्यन्यत्र प्रसिद्धषडृत्वात्मकसम्वत्सरपक्षे हेमन्तर्तुपदेन मार्गपौषमासद्वयात्मककालो गृह्यते तथाप्यत्र 'त्र्यृतुः सम्वत्सरो ग्रीष्मो वर्षा हेमन्तः' इतिश्रुत्या मार्गादिमासचतुष्टयात्मककालो हेमन्तपदेन ग्रहीतुं योग्यः। एवञ्च मार्गादिफाल्गुनान्तमासचतुष्टयस्य रात्रेः पूर्वोत्तरयामावधिकृत्य प्राची–

खदिरश्च कदम्बश्च करवीरकरञ्जकौ ॥
एते कण्टकिनः पुण्याः क्षीरिणस्तु यशस्विनः ॥
तेनास्यकरणे सूक्ष्म्यं माधुर्यं चैव जायते ॥ इति ॥

ननु-"नादर्शञ्चैव वीक्षेत नाचरेद्दन्तधावन"मिति ब्रह्मचारिणां काष्ठेन दन्तधावनस्य स्मृतिषु निषेधात् कथं दन्तधावनकाष्ठभक्षणबोधकं तत्सूत्रद्वयं भवेदिति नाऽऽशङ्क्यम्। स्मृत्यन्तरे ब्रह्मचारिणां काष्ठेन दन्तधावनस्य निषेधेऽपि याज्ञवल्क्येन शिक्षास्मृतौ तत्स्वीकारात्। तथा च

"अतिरात्रे षोडशिनं गृह्णाति'
नातिरात्रे षोडशिनं गृह्णाति" इति

श्रुतिद्वयविरोधे विकल्प इवात्रापि ब्रह्मचारिणमधिकृत्य दन्तधावनविधिनिषेधस्मृत्यनुमितश्रुत्योर्विरोधे विकल्प इति ज्ञेयम्।

वस्तुतस्तु खादिरादिवृक्षीयदन्तधावनविधायकयाज्ञवल्क्यवचनस्य मुखदुर्गन्धदन्तरोगादिनिवर्तनरूपदृष्टार्थत्वेन स्वर्गाद्यदृष्टार्थकत्वेन बलवत्तया दन्तधावननिषेधकस्य स्मृत्यन्तरवचनस्य च केवलादृष्टार्थत्वेन दुर्बलतया "विरोधे हि बलीयसा दुर्बलं बाध्यते" इति न्यायेन दन्तधावनविधायकस्मृत्या तन्निषेधकस्मृतेर्बाध इति तत्त्वम्। प्रतिपत्षष्ठीनवमीषु पर्वोपवासश्राद्धदिवसेषु दन्तधावनकाष्ठालाभे च पत्रेण, तदभावे द्वादशगण्डूषैर्मुखशुद्धिं विदध्यादिति ॥ किञ्च प्राचीनकाले ब्रह्मचारिणो गुरोरनुमत्या प्रत्यङ्मुखा उपविश्य गुरुपादावुपसङ्गृह्य प्रणवं व्याहृतित्रयं सावित्रीञ्च प्रयुज्य प्राङ्मुखाद्गुरोर्वेदमध्यगीषत। अन्ते च प्रणवोच्चारणं पादोपसंग्रहणं विधाय गुर्वनुज्ञया व्यरंसिषुर्गुर्वनुज्ञामन्तराऽधीयानशिष्यादन्यस्मान्न वेदादिकमधीयते स्म। ( गुरोरनुमत्या प्रधानशिष्यतोऽप्यध्ययने क्षत्यभाव इति प्रतीयते)। अद्यत्वे त्वेष प्राचीनकालिकोऽध्ययनाध्यापनप्रकारो गुरुशिष्यसम्प्रदायश्च प्रायशो युगप्रभावेणाऽऽङ्ग्लभाषाप्रभावेण वा लुप्तावेव प्रतिभातः ॥ अस्तु. स्वाध्यायक्रम इदानीं विचार्यते। ननु 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वाणञ्चतुर्थमिति' सनत्कुमारम्प्रति नारदोक्त्या 'तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे छन्दांᳬसि जज्ञिरे' इत्यादिश्रुतिषु ऋग्वेदस्यैव प्राथम्येन समाम्नानाच्च प्रथममृग्वेदमधीत्यान्ये वेदा अध्येया इति चेन्न, पूर्वोक्तश्रुत्यादिभिश्चतुर्वेदपारायणादौ भवतु नामर्ग्वेदस्यैव प्राथम्यं गुरोः सकाशादध्ययने तु स्ववेदस्यैव। तत्रापि स्वशाखाया एव प्रथममध्ययनं विधेयम्। 'स्वाध्यायोध्येतव्य' मिति शतपथश्रुत्या 'स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः। कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टित'मिति छन्दोगपरिशिष्टवचनेन च प्रथमं स्वशाखामधीत्याऽन्यशाखा अध्येतव्या वर्णिभिः इत्यधिगमात् ॥

'उपसंहारः'

अयि माननीया विद्वांसः! शास्त्रीयवचांस्यनुसरता मया प्राक्तनशिक्षाविषये यथामति दिङ्मात्रं दर्शितम्। साम्प्रत कया रीत्या सा सुरक्षिता भवेदिति विषये किञ्चिदुच्यते-कलिप्रभावेणेदानीं-'ब्राह्मणेन निष्कारणो धर्मः' इत्यादिश्रुतिविपरीतं द्रव्यो-

पार्जनमेव मुख्यतयोद्दिश्याऽऽयुर्वेदे, व्याकरणे साहित्ये वा छात्राणां प्रवृत्त्या वेदमीमांसान्यायधर्मशास्त्रज्योतिषादिषु च निवृत्त्याऽचिरादेव तेषां शास्त्राणां लोपमाशङ्क्य शिक्षाविभागाध्यक्षमहोदयैः सर्वप्रान्तीयायुर्वेदपाणिनीयव्याकरणसाहित्यशास्त्राणां सर्वासु परीक्षासु निम्ननिर्दिष्टग्रन्था अवश्यमेव क्रमेण सन्निवेश्याः, येनाऽऽनुषङ्गिकरूपेणापि तेषां स्थितिः सम्भाव्येतेति सङ्क्षेपः। ते च ग्रन्था एते :—

रुद्राष्टाध्यायी १ मन्त्रसंहिता २ ऋग्वेदभाष्यभूमिका ३, मनुस्मृतिः ४, निरुक्तम् ५, न्यायप्रकाशः ६, सांख्यतत्वकौमुदी ७, मुक्तावली ८, मुहूर्तचिन्तामणिः ९, वेदान्तसारः। १०। ॥ इति शुभम्॥

---

## ❀ संस्कृतभाषोन्नतये सामयिक्यावश्यकता ❀

( ले० पूर्णानन्दशर्मा बी. ए. प्रो० एच्. आर. सं० कालेज, रामगढ )

मानवाः स्वहृद्गतभावान् येनापि विधिनानुभावयन्ति सा भाषा। यदेयं परिमार्जितरूपेण संस्कृतरूपेण च रसयुक्ता सालङ्कृता सहृदयेषु व्यवहृता, तदास्या भाषायाः 'साहित्य' इति संज्ञा जाता।

संस्कृतसाहित्यमुक्तरूपेण सरसं सालङ्कृति अप्यधुना सर्वेषु सहृदयवर्गेषु न व्यवहृतमिति महदाश्चर्यम्। 'तत्कथमस्येयं दशा जाता' इति विषयो न केवलं विचारणीयोऽपि तु गहनोऽपि। अस्य समाधानं त्वतीवगहनतमं प्रतीयते। उपर्युक्तसमस्यायाः किञ्चित्पर्यालोचनमेव प्रस्तुतविषयस्यास्ति ध्येयम्।

'यथा यथा काचिद्भाषा जनसाधारणस्य व्यवहारेऽनुपयुक्ता भवति तथा तथा सा सभ्यसमाजादपसरति' इति भाषाविज्ञानस्यानपहार्यो नियमः। यस्माद्धेतोः संस्कृतभाषा उक्तसमाजाद्दूरीभूता स सम्प्रति गवेषणीयः।

'कालचक्रस्याचलः प्रभावः, पराधीनताया दृढबन्धनम्, पाश्चात्यसभ्यतायाः सार्वभौमता, संस्कृतभाषाया राष्ट्रियत्वहीनता' इत्येते हेतवो जनसाधारणेषु प्रत्यक्षाः। अपराण्यपि च गौणकारणानि संस्कृतभाषाया अधःपातने अल्पघातकानि न सन्ति।

अतस्तेषां मीमांसा सम्प्रति विदुषां परमावश्यकी। यतस्तानि कारणानि दूरीकर्तुमुक्तासु विकटपरिस्थितिष्वपि सुधारकविद्वन्मण्डली पूर्णतया समर्थास्ति।

परिमार्जितभाषाया द्वे उद्देश्ये स्तः। आद्यः सर्वस.धारणोपयोगी व्यवहारः, द्वितीयो नूतन-मौलिकग्रन्थानामाविष्कारः। व्यवहारे तु विविधसमाचारपत्राणां प्रकाशनम्, साधारणकार्येषु परस्परपत्रव्यवहारः, शिक्षितवर्गेषु कथनोपकथनमित्येतेषां प्रमुखविषयाणां समावेशः। आविष्कारपक्षे प्राचीनार्वाचीन-काल्पनिक-वस्तूनामाश्रयेण काव्येतिहासोपन्यास-जीवनचरित्रादीन् वि-

विध-पद्य-गद्यमयान् मौलिकग्रन्थान् विरच्य प्रस्तुतसाहित्यस्य वर्द्धनमिति।

उक्ते द्वे एव लक्ष्ये दृष्टिगते कृत्वा संस्कृतसाहित्यस्योद्देश्यहीनतां स्पष्टं प्रतीमः। समाचारपत्रप्रकाशने हिन्दी-अंग्रेजी-उर्दू-प्रभृति-भाषाभिः सह संस्कृतभाषायास्तुलना निराशामुद्भावयति। संस्कृतभाषायाः पुत्री हिन्दीभाषा सम्प्रति गोवरगणेश-वानर-मतवाला-प्रभृतीनि समाचारपत्राणि प्रकाश्य अत्यन्त-हास्यरस-युक्ताभिः सरलातिसरल-विविध-कल्पनाभिः तानि परिपूर्य बालकानां हृदयेष्वात्मानं प्रति वेगवतीमुत्कण्ठामहर्निशं जनयति। हिन्दुस्तान-विश्वमित्र-आज-प्रभृतीनि राजनैतिकसमाचारपत्राणि प्रकाश्य नवयुवकानां मानसेषु राष्ट्रियतामुद्भावयति। माधुरी-चाँद-ब्राह्मण-आर्यमित्रादीनि साहित्यिक-सामाजिक-धार्मिक-मासिक-पत्राणि विरच्य शिक्षितवर्गाणां मस्तिष्केषु स्वस्या आधिपत्यं स्थापयति। आँग्लभाषाया न्यूजपेपराणां सार्वभौमप्रभावस्तु स्पष्टः। यवनभाषापि निजाखवारप्रकाशने हिन्दीभाषां स्पर्धते। किन्त्वस्मिन्विषये संस्कृतभाषा कौम्भकर्णीं निद्रामालिङ्गति। यदि कस्मिंश्चित्स्थले किञ्चित्संस्कृतसमाचारपत्रमुपलभ्यते तर्हि तदपि सांख्य-योग-मीमांसादि-दर्शनशास्त्राणां सिद्धान्तवाक्यैः संश्लिष्टम्, रूढिपरम्पराद्यवलम्बिभिर्धार्मिकदृष्टान्तैरापूरितम्, गहनातिगहनशब्दाडम्बरयुक्तं च व्यवहाररहितं वर्तमान-वायुमण्डलं शून्यमेव लभ्यते।

साधारणकार्येषु परस्पर-पत्र-व्यवहार-पक्षे संस्कृतभाषाया गणनापि नास्ति। कस्याश्चिदपि भाषायाः पत्रलेखनं सर्वप्रथमः प्रयोगो भवति। किन्तु संस्कृतपाठशालासु पत्रलेखनकलायै किञ्चिदपि स्थानं नास्ति। अन्यासु समुन्नतभाषासु पत्रलेखनप्रयोगः प्रारम्भिक-कक्षास्वपि अनिवार्यो गण्यते। यद्युत्तीर्णप्रथमा-परीक्षेण छात्रेण सह अन्यभाषाया मिडिलपरीक्षोत्तीर्णछात्रस्य तुलना भवेत् तर्हि द्वयोः सुमहदन्तरं स्पष्टं प्रतीयते। कथमिदम्? किमिदं संस्कृतभाषायाः क्लिष्टत्वम्? कदापि न। इदं संस्कृतशिक्षणपद्धत्याः परीक्षायाश्च दूषणम्।

शिक्षितवर्गेषु कथनोपकथनमपि प्रायः शून्यमस्ति। यदाकदाचिद्यदि कश्चिदुत्साही पुरुषो यतते तदानभ्यस्तवर्गस्तं साभिमानमाडम्बरपूर्णञ्च मन्यते। प्रत्युतैव विपयस्यास्यावहेलना संस्कृत-पाठशालास्वपि। समुचितमिदम्। यतो हि "महाजनो येन गतः स पन्थाः"। न किमेतद् गुरूणां दूषणम्? इष्टविषये समालपितुं किन्न बाध्यश्छात्रवर्गः?

संस्कृतसाहित्यस्य वृद्धिपक्षेऽपि विद्वन्मण्डली पूर्णतया उदासीनास्ति। पाठशालास्वपि रचनाविधिर्नगण्य एव। अनुवादोऽपि सम्प्रति न केवलमप्रधानः परन्तूपेक्षितोऽपि। अत्र तावन्न पाठकानां दोषः। इदं तु तावत्परीक्षामण्डलस्य महद्दूषणम्। परीक्षाप्रश्ना अपि एवंविधा भवन्ति ये च घोषितवाक्यानां पदांशानां वा पर्यायमात्रेणैवोपर-

पार्जनमेव मुख्यतयोद्दिश्याऽऽयुर्वेदे, व्याकरणे साहित्ये वा छात्राणां प्रवृत्त्या वेदमीमांसान्यायधर्मशास्त्रज्यौतिषादिषु च निवृत्त्याऽचिरादेव तेषां शास्त्राणां लोपमाशङ्क्य शिक्षाविभागाध्यक्षमहोदयैः सर्वप्रान्तीयायुर्वेदपाणिनीयव्याकरणसाहित्यशास्त्राणां सर्वासु परीक्षासु निम्ननिर्दिष्टग्रन्था अवश्यमेव क्रमेण सन्निवेश्याः, येनाऽऽनुषङ्गिकरूपेणापि तेषां स्थितिः सम्भाव्येतेति सङ्क्षेपः । ते च ग्रन्था एते :—

रुद्राष्टाध्यायी १ मन्त्रसंहिता २ ऋग्वेदभाष्यभूमिका ३, मनुस्मृतिः ४, निरुक्तम् ५, न्यायप्रकाशः ६, सांख्यतत्वकौमुदी ७, मुक्तावली ८, मुहूर्तचिन्तामणिः ९, वेदान्तसारः । १० । ॥ इति शुभम् ॥

---

# ❀ संस्कृतभाषोन्नतये सामयिक्यावश्यकता ❀

( ले० पूर्णानन्दशर्मा बी. ए. प्रो० एच्. आर. सं० कालेज, रामगढ )

मानवाः स्वहृद्गतभावान् येनापि विधिनानुभावयन्ति सा भाषा । यदेयं परिमार्जितरूपेण संस्कृतरूपेण च रसयुक्ता सालङ्कृता सहृदयेषु व्यवहृता, तदास्या भाषायाः 'साहित्य' इति संज्ञा जाता ।

संस्कृतसाहित्यमुक्तरूपेण सरसं सालङ्कृति अप्यधुना सर्वेषु सहृदयवर्गेषु न व्यवहृतमिति महदाश्चर्यम् । 'तत्कथमस्येयं दशा जाता' इति विषयो न केवलं विचारणीयोऽपि तु गहनोऽपि । अस्य समाधानं त्वतीवगहनतमं प्रतीयते । उपर्युक्तसमस्यायाः किञ्चित्पर्यालोचनमेव प्रस्तुतविषयस्यास्ति ध्येयम् ।

'यथा यथा काचिद्भाषा जनसाधारणस्य व्यवहारेऽनुपयुक्ता भवति तथा तथा सा सभ्यसमाजादपसरति' इति भाषाविज्ञानस्यानपहार्यो नियमः । यस्माद्धेतोः संस्कृतभाषा उक्तसमाजाद्दूरीभूता स सम्प्रति गवेषणीयः ।

'कालचक्रस्याचलः प्रभावः, पराधीनताया दृढबन्धनम् , पाश्चात्यसभ्यतायाः सार्वभौमता, संस्कृतभाषाया राष्ट्रियत्वहीनता' इत्येते हेतवो जनसाधारणेषु प्रत्यक्षाः । अपराण्यपि च गौणकारणानि संस्कृतभाषाया अधःपातने अल्पघातकानि न सन्ति ।

अतस्तेषां मीमांसा सम्प्रति विदुषां परमावश्यकी । यतस्तानि कारणानि दूरीकर्तुमुक्तासु विकटपरिस्थितिष्वपि सुधारकविद्वन्मण्डली पूर्णतया समर्थास्ति ।

परिमार्जितभाषाया द्वे उद्देश्ये स्तः । आद्यः सर्वसाधारणोपयोगी व्यवहारः, द्वितीयो नूतन-मौलिकग्रन्थानामाविष्कारः । व्यवहारे तु विविधसमाचारपत्राणां प्रकाशनम्, साधारणकार्येषु परस्परपत्रव्यवहारः, शिक्षितवर्गेषु कथनोपकथनमित्येतेषां प्रमुखविषयाणां समावेशः । आविष्कारपक्षे प्राचीनार्वाचीन-काल्पनिक-वस्तूनामाश्रयेण काव्येतिहासोपन्यास—जीवनचरित्रादीन वि-

विध-पद्य-गद्यमयान् मौलिकग्रन्थान् विरच्य प्रस्तुतसाहित्यस्य वर्द्धनमिति।

उक्ते द्वे एव लक्ष्ये दृष्टिगते कृत्वा संस्कृतसाहित्यस्योद्देश्यहीनतां स्पष्टं प्रतीमः। समाचारपत्रप्रकाशने हिन्दी-अंग्रेजी-उर्दू-प्रभृति-भाषाभिः सह संस्कृतभाषायास्तुलना निराशामुद्भावयति। संस्कृतभाषायाः पुत्री हिन्दीभाषा सम्प्रति गोबरगणेश-वानर-मतवाला-प्रभृतीनि समाचारपत्राणि प्रकाश्य अत्यन्त-हास्यरस-युक्ताभिः सरलातिसरल-विविध-कल्पनाभिः तानि परिपूर्य बालकानां हृदयेष्वात्मानं प्रति वेगवतीमुत्कण्ठामहर्निशं जनयति। हिन्दुस्तान-विश्वमित्र-आज-प्रभृतीनि राजनैतिकसमाचारपत्राणि प्रकाश्य नवयुवकानां मानसेषु राष्ट्रियतामुद्भावयति। माधुरी-चाँद-ब्राह्मण-आर्यमित्रादीनि साहित्यिक-सामाजिक-धार्मिक-मासिक-पत्राणि विरच्य शिक्षितवर्गाणां मस्तिष्केषु स्वस्या आधिपत्यं स्थापयति। आँग्लभाषाया न्यूजपेपराणां सार्वभौमप्रभावस्तु स्पष्टः। यवनभाषापि निजाखबारप्रकाशने हिन्दीभाषां स्पर्धते। किन्त्वस्मिन्विषये संस्कृतभाषा कौम्भकर्णीं निद्रामालिङ्गति। यदि कस्मिंश्चित्स्थले किञ्चित्संस्कृतसमाचारपत्रमुपलभ्यते तर्हि तदपि सांख्य-योग-मीमांसादि-दर्शनशास्त्राणां सिद्धान्तवाक्यैः संश्लिष्टम्, रूढिपरम्पराद्यवलम्बिभिर्धार्मिकदृष्टान्तैरापूरितम्, गहनातिगहनशब्दाडम्बरयुक्तं च व्यवहाररहितं वर्तमान-वायुमण्डले शून्यमेव लभ्यते।

साधारणकार्येषु परस्पर-पत्र-व्यवहार-पक्षे संस्कृतभाषाया गणनापि नास्ति। कस्याश्चिदपि भाषायाः पत्रलेखनं सर्वप्रथमः प्रयोगो भवति। किन्तु संस्कृतपाठशालासु पत्रलेखनकलायै किञ्चिदपि स्थानं नास्ति। अन्यासु समुन्नतभाषासु पत्रलेखनप्रयोगः प्रारम्भिक-कक्षास्वपि अनिवार्यो गण्यते। यद्युत्तीर्णप्रथमा-परीक्षेण छात्रेण सह अन्यभाषाया मिडिलपरीक्षोत्तीर्णछात्रस्य तुलना भवेत् तर्हि द्वयोः सुमहदन्तरं स्पष्टं प्रतीयते। कथमिदम्? किमिदं संस्कृतभाषायाः क्लिष्टत्वम्? कदापि न। इदं संस्कृतशिक्षणपद्धत्याः परीक्षायाश्च दूषणम्।

शिक्षितवर्गेषु कथनोपकथनमपि प्रायः शून्यमस्ति। यदाकदाचिद्यदि कश्चिदुत्साही पुरुषो यतते तदानभ्यस्तवर्गस्तं साभिमानमाडम्बरपूर्णञ्च मन्यते। प्रत्युतैव विषयस्यास्यावहेलना संस्कृत-पाठशालास्वपि। समुचितमिदम्। यतो हि "महाजनो येन गतः स पन्थाः"। न किमेतद् गुरूणां दूषणम्? इष्टविषये समालपितुं किन्न वाध्यश्छात्रवर्गः?

संस्कृतसाहित्यस्य वृद्धिपक्षेऽपि विद्वन्मण्डली पूर्णतया उदासीनास्ति। पाठशालास्वपि रचनाविधिर्नगण्य एव। अनुवादोऽपि सम्प्रति न केवलमप्रधानः परन्तूपेक्षितोऽपि। अत्र तावन्न पाठकानां दोषः। इदं तु तावत्परीक्षामण्डलस्य महद्दूषणम्। परीक्षाप्रश्ना अपि एवंविधा भवन्ति ये च घोटितवाक्यानां पदांशानां वा पर्यायमात्रेणैवोपर-

मन्ति । किञ्च भावार्थ-विवेचनालोचन-पर्यालोचन-समालोचनैः शून्यप्राया एव । अनुवादोऽपि यत्राप्रधानस्तत्र मौलिकरचनाकाङ्क्षा दुराशामात्रमेव । भावार्थादि-विषयैर्विना हिन्द्यादिसमुन्नतभाषाणां परीक्षामण्डलेषु सफलताऽसम्भवा ।

परीक्षाग्रन्थाश्च प्रायोऽतीताज्ञात-कालरचना-युक्ताः । अत्रेदं भासते यद्भारतमात्रा कालिदास-बाण-माघ-दण्डि-भवभूत्यादिमहाकविभ्यः पश्चात्प्रतिभासम्पन्नाः सुपुत्रा जनिता एव नेति ! किन्तु नेदं युक्तिसंगतम् । सुपुत्रास्त्ववश्यमेव जनिताः । किन्तु साधनहीनेन भारतवर्षेण तेषां प्रतिभा नोद्रेकिता । कानि तानि साधनानि ? सुव्यवस्थितशिक्षाप्रणाली लगनोत्साहप्रभृतयश्च । किं रवीन्द्रनाथटैगोर-मैथिलीशरणगुप्त-अयोध्यासिंहोपाध्यायजयशंकरप्रसादादिमहाकवयो भारतमातुः प्रतिभासम्पन्नाः सुपुत्रा न ? किन्त्वेते महापुरुषाः संस्कृतसाहित्यस्य साधनहीनतां दृष्ट्वान्यदिशं प्रयान्ति । संस्कृतसाहित्येऽपि रवीन्द्रनाथादिसदृशाः पुरुषा विद्यन्ते । किन्तु हीनसाधनानां तेषां प्रतिभापि दलिता ।

संस्कृतभाषा संसारस्य सम्पूर्णभाषाणां जननीत्यस्याः सर्वतोमुखी प्रशंसा जगद्विख्याता । अस्या वस्त्वलंकार रस-पिङ्गलानामाश्रयेणान्यभाषापुङ्गवा विविधमौलिकरचनया तासां वृद्धिं कर्तुमहर्निशं यतन्ते । परन्तु संस्कृतभाषा साधनाभावेन सम्प्रति "अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम्" इत्युक्तां वार्द्धक्यदशामिवानुभवति । किन्तु संस्कृतोपासकाः सुषुप्त्यवस्थामनुभवन्ति । अतएव संस्कृतभाषा सम्प्रति 'Dead language मृतभाषा' इति सम्बोधिता । किन्त्वस्य वर्तमानोपासका एव मृतप्राया इति कथने नानौचित्यम् ।

अत्र मम धृष्टता क्षन्तव्या । यतः संस्कृताध्ययनात्यन्तोत्सुकेन अस्या वर्तमानाधःपतनादाकुलेन च मयैषा कृता । अतः संस्कृतविद्वद्वर्गं प्रति ममेदं नम्रनिवेदनं यत्संस्कृतसाहित्यस्य प्राक्तनं गौरवं स्थापयितव्यम् । उपर्युक्तशिक्षाप्रणाल्या विना नैतत्सम्भवम् । अतः परीक्षामण्डले क्रान्तिरत्यावश्यकी । परीक्षाप्रश्ना अपि कल्पनाप्रधानाः, शिक्षणपद्धतिश्च रचनाप्रधाना कर्तव्या । प्रातःस्मरणीयैर्वेदव्यास-वाल्मीकि-कालिदासादिभिः प्रतिभासम्पन्नैर्महापुरुषैरुपार्जितातुलसम्पत्तिर्न केवलं रक्षितव्यैवापि तु उपयोक्तव्यापि । एषां महाकवीनां वस्तुरसालंकाराश्रयेण नूतनकल्पनायुक्ता मौलिकग्रन्था रचयितव्याः । हास्यरसप्रधानया सरलातिसरलरचनया बालकानाम् , धार्मिक-सामाजिक-समालोचनायुक्तैर्ग्रन्थैः सुधारकाणाम् , सरसकल्पनायुक्तैरुपन्यासकाव्यनाटकादिभिर्विदुषाम् , आधुनिकवायुमण्डलस्यालोचनायुक्तैर्विविधसमाचारपत्रै राजनैतिकानां हृदयेषु संस्कृतभाषां प्रति वेगवत्युत्कण्ठा उद्भावयितव्या ।

प्रस्तावरूपेण साधनमिदं तावत्सुसाध्यं कार्येण तु क्लिष्टातिक्लिष्टतरं प्रतीयते ।

महत्यत्र तावच्छिक्षामण्डलस्याऽसावधानता, विद्वत्समाजस्य स्वार्थपरायणता, द्विजवर्गस्य मोहनिद्रा च । यावदेषा नोन्मूलिता भविष्यति, आरण्यरोदनमेव तावत्संस्कृतसाहित्यस्य वर्धनम् । मृगतृष्णा च तावद्विप्रसमाजस्योन्नतिरपि ।

---

# ❀ आर्तनादः ❀

( ले० पूर्णानन्दशर्मा बी. ए. प्रो० एच्. आर. सं० कालेज, रामगढ )

हे देववाणि ! सुभगे ! सुखदे ! च मातस्त्वं सौख्यशौर्यबलदा शुभमानदात्री ।
तत्किं जगद्भयविशेषविकम्पितञ्च मोहेन बुद्धिरहितं दयनीयदृश्यम् ॥ १ ॥

विज्ञानभूतदलिता परिभावितेयं दुःखेन भग्नहृदया विकला हि सृष्टिः ।
साम्राज्यलोलुपनृपा अपकाररक्ताः शान्तिप्रदे ! तव कलाप्यधुना प्रसुप्ता ॥ २ ॥

निद्रागता भरतसन्ततिरुत्थिता च तन्द्रा त्वया किमधुनापि न मोचनीया ।
विज्ञानरोगविकलोऽपि च भारतोऽयमध्यात्मशक्तिनिधिनैव सदा हि रक्ष्यः ॥ ३ ॥

त्वय्याश्रिता द्विजगणाः शयनप्रियाश्च मिष्टान्नभोजनमदग्रसिताश्च सर्वे ।
पाश्चात्त्यवायुविचलोऽपि सुषुप्तिशीलश्चाद्यापि निद्रणपरो द्विजवर्ग एषः ॥ ४ ॥

त्वन्नोत्थिता यदि च विप्रजनेन साकं गर्ते द्वयोरपि निपातनमेव सिद्धम् ।
उत्तिष्ठ तिष्ठ द्विजवर्गहृदासनेषु किं त्वं शृणोषि वरदे ! न ममार्तनादम् ॥ ६ ॥

मातस्त्वयैव हि पुरा सुविनिद्रितोऽयमुत्साहितो विलसितोऽपि विभूषितश्च ।
किं किं न साधयसि मानसमोदिनी त्वमुत्थानमार्गमधुना नय शारदेऽम्ब ! ॥ ५ ॥

---

# ❀ कीदृशी शिक्षापद्धतिरिदानीमपेक्ष्यते ❀

( ले० विद्यावाचस्पतिः वेदान्तसाहित्याचार्यः श्रीघूटरझाशास्त्री व्याकरण-तर्क काव्यतीर्थः लक्ष्मणपुरविश्वविद्यालयप्राच्यविभागीयदर्शनाध्यापकः )

इह खलु सत्त्वादिगुणत्रयमये प्रतितत्त्वप्रतिभासितसुखदुःखमोहसमुदये चकासितवैचित्र्यचणप्राणिचये चमत्कृतानल्पलीलामञ्चे प्रपञ्चे पिपीलिकादिलघुजन्मिन आरभ्य महर्ष्यादिमहाजन्मितो यावद् यावन्तोऽपि जन्तवः सन्ततं सुखमेव कांक्षन्तो लक्ष्यन्ते । न खलु न जनाः प्रतिपदमक्षिलक्षीकुर्वन्ति पिपीलिकापटलीं प्राक् प्रावृषः प्रवृत्तेः प्रावृषि सम्मुखं निजजीवनं निर्वोढुं नैकविधखाद्यपदार्थनिकरमभिनिजविवरं सामिनिवेशं हर-

मन्ति। किञ्च भावार्थ-विवेचनालोचन-पर्यालोचन-समालोचनैः शून्यप्राया एव। अनुवादोऽपि यत्राप्रधानस्तत्र मौलिकरचनाकाङ्क्षा दुराशामात्रमेव। भावार्थादि-विषयैर्विना हिन्द्यादिसमुन्नतभाषाणां परीक्षामण्डलेषु सफलताऽसम्भवा।

परीक्षाग्रन्थाश्च प्रायोऽतीताज्ञात-कालरचना-युक्ताः। अत्रेदं भासते यद्भारतमात्रा कालिदास-बाण-माघ-दण्डि-भवभूत्यादिमहाकविभ्यः पश्चात्प्रतिभासम्पन्नाः सुपुत्रा जनिता एव नेति ! किन्तु नेदं युक्तिसंगतम्। सुपुत्रास्त्ववश्यमेव जनिताः। किन्तु साधनहीनेन भारतवर्षेण तेषां प्रतिभा नोद्रेकिता। कानि तानि साधनानि ? सुव्यवस्थितशिक्षाप्रणाली लगनोत्साहप्रभृतयश्च। किं रवीन्द्रनाथटैगौर-मैथिलीशरणगुप्त-अयोध्यासिंहोपाध्यायजयशंकरप्रसादादिमहाकवयो भारतमातुः प्रतिभासम्पन्नाः सुपुत्रा न ! किन्त्वेते महापुरुषाः संस्कृतसाहित्यस्य साधनहीनतां दृष्ट्वान्यदिशं प्रयान्ति। संस्कृतसाहित्येऽपि रवीन्द्रनाथादिसदृशाः पुरुषा विद्यन्ते। किन्तु हीनसाधनानां तेषां प्रतिभापि दलिता।

संस्कृतभाषा संसारस्य सम्पूर्णभाषाणां जननीत्यस्याः सर्वतोमुखी प्रशंसा जगद्विख्याता। अस्या वस्त्वलंकार रस-पिङ्गलानामाश्रयेणान्यभाषापुङ्गवा विविधमौलिकरचनया तासां वृद्धिं कर्तुमहर्निशं यतन्ते। परन्तु संस्कृतभाषा साधनाभावेन सम्प्रति "अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम्" इत्युक्तां वार्द्धक्यदशामिवानुभवति। किन्तु संस्कृतोपासकाः सुषुप्त्यवस्थामनुभवन्ति। अतएव संस्कृतभाषा सम्प्रति 'Dead language मृतभाषा' इति सम्बोधिता। किन्त्वस्य वर्तमानोपासका एव मृतप्राया इति कथने नानौचित्यम्।

अत्र मम धृष्टता क्षन्तव्या। यतः संस्कृताध्ययनात्यन्तोत्सुकेन अस्या वर्तमानाधःपतनादाकुलेन च मयैषा कृता। अतः संस्कृतविद्वद्वर्गं प्रति ममेदं नम्रनिवेदनं यत्संस्कृतसाहित्यस्य प्राक्तनं गौरवं स्थापयितव्यम्। उपर्युक्तशिक्षाप्रणाल्या विना नैतत्सम्भवम्। अतः परीक्षामण्डले क्रान्तिरत्यावश्यकी। परीक्षाप्रश्ना अपि कल्पनाप्रधानाः, शिक्षणपद्धतिश्च रचनाप्रधाना कर्तव्या। प्रातःस्मरणीयैर्वेदव्यास-वाल्मीकि-कालिदासादिभिः प्रतिभासम्पन्नैर्महापुरुषैरुपार्जितातुलसम्पत्तिर्न केवलं रक्षितव्यैवापि तु उपयोक्तव्यापि। एषां महाकवीनां वस्तुरसालंकाराश्रयेण नूतनकल्पनायुक्ता मौलिकग्रन्था रचयितव्याः। हास्यरसप्रधानया सरलातिसरलरचनया बालकानाम्, धार्मिक-सामाजिक-समालोचनायुक्तैर्ग्रन्थैः सुधारकाणाम्, सरसकल्पनायुक्तैरुपन्यासकाव्यनाटकादिभिर्विदुषाम्, आधुनिकवायुमण्डलस्यालोचनायुक्तैर्विविधसमाचारपत्रै राजनैतिकानां हृदयेषु संस्कृतभाषां प्रति वेगवत्युत्कण्ठा उद्भावयितव्या।

प्रस्तावरूपेण साधनमिदं तावत्सुसाध्यं कार्येण तु क्लिष्टातिक्लिष्टतरं प्रतीयते।

महत्यत्र तावच्छिक्षामण्डलस्याऽसावधानता, विद्वत्समाजस्य स्वार्थपरायणता, द्विजवर्गस्य मोहनिद्रा च। यावदेषा नोन्मूलिता भविष्यति, आरण्यरोदनमेव तावत्संस्कृतसाहित्यस्य वर्धनम्। मृगतृष्णा च तावद्विप्रसमाजस्योन्नतिरपि।

---

## ❀ आर्तनादः ❀

( ले० पूर्णानन्दशर्मा बी. ए. प्रो० एच्. आर. सं० कालेज, रामगढ )

हे देववाणि! सुभगे! सुखदे! च मातस्त्वं सौख्यशौर्यबलदा शुभमानदात्री।
तत्किं जगद्भयविशेषविकम्पितञ्च मोहेन बुद्धिरहितं दयनीयदृश्यम्॥ १॥

विज्ञानभूतदलिता परिभावितेयं दुःखेन भग्नहृदया विकला हि सृष्टिः।
साम्राज्यलोलुपनृपा अपकाररक्ताः शान्तिप्रदे! तव कलाप्यधुना प्रसुप्ता॥ २॥

निद्रागता भरतसन्ततिरुत्थिता च तन्द्रा त्वया किमधुनापि न मोचनीया।
विज्ञानरोगविकलोऽपि च भारतोऽयमध्यात्मशक्तिनिधिनैव सदा हि रक्ष्यः॥ ३॥

त्वय्याश्रिता द्विजगणाः शयनप्रियाश्च मिष्टान्नभोजनमदप्रसिताश्च सर्वे।
पाश्चात्त्यवायुविचलोऽपि सुषुप्तिशीलश्चाद्यापि निद्रणपरो द्विजवर्ग एषः॥ ४॥

त्वन्नोत्थिता यदि च विप्रजनेन साकं गर्ते द्वयोरपि निपातनमेव सिद्धम्।
उत्तिष्ठ तिष्ठ द्विजवर्गहृदासनेषु किं त्वं शृणोषि वरदे! न ममार्तनादम्॥ ६॥

मातस्त्वयैव हि पुरा सुविनिद्रितोऽयमुत्साहितो विलसितोऽपि विभूषितश्च।
किं किं न साधयसि मानसमोदिनी त्वमुत्थानमार्गमधुना नय शारदेऽम्ब!॥ ५॥

---

## ❀ कीदृशी शिक्षापद्धतिरिदानीमपेक्ष्यते ❀

( ले० विद्यावाचस्पतिः वेदान्तसाहित्याचार्यः श्रीघूटरझाशास्त्री व्याकरण-तर्क काव्यतीर्थः
लखनऊपुरविश्वविद्यालयप्राच्यविभागीयदर्शनाध्यापकः )

इह खलु सत्त्वादिगुणत्रयमये प्रतितत्वप्रतिभासितसुखदुःखमोहसमुदये चकासितवैचित्र्यचणप्राणिचये चमत्कृतानल्पलीलामञ्चे प्रपञ्चे पिपीलिकादिलघुजन्मिन आरभ्य महर्ष्यादिमहाजन्मिनो यावद् यावन्तोऽपि जन्तवः सन्ततं सुखमेव काङ्क्षन्तो लक्ष्यन्ते। न खलु न जनाः प्रतिपदमक्षिलक्षीकुर्वन्ति पिपीलिकापटलीं प्राक् प्रावृषः प्रवृत्तेः प्रावृषि ससुखं निजजीवनं निर्वोढुं नैकविधखाद्यपदार्थनिकरमभिनिजविवरं साभिनिवेशं हर-

न्तीं शकुन्तसन्ततिं वा निजनीडं निबिडयितुं तृणादिव्यूहं साग्रहं संगृह्णतीम्! नो वा न निशामयन्त्यहर्निशं महर्षिनिवहं महीयस्यै निर्वृतये महीयसायासेन रजस्तमसी अभिभूय भूयः सत्त्वमुद्रेचयितुं दुश्चरं तपःप्रकरं समाचरन्तम्। तदेवमकामेनाप्येतदूरीकर्तव्यमापतति यत् 'सर्वारम्भास्तण्डुलप्रस्थमूला' इति न्यायेन सुखोद्देश्यिकैव जायते जनिमतां यावती प्रवृत्तिरिति।

सुखं च सामान्यासामान्यभेदतो दधाति द्वैविध्यम्। तत्र सामान्यमशनशयनादिजन्यं सुखं सुखमेव बिभर्त्ति पश्वादिसाधारण्यम्। असामान्यं यन्नाम धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयप्रभवं तन्न शक्यं शक्रेणापि जातु समधिगन्तुमृते विशिष्टज्ञानात्। विशिष्टज्ञानं च नान्तरेण शिक्षां सम्वत्सरसहस्रेणापि पार्य्यते प्राप्तुमिति हन्त पर्य्यन्ते शिक्षैव समीक्ष्यते जगतः श्रेयोनिदानमिति शिक्षागोचरो विचारः कलयतितरां परां प्रयोजनीयतामिति निष्प्रत्यूहं निष्पद्यते।

विचारोऽयं नाश्रयति वेदाङ्गानामन्यतमत्वं श्रयन्तीं 'वर्णानां स्थानप्रकरणप्रयत्नादिभिर्निष्पत्तिनिर्णायिनी शिक्षा। आपिशलीयादिका' इतिराजशेखरादिभिर्लक्षितां शिक्षामपि तु लोकेऽध्ययनाध्यापनादिषु प्रयुक्तामुपदेशाद्यपरपर्यायां ज्ञानादिसाधनीभूतामेव शिक्षाम्, तत्रापि भारतीयां सुरभारतीशिक्षामेवेति प्रेक्षावन्तो विदाङ्कुर्वन्तु।

अथेदानीमेनेन प्रसङ्गेनानुषङ्गत एवामी प्रश्ना निष्णातानां मनःसु भूम्ना समुदेतुमर्हन्ति यत् का नाम शिक्षा? कतिप्रकारा च सा? कथङ्कारञ्च युज्यते साऽर्थेन? किंविधा पद्धतिस्तदीया भारतीयानामद्यावधि पदमादधती समुपलभ्यते? के वा हेतवस्तत्पद्धतेरुत्तरोत्तरपरिपतनस्य? साम्प्रतं प्रचलन्ती तदीया पद्धतिः प्रभवति समीहितार्थं साधयितुं न वा? नो चेत् कीदृशी शिक्षापद्धतिरिदानीमपेक्ष्यत इति।

प्रश्नानेनान् प्रयते यथाप्रेक्षं समीक्षितुं संक्षेपेण—

## का नाम शिक्षा?

भौवादिकादभ्यासकर्मणः शिक्षतेः भावे गुरोश्च हल इत्यप्रत्ययेन, सौवादिकाच्छक्तिकर्मणः शक्नोतेः, दैवादिकान्मर्षणकर्मणः शक्यतेश्च सन्नन्तादप्रत्ययादित्यप्रत्ययेन च निष्पन्नः शिक्षाशब्दोऽभ्यासविशेषं शक्तीच्छाविशेषं मर्षणेच्छाविशेषं च स्वार्थं समर्पयति। तथा चानधिगतस्यानभ्यस्तस्येति यावत् (शब्दक्रियादेः) अभ्यासः, अनधिगतस्यार्थस्य (ज्ञानादेः) अधिगमनेनानवाप्तया विवेकादिशक्तेरवाप्त्याऽऽत्मनि सामर्थ्यविशेषसम्पादनेच्छा, (सत्यां च तादृशसामर्थ्यसम्पत्त्यां) शीतोष्णद्वन्द्वादिरूपप्रियाप्रियपदार्थसहिष्णुताशक्तिसम्पादनेच्छा चेति त्रयोऽप्यर्थाः शिक्षाशब्देन निजवाच्यकुक्षौ निक्षिप्यन्ते।

शिक्षाशब्दे करणव्युत्पत्तावभ्युपगतायान्तु याऽनभ्यस्तं शब्दक्रियादिमभ्यस्तं विदधाति, या ज्ञानविज्ञानादिना पुरुषे कामपि चमत्कृतां शक्तिं सन्निधापयति या च पुरुषे तितिक्षापरपर्यायां प्रियाप्रियोभयपदा-

र्थसहिष्णुताशक्तिं प्रादुष्करोति सा क्रिया शिक्षेति सामान्यतः पार्यते परिभाषितुं शिक्षा।

कतिविधा च सा ?

सा च शिक्षाऽदभ्रानवान्तरभेदाना-दधानापि प्राधान्येन त्रैविध्यमेवादधाति। तथाहि—पारमार्थिकी( आध्यात्मिकी )शिक्षा, धार्मिकी शिक्षा, व्यावहारिकी शिक्षा चेति च-कासति तदीयास्तिस्रो विधाः। तत्र वेदोप-निषदादिप्रतिपाद्यमानात्मयथार्थज्ञानजननेन निश्श्रेयसाख्यं परमपुरुषार्थं निष्पादयन्ती शिक्षा पारमार्थिकीत्यभिधीयते। विहितक-र्मानुष्ठानेनैहिकामुष्मिकोभयश्रेयः साधयन्ती शिक्षा धार्मिकीति व्यपदिश्यते! प्राधान्येनै-हिकमेव भविकं भावयन्ती शिक्षा व्यावहा-रिकीति च व्यवह्रियते। एतदवशिष्टा वि-शिष्टा अविशिष्टाश्च यावत्योऽपि शिक्षा व्यावहारिक्याः क्रोड एव क्रीडन्ति। तदित्थं सुतरां पर्य्यवस्यति शिक्षा प्राधान्येन त्रिवि-धेति।

अथ कथङ्कारं युज्यते सा ऽर्थेन ?

नैष प्रश्नो बृहदुत्तरमाकांक्षति। यतो हि प्रागभिहितासु त्रिविधासु कतमापि शिक्षा स्यान्नाम, सा चेद् देशकालानुकूलं प्रागुक्तं शक्तित्रयं जनयितुमीष्टे, बाढं शक्यते सार्थेति व्यपदेष्टुम्। इतरथा तु साऽपार्थैवेति परि-गण्यते पामरैरपि।

किंविधा पद्धतिस्तदीया भारतीयानामित्यादि?

जगत्यदृष्टचरव्यभिचारः पर्य्यवेक्ष्यत एष नियमप्रकारो यत् कार्यमात्रस्य साफल्यं वैपु-ल्येन देशकालयोरानुकूल्य एवायतत इति। तथा हि न खलु परीक्षितप्ररोहणसामर्थ्यमपि बीजमूषरधरायामुप्यमानमुर्वरायामिवोर्व्यां जातु प्ररोहत् परिलक्ष्यते। न वा शश्वद्दर्शि-तस्वीयाद्भुतगुणपरिणाममपि महौषधमनु-रोगिप्राणवियोगं वितीर्यमाणमणुमपि गुणं जनयद् जनैः क्वचिदप्यवेक्ष्यते। तदेवमुदा-हृतिभ्यां देशकालानुरूपमेव स्वरूपमुपयत् कृत्यजातं कलयति सौफल्यमिति चारुतरं निश्चीयते।

शिक्षापि नियममेनमनुसरन्ती देशका-लभेदेन भिन्नभिन्नं स्वरूपमाश्रयन्त्येव सा-फल्यं कलयन्ती बाहुल्येनोपलब्धिगोचरता-मञ्चति विपश्चितामपश्चिमेतिहासप्रेक्षा-वताम्। तथाहि—

आसीद्भारताख्येऽस्मिन् वर्षे एकः कालो यत्र पारमार्थिक्येव शिक्षा सर्वमूर्धन्या धन्या च मन्यते स्म। नो न जानन्त्युपनिषन्नि-ष्णातधिषणा विचक्षणा यदारुणेयः श्वेत-केतुर्गुरुकुलान्निखिलां वेदादिविद्यामधीत्या-नूचानमानी निजनिकेतनमुपेतः पित्राऽऽरु-णिनापृच्छ्यत 'स्तब्धोऽस्युत तमादेशमप्रा-क्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति।" एतेनान्येन चैवंविधेन चोप-निषत्सु भूम्ना वर्ण्यमानेन कथानकशतेन सुव्यक्तमेतदवधारयितुं शक्येत यत्तदानीं वरेण्यतममपि विषयान्तरवैचक्षण्यमन्तरे-णात्मज्ञानं तृणाय मन्यते स्म। तथा च तदा-नीन्तनी शिक्षापद्धतिः सुतरामेव पारमार्थि-क्यै ( आध्यात्मिक्यै ) शिक्षायै प्रधानं स्थानं ददती परं प्राशस्यत।

एष एव हि कालो वास्तविको दार्शनिकोऽपि काल इति शक्यते व्यपदेष्टुम् । यतोऽत्रैव स्वीयस्वीयप्रक्रियया कृतात्मसाक्षात्कारा: कारुणिकधुरीणास्तत्रभवन्तो दर्शनाचार्य्या जगदुपकृतये आत्मसाक्षात्कारोपायप्रदर्शनपराणि दर्शनशास्त्राण्युपदिदिशुः । तदुपदिष्टा विशिष्टाः सरणीरनुसरन्तो महान्तस्तत्तदनुयायिनो मुन्यादयश्च तत्त्वं साक्षादकार्षुः । परतस्तु ( यथाऽद्यत्वे ) क्रियाशून्यानि तत्तदीयराद्धान्तबोधसाधनानि वादवितण्डादिक्षेत्राणि विजिगीषाविषयरूपाण्येव प्रायो दर्शनानि समपद्यन्त । विरला एव कृतसुकृततततयो यतयः कृतिनश्च कृतात्मदर्शनाः समजनिषत ।

परतश्च पर्य्यवर्तत शनैः शनैः प्रागभिहितोऽनेहा । पारमार्थिकीं शिक्षां दुर्घटामभिदधतो लोकाः 'न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतो' रित्याद्याप्तवाक्यानि परं प्रमाणयन्तो धर्ममेव सर्वतोऽधिकमाद्रियमाणा धार्मिक्या एव शिक्षायै मुख्यतां वितेरुः । द्रढीयान् कोऽपि धर्मप्रभावातिशयो भारतीयानां मनांस्यध्यतिष्ठत । धर्मैकरक्षणपरायणास्तदानीन्तनाश्चक्रवर्तिनोऽपि धर्मरक्षणहेतव इतराणि यावन्त्यपि भौतिकश्रेयांसि तृणाय मन्तुं व्यवस्यन्तो व्यलोक्यन्त । को न खलु साहित्यवैदुषीभूषितशेमुषीको यौधिष्ठिर्य्या उदीरितेरधस्तन्याः स्मरन् धर्मस्याधिराज्यं तदानीन्तनमनुमन्तुं मनागपि विचिकित्सितुमुत्सहेत ?

'सपदि विलयमेतु राज्यलक्ष्मी-
रुपरि पतन्त्वथवा कृपाणधाराः ।
अपहरतुतरां शिरः कृतान्तो
मम तु मतिर्न मनागपैतु धर्मात्' ॥ इति-

अथ 'कालस्य कुटिला गति' रिति लोकोक्तिमक्षरशः सत्यापयन् प्रावर्तिष्ट कश्चन विकटमेव कौटिल्यं प्रकटयन् कालविलासो यत्राध्यात्मिकीं धार्मिकीं वा शिक्षां केवलामवलम्बमानो जनो न केवलमनादृतिपात्रमुपहसनभाजनं वा जनानामजनिष्ट, यावदसौ संसारयात्रामपि निर्वोढुमनर्ह एव पर्य्यगण्यत । तदानीमयमादर्शो जनैर्भूम्नाऽनुसस्रे यत् 'या लोकद्वयसाधनी चतुरता सा चातुरी चातुरी' ति । एवञ्च प्राक् समीक्षितां शिक्षाद्वयीमविरुन्धती व्यावहारिकी शिक्षा परिवृढतां प्रापत् । तदानीन्तनी शिक्षापद्धतिः सुतरां व्यावहारिक्यै शिक्षायै प्रधानतां व्यतारीत् ।

इत्थं भारतस्य भारतीयधरित्रीपतित्रातशासितत्वदशायां समयभेदेन प्रागुदीरिता शिक्षात्रयी त्रिविधान् भारतीयबुधान्निर्बाधं प्रादुरबीभवत् ।

के वा हेतवस्तत्पद्धतेरुत्तरोत्तरपरिपतनस्य ?

अथ यदा दैवदुर्विपाकाद् भारतशासका वीरक्षत्रियवंशकरीरा अप्येरण्डप्ररोहा इव दुस्सहाहवे निस्सहा गृहकलहग्रहिलतामेव वीरतां मन्तुमारभन्त । भारतीयैरेव प्रतीपभूपैरजस्रमयुध्यन्त । भारतसपत्नावस्कन्दने चातितरामौदासीन्यमाश्रयन्त। तदैव भारताभ्युदयभानुरस्ताचलमवलम्बे । पशुप्रायाचरणा अन्याय्यनीत्येकशरणा यवना विदित-

तदीयौदासीन्यरहस्याः सन्तः समवस्कन्द्य भारतं स्वल्पायासेनैव प्राज्यं भारतीयसाम्राज्यमात्मसादकार्षुः । तथा च भारताभ्युदयप्राणेषु भूपतिगणेषु यवनसम्राड्दास्यशृङ्खलानिगडितचरणेषु भारतीयानां शिक्षा, दीक्षा नीतयो रीतयश्च दयनीयां दशामयासिषुः । छित्राः पवित्राः क्षत्रियत्वाभिमानसमुन्नता महाराणाप्रतापशिवराजप्रभृतयः कृतवीरोचितविक्रमा अपि भारतीयैरेव कातरैर्भूपतिनिकरैर्दर्शितयवनसम्राड्भक्तिप्रकरैः कृतप्रत्यूहा न भारताद् यवनसाम्राज्यमपाकर्त्तुमपारयन् । तथा च पारमार्थिकी शिक्षा न केवलं प्रविरलताम्, स्मृतिशेषतामेवाभ्युपेयाय, धार्मिकी शिक्षापि शिखासूत्रादिभारतीयवर्णाश्रमादिचिह्नरक्षण एव पर्य्यणंस्त । व्यावहारिकी तु शिक्षा यवनशासने विजृम्भमाणे खादतमोदतैकतानेभ्यो यवनेभ्यः कथङ्कारमपि सम्भावितैव नार्हद्भवितुम् । परिणतिरियं समपद्यत यद् भारतीया जगति प्राचीनतमा पूततमा च वर्णाश्रमादिव्यवस्था सर्वप्रकाराभ्युदयनिदानभूता शिक्षा च व्याकुले समजायेताम् ।

अथ सर्वथाऽवद्ये यवनसम्राज्ये कालेन कवलीक्रियमाणे भारतस्य दिष्टेन समापन्नदाङ्गलसाम्राज्यम् । साम्राज्येऽस्मिन् साक्षाद्धर्मसंस्कृत्यादिमर्माहतिं परिहरन्तोऽप्याङ्गलशासकास्तादृश्या कूटनीत्या भारतं शासति यया भारतीयगौरवगाथाः सर्वथैव व्यलुप्यन्त । ते भारते तादृशीं पाश्चात्यनीतिरीत्योतप्रोतां भारतीयताविध्वंसनैकतानां शिक्षापद्धतिं प्राचीचरन्, यया शिक्षिता भारतीया न केवलं स्वं धर्मं स्वीया नीती रीतीश्च परिजहति, प्रत्युत तत्र महतीमेव काञ्चन नीचां धियं दधति । तादृशांश्च कल्पितान् भारतीयेतिहासान् शिक्षापद्धतौ न्यवीविशन्, यदध्ययनेन भारतीयाध्येतारो निजपूर्वजान् बाढं मूढान् असभ्याँश्च निश्चिन्वन्ति, विश्वग्रन्थेभ्यः प्राचीनं ज्ञानविज्ञानोदन्वन्तं भगवन्तं वेदमपि गवाश्वाजाविपालकप्रलापं भण्डधूर्तभाण्डपर्य्यवसन्नं वा मन्वते, पाश्चात्यरीत्यादिषु च शौचाचारादिविरहितेष्वपि दिव्यताधियं धारयन्ति । किं बहुना, भुवनमान्यैर्ज्ञानविज्ञानोदन्वद्भिर्वेदैरधिष्ठिता दुराक्रमव्याकरणादिवेदाङ्गदुर्गपरिरक्षिता विस्मयाकरपुराणेतिहासपरिबृंहितशरीरा जगद्दुर्गमदर्शनव्रजभ्राजितविवेकविभवा चञ्चद्धर्मशास्त्रनिशातशस्त्रजनितशात्रवत्रासा दुर्मेदायुर्वेदधनुर्वेदाद्युपवेदवर्मसंरक्षितमर्मा जनिताद्भुतयन्त्रमन्त्राकरतन्त्रजगन्मोहा चकासितचमत्कारचयालङ्कारनिकरसमलङ्कृता ललितकाव्यकलाकलापसमुल्लसिता विवृद्धाक्षयकोशातिशयितसमृद्धा वृद्धाऽपि संख्यातीता भारतीः सुवानाऽखण्डभूमण्डलसंस्कृतिशिक्षयित्री धात्रीव भुवनभारतीनां भारतीया सुरभारती मृतेति भारतीयानध्येतॄन् बोधयन्ति । निजसाम्राज्यस्थितिरक्षणपरायणास्ते तादृशानस्त्रशस्त्रादिधारणनियमान् निरमासिषुर्यत्तदनभ्यासाद् भारतीयाः परं भीरवः क्लीबा इव सञ्जज्ञिरे सञ्जायन्ते च । एवञ्च तैः 'रक्षको यत्र भक्षक' इति न्यायो निपु-

णमानीयत चारितार्थ्यम् । तस्मात् साम्राज्येऽस्मिन् भारतीयाः स्वीयेन धर्मेणाचारेण व्यवहारेण साहित्यादिना च सर्वेण स्वीयगौरवोद्गारिणा पदार्थसार्थेन वञ्चिता नितरामेव निरभिमानाः समजनिषत । सुतरामेव हन्त ! भारतीया संस्कृतिः शिक्षा च सङ्कीर्णतामुपेते प्रतिहते इव पर्य्यणंसाताम् ।

( साम्प्रतं प्रचलन्ती पद्धतिरित्यादि )

कस्यापि देशस्य संस्कृतिः शिक्षा योगक्षेमौ च तदीयराजच्छत्रच्छायमाश्रयन्त एव प्रभवन्ति शोभनां दशामासादयितुं जीवितुं वा । देशेऽस्मिंस्तु दुर्दैववशतो वैदेशिकस्य स्वीयशिक्षादीक्षाप्रचारणपरायणस्य राज्ञः सत्त्वेन शश्वदेव तदाशा ( तदीयच्छत्रच्छायाशा ) वैहायसकुसुमसमैवेति हन्त ! सर्वथाऽनाथतेव पर्य्यवस्यद् भारतस्य स्वस्वरूपपरिरक्षणे ।

अत्र किल प्राप्तकालमेतन्न शक्यमपलपितुं यद् धन्यास्ते धार्मिकमूर्धन्या अनन्यसामान्या मनीषिमान्याश्च भारतीयाः, ये हायनानां सहस्रं यावद् वैदेशिकैर्भूयोभूयः कृतेष्वपि भीषणेषु धर्मसंस्कृतिशिक्षादीक्षाद्याक्रमणेषु येन केनापि निजप्राणपणेनापि प्रकारेण भारतीयधर्मादिसत्तामरक्षयन् रक्षयन्ति च । यदि ते स्वीयधर्मादिरक्षणे प्रमादं व्यधास्यन्त, निश्चप्रचमेतर्हि जीर्णा शीर्णापि दृश्यमाना भारतीया संस्कृतिः शिक्षा दीक्षा वाऽद्य स्मृतिमात्रपर्य्यवसन्नैव समपत्स्यत ।

पाश्चात्यशिक्षाकर्दमाविलीकृतभारतीयसंस्कृतयो हृत्पटलकीलितवैदेशिकसंस्कृतयो वा राजसत्कृताः शासनादिकर्माधिकृता भारतीयास्त्ववशिष्टाया अपि भारतीयायाः संस्कृतेः समुच्छेदमेव वाञ्छन्ति कार्त्स्न्येन ।

एवं च स्वीययोगक्षेमगतौ स्वयमेव रक्षितव्यायां भारतीयसंस्कृतिशिक्षारक्षणप्रणयिभिः संस्कृतप्रेक्षावद्भिः प्रणेयैव प्रत्यग्रा प्रणाली शिक्षायाः । यतः साम्प्रतं प्रचलन्त्या पद्धत्या शिक्षिताः वयं स्वीयासामयिकतां प्रकटयन्तः सर्वत एवौदासीन्यं दर्शयन्तः प्रतिपलं परिवर्त्तमानमपि कालविलासमनाकलयन्त इव कदाचन प्रचलितामेव शिक्षापद्धतिमेतर्हि देशकालाननुकूलामपि परिशीलयन्त एव सन्तुष्यामः । तेन चानुदिनं दीनामेव दशामासादयन्तो लक्ष्यामहे । 'देशकालानभिज्ञा व्यावहारिकज्ञानशून्या दवीयसोऽनेहसः समागतानि कानिचन परिच्छिन्नानि पुस्तकानि रटितवन्तो गेहेशूरतावशेषा भिक्षुविशेषा इमे' इति वैदेशिकैर्देशिकैर्वा वैदेशिकान्तेवासितापन्नैर्वैदेशिकमायाकुण्ठीकृतचेतनैर्वा भारतावनीसुतनयैर्निरतिशयं परिहस्यामहे । बाल्याकालादारभ्य व्याकरणन्यायाद्यध्ययन एव त्रिंशद्वर्षवयस्कतां गताः समधिगतानेकाचार्यविरुदा अप्यास्माकीना मनीषिणः शब्दरूपावलीप्रभृतिपञ्चतन्त्रीयसंग्रहावधिसंस्कृताध्यापनकेन्द्रेषु बहुव्रीहिशिक्षणपरिणतेष्वाङ्गलपाठालयेषु संस्कृतमप्यध्यापयितुमनर्हाः परिगण्यन्ते ।

( कीदृशी शिक्षापद्धतिरिदानीमित्यादि )

तस्मादस्माभिस्तादृशी देशकालानुकूला

सर्वाङ्गीणसौष्ठवसङ्कुला सर्वतोमुखीना नवीना शिक्षापद्धतिरेषितव्या यया शिक्षिता अस्मदध्येतारो न केवलं शास्त्रमर्मज्ञा अपितु भारतीयशौचाचारधर्मकर्मनीतिरीतिनिरता देशान्तरीयनीतिरीतिविशेषज्ञाश्च लब्धसमज्ञा जायेरन्। प्रतिपक्षिभिरपि परं प्रशस्येरन्। जगदाहृत्या वृत्त्यापि च न विहीयेरन्। स्वीयमैहिकमामुष्मिकं च द्वयमप्यभ्युदयं रक्षितुं क्षमेरन्। एकदेशिज्ञानशालिताकलङ्कं क्षालयितुमीशीरन्। स्वीयं वर्णाश्रमधर्मं तदुचितं सदाचारं साहित्यं देशं समाजं च सादरं सेवितुमुत्सहेरन्। परकीयाक्षेपान् प्रतिक्षेप्तुं दक्षाः सम्पद्येरन्। किं बहुना, सुशिक्षितेभ्यः प्रेक्षावद्भ्यः सम्भाव्यं यावदपि कृत्यं साधुतरं विधातुमवदधीरन्।

परं प्रत्यग्रशिक्षापद्धतेरुत्प्रेक्षणे क्रियमाणे द्रागेवोत्प्रेक्षकाणां चक्षुषोः पुर उपतिष्ठते साम्प्रतिकी परीक्षापिशाची। या प्राक्तनीं निखिलामपि पाण्डित्यप्रकर्षग्राहिलां पद्धतिमतिक्रम्य फल्गुतरामपि स्वीयामेव पद्धतिं प्रथयति। या चाधुनातनानध्येतॄन् ब्रह्मचारिणो गृहस्थान् वानप्रस्थान् यतीनपि च निर्विशेषमाविशति। यांश्चाविशतीयं पिशाची, ते तदाराधनसाधनानि विहाय किमपि पदार्थान्तरं नाक्षिलक्षीकुर्वन्ति। अवसीदति चैतदावेश एतदावेशसमयसमुद्भूतमबद्धमूलं यावदपि ज्ञानमञ्जसैवावसीदति। परमेवमेषा दोषाकरीभूतापि सती योषेव दुष्परिहरा प्रतिभाति साम्प्रतम्, यतो न केचन तादृशा मान्त्रिकाः क्वचिदप्युपलभ्यन्ते ये निजामोघमन्त्रप्रयोगेणैतदाविष्टेभ्यो अधुनातनाध्येतृभ्य एनां दूरतो निरस्येयुः। ये केचन सन्त्यपि तादृशा मान्त्रिकास्तेऽपि प्रेक्षावतः परीक्षितुमेनामेवैकां सहायिकामाकलयन्ति। येनास्या देशव्यापी समादर उत्तरोत्तरमुपचीयत एव नापचीयते मनागपि।

एवञ्चैष निष्कर्ष इहावश्याश्रयितव्यः समापतति यत् शिक्षासमुद्धरणबद्धादरा विपश्चितां प्रवरा एनां निरसितुं काँश्चन मान्त्रिकान् वा गवेषयेयुस्तदनुपलब्धावेतदविरुद्धां शिक्षापद्धतिं वा विदध्युः। इतरथा तु विधीयमाना निधीयमानापि पद्धतिर्देशकालप्रतिकूला विफलैव कल्पिष्यते। तस्मादस्मि पक्षद्वयसाधारणीमेव शिक्षापद्धतिं यथाप्रेक्षमुत्प्रेक्षमाणः।

(अत्र प्रातिस्विकरूपेण तत्तच्छास्त्रीयग्रन्थविशेषाणां निर्धारणं तत्तत्प्रान्तीयशिक्षासंस्थाव्यवस्थापितपाठ्यपुस्तकनिर्धारिपरिषदामनवद्यविद्यैः पारिषद्यैरेव यथारुचि यथातत्तत्प्रान्तप्रसिद्धि वा विधीयमानं हृद्यतामावहतीति न संस्कृतशिक्षासामान्ये स्वीयपरामर्शं दर्शयद्भिस्तन्निर्धारणांश उल्लेख्यतामर्हति। किन्तु साधारणांश एवेति तदंशमेवास्मि प्रदर्शयन्।)

सकलास्वपि संस्कृताध्ययनाध्यापनशालासूपनीताध्येतॄणां कृत आदित एवानिवार्यरूपेण श्रेणिक्रमेण स्वल्पः स्वल्पः सार्थो वेदभागोऽवश्यं सन्निवेश्यः। तदर्थं च सरलशुद्धसंस्कृतलिखितानि प्रमेयमात्रपरिचायकाणि वेदव्याख्यानानि विधीयेरन्। तानि

णामानीयत चारितार्थ्यम् । तस्मात् साम्राज्येऽस्मिन् भारतीयाः स्वीयेन धर्मेणाचारेण व्यवहारेण साहित्यादिना च सर्वेण स्वीयगौरवोद्‌गारिणा पदार्थसार्थेन वञ्चिता नितरामेव निरभिमानाः समजनिषत । सुतरामेव हन्त ! भारतीया संस्कृतिः शिक्षा च सङ्कीर्णतामुपेते प्रतिहते इव पर्य्यणंसाताम् ।

( साम्प्रतं प्रचलन्ती पद्धतिरित्यादि )

कस्यापि देशस्य संस्कृतिः शिक्षा योगक्षेमौ च तदीयराजच्छत्रच्छायमाश्रयन्त एव प्रभवन्ति शोभनां दशामासादयितुं जीवितुं वा । देशेऽस्मिंस्तु दुर्दैववशतो वैदेशिकस्य स्वीयशिक्षादीक्षाप्रचारणपरायणस्य राज्ञः सत्त्वेन शश्वदेव तदाशा ( तदीयच्छत्रच्छायाशा ) वैहायसकुसुमसमैवेति हन्त ! सर्वथाऽनाथतेव पर्य्यवस्यद् भारतस्य स्वस्वरूपपरिरक्षणे ।

अत्र किल प्राप्तकालमेतन्न शक्यमपलपितुं यद् धन्यास्ते धार्मिकमूर्धन्या अनन्यसामान्या मनीषिमान्याश्च भारतीयाः, ये हायनानां सहस्रं यावद् वैदेशिकैर्भूयोभूयः कृतेष्वपि भीषणेषु धर्मसंस्कृतिशिक्षादीक्षाऽऽक्रमणेषु येन केनापि निजप्राणपणेनापि प्रकारेण भारतीयधर्मादिसत्तामरक्षयन् रक्षयन्ति च । यदि ते स्वीयधर्मादिरक्षणे प्रमादं व्यधास्यन्त, निश्चप्रचमेतत्तर्हि जीर्णा शीर्णापि दृश्यमाना भारतीया संस्कृतिः शिक्षा दीक्षा वाऽद्य स्मृतिमात्रपर्य्यवसन्नैव समपत्स्यत ।

पाश्चात्यशिक्षाकर्दमाविलीकृतभारतीयसंस्कृतयो हृत्पटलकीलितवैदेशिकसंस्कृत्याहतयो वा राजसत्कृताः शासनादिकर्माधिकृता भारतीयास्त्ववशिष्टाया अपि भारतीयायाः संस्कृतेः समुच्छेदमेव वाञ्छन्ति कार्त्स्न्येन ।

एवं च स्वीययोगक्षेमगतौ स्वयमेव रक्षितव्यायां भारतीयसंस्कृतिशिक्षारक्षणप्रणयिभिः संस्कृतप्रेक्षावद्भिः प्रणेयैव प्रत्यग्रा प्रणाली शिक्षायाः । यतः साम्प्रतं प्रचलन्त्या पद्धत्या शिक्षिताः वयं स्वीयासामयिकतां प्रकटयन्तः सर्वत एवौदासीन्यं दर्शयन्तः प्रतिपलं परिवर्त्तमानमपि कालविलासमनाकलयन्त इव कदाचन प्रचलितामेव शिक्षापद्धतिमेतर्हि देशकालाननुकूलामपि परिशीलयन्त एव सन्तुष्यामः । तेन चानुदिनं दीनामेव दशामासादयन्तो लक्ष्यामहे । 'देशकालानभिज्ञा व्यावहारिकज्ञानशून्या दवीयसोऽनेहसः समागतानि कानिचन परिच्छिन्नानि पुस्तकानि रटितवन्तो गेहेशूरतावशेषा भिक्षुविशेषा इमे' इति वैदेशिकैर्वैदेशिकैर्वा वैदेशिकान्तेवासितापन्नैर्वैदेशिकमायाकुण्ठीकृतचेतनैर्वा भारतावनीसुतनयैर्निरतिशयं परिहस्यामहे । बाल्याकालादारभ्य व्याकरणन्यायाद्यध्ययन एव त्रिंशद्वर्षवयस्कतां गताः समधिगतानेकाचार्यविरुदा अप्यास्माकीना मनीषिणः शब्दरूपावलीप्रभृतिपञ्चतन्त्रीयसंग्रहावधिसंस्कृताध्यापनकेन्द्रेषु बहुव्रीहिशिक्षणपरिणतेष्वाङ्गलपाठालयेषु संस्कृतमप्यध्यापयितुमनर्हाः परिगण्यन्ते ।

( कीदृशी शिक्षापद्धतिरिदानीमित्यादि )

तस्मादस्माभिस्तादृशी देशकालानुकूला

सर्वाङ्गीणसौष्ठवसङ्कुला सर्वतोमुखीना नवीना शिक्षापद्धतिरेषितव्या यया शिक्षिता अस्मदध्येतारो न केवलं शास्त्रमर्मज्ञा अपि-तु भारतीयशौचाचारधर्मकर्मनीतिरीतिनिरता देशान्तरीयनीतिरीतिविशेषज्ञाश्च लब्धसमज्ञा जायेरन्। प्रतिपक्षिभिरपि परं प्रशस्येरन्। जगदादृत्या वृत्त्यापि च न विहीयेरन्। स्वीयमैहिकमामुष्मिकं च द्वयमप्यभ्युदयं रक्षितुं क्षमेरन्। एकदेशिज्ञानशालिताकलङ्कं क्षालयितुमीशीरन्। स्वीयं वर्णाश्रमधर्मं तदुचितं सदाचारं साहित्यं देशं समाजं च सादरं सेवितुमुत्सहेरन्। परकीयाक्षेपान् प्रतिक्षेप्तुं दक्षाः सम्पद्येरन्। किं बहुना, सुशिक्षितेभ्यः प्रेक्षावद्भ्यः सम्भाव्यं यावदपि कृत्यं साधुतरं विधातुमवदधीरन्।

परं प्रत्यग्रशिक्षापद्धतेरुत्प्रेक्षणे क्रियमाणे द्रागेवोत्प्रेक्षकाणां चक्षुषोः पुर उपतिष्ठते साम्प्रतिकी परीक्षापिशाची। या प्राक्तनीं निखिलामपि पाण्डित्यप्रकर्षग्रहिलां पद्धतिमतिक्रम्य फल्गुतरामपि स्वीयामेव पद्धतिं प्रथयति। या चाधुनातनानध्येतॄन् ब्रह्मचारिणो गृहस्थान् वानप्रस्थान् यतीनपि च निर्विशेषमाविशति। यांश्चाविशतीयं पिशाची, ते तदाराधनसाधनानि विहाय किमपि पदार्थान्तरं नाक्षिलक्षीकुर्वन्ति। अवसीदति चैतदावेश एतदावेशसमयसमुद्भूतमबद्धमूलं यावदपि ज्ञानमञ्जसैवावसीदति। परमेवमेषा दोषाकरीभूतापि सती योषेव दुष्परिहरा प्रतिभाति साम्प्रतम्, यतो न केचन तादृशा मान्त्रिकाः क्वचिदप्यवेक्ष्यन्ते ये निजामोघमन्त्रप्रयोगैरेतदाविष्टेभ्यो अधुनातनाध्येतृभ्य एनां दूरतो निरस्येयुः। ये केचन सन्त्यपि तादृशा मान्त्रिकास्तेऽपि प्रेक्षावतः परीक्षितुमेनामेवैकां सहायिकामाकलयन्ति। येनास्या देशव्यापी समादर उत्तरोत्तरमुपचीयत एव नापचीयते मनागपि।

एवञ्चेष निष्कर्ष इहावश्याश्रयितव्यः समापतति यत् शिक्षासमुद्धरणबद्धादरा विपश्चितां प्रवरा एनां निरसितुं कांश्चन मान्त्रिकान् वा गवेषयेयुस्तदनुपलब्धावेतदविरुद्धां शिक्षापद्धतिं वा विदध्युः। इतरथा तु विधीयमाना निधीयमानापि पद्धतिर्देशकालप्रतिकूला विफलैव कल्पिष्यते। तस्मादस्मि पक्षद्वयसाधारणीमेव शिक्षापद्धतिं यथाप्रेक्षमुत्प्रेक्षमाणः।

(अत्र प्रातिस्विकरूपेण तत्तच्छास्त्रीयग्रन्थविशेषाणां निर्धारणं तत्तत्प्रान्तीयशिक्षासंस्थाव्यवस्थापितपाठ्यपुस्तकनिर्धारिपरिषदामनवद्यविद्यैः पारिषद्यैरेव यथारुचि यथातत्तत्प्रान्तप्रसिद्धि वा विधीयमानं हृद्यतामावहतीति न संस्कृतशिक्षासामान्ये स्वीयपरामर्शं दर्शयद्भिस्तन्निर्धारणांश उल्लेख्यतामर्हति। किन्तु साधारणांश एवेति तदंशमेवास्मि प्रदर्शयन्।)

सकलास्वपि संस्कृताध्ययनाध्यापनशालासूपनीताध्येतॄणां कृत आदित एवानिवार्यरूपेण श्रेणिक्रमेण स्वल्पः स्वल्पः सार्थो वेदभागोऽवश्यं सन्निवेश्यः। तदर्थं च सरलशुद्धसंस्कृतलिखितानि प्रमेयमात्रपरिचायकाणि वेदव्याख्यानानि विधीयेरन्। तानि

च पञ्चषाध्यायात्मकानि स्वल्पमूल्यलभ्यभव्यपुस्तकपरिणतानि प्राकाश्यमानेतव्यानि। वेदानधिकारिणां तु तत्स्थाने पुराणादिखण्डान्येव निर्धारितानि स्युः। धर्मशास्त्रपुराणेतिहासभागा अपि सुगमशुद्धसंस्कृतलिखिता वेदवदेव लघुभव्यस्वल्पमूल्यलभ्यपुस्तकोपनिबद्धा अवश्याध्येयत्वेन निर्धार्य्याः। एवं कृते चरमश्रेण्यामावश्यका यावन्तोऽपि भागाः सम्पन्नतामापद्येरन्। ये चाध्येतारो वेदादिष्वेव विशेषज्ञतामधिगन्तुकामा वेदादीनेव प्राधान्येनाधीयते तेषां कृते तु सन्त्येव सायणोव्वटमहीधरादिकृतानि वैदुष्यनिकषाणि भाष्याणि। इत्थं शिक्षापद्धतावनिवार्यरूपेण वेदादौ विनिवेश्यमाने समग्राण्यपि व्याकरणन्यायादिशास्त्राणि समधीतवन्तोऽपि मतिमन्तो वैदिकं विषयं पृच्छ्यमानाः खमेव सूचयन्तीति कलङ्को निश्शङ्कं प्रक्षाल्येत।

सकलास्वपि संस्कृताध्ययनाध्यापनशालासु प्रारम्भादेवानिवार्यरूपेण श्रेणीक्रमेण कल्पितकायाः सरलललितसुरभारतीविलिखिता मानचित्रादिविचित्रिता वर्त्तमानेतिहासभूगोलग्रन्था न केवलं भारतीयाखण्डधरामण्डलेतिवृत्तादिपरिचायका यावद्भारतव्यतिरिक्तानामपि निखिलभूवलयान्तर्वर्तिदेशानां तदीयेतिवृत्तादीनाञ्चादर्शवद्दर्शका नूनं निर्धारणीयाः। एवमनुष्ठिते संस्कृतपण्डिताः कूपमण्डूका इव निजप्रान्ताद् बहिर्भुवनज्ञानशून्या भवन्तीति समाक्षिपन्तोऽतिरूक्षं प्रतिक्षिप्ताः स्युः।

सकलास्वपि संस्कृताध्ययनाध्यापनशालास्वादित एव सुगमप्रक्रियया लिखिता गणितग्रन्थाः श्रेणीक्रमेण परिवर्धमाना अवश्यं निवेश्याः। ये च ज्योतिःशास्त्रमेव प्राधान्येनाधीयते, तेषां कृते तु राजन्त्येव ज्योतिःशास्त्रग्रन्थरत्नानि। एतेन ज्योतिर्विदतिरिक्ताः संस्कृतपण्डिता निजवेतनद्रव्यगणनामपि परैरेव कारयन्ति, परैश्च लभ्यान्न्यूनेऽपि द्रविणे वितीर्यमाणे ते निरायत्त्या तावतैव सन्तुष्यन्तीत्यादिपरोपहासा निरस्येरन्। एवं प्राचामर्वाचाञ्च विज्ञानां भारतीयान् वैदेशिकान् वा महनीयान् विज्ञानसिद्धान्तानाधृत्य सरलसुरभारती-लिखिताः पाश्चात्यभाषापारिभाषिकशब्दानां स्वभाषायां सङ्केतं विधाय तैर्नूतनैः साङ्केतिकशब्दैः (कोष्ठे प्रत्ततत्तदीयाङ्गलभाषादिशब्दैश्च) कृतग्रन्था ग्रन्था अवश्याध्याप्यत्वेन निश्चेयाः। येन वर्त्तमानविद्युद्विलसितपदार्थसार्थाः कथं शक्यन्ते मर्त्यैर्निर्मातुम्? इमे तु परमेश्वरेणैव निर्मिताः सन्तीति विज्ञानशून्याः संस्कृतज्ञा जल्पन्तीति कल्पयन्तस्तानतितरां हसन्तश्च वैज्ञानिकमानिनश्चपेटया पुरस्क्रियेरन्। एतदर्थं चाङ्गलादिवैदेशिकभाषाणां ज्ञानमपि परमावश्यकमिति झटितिभाषापाटवप्रदायिन आङ्गलादिभाषाग्रन्था अपि प्रतिश्रेणि, प्रारम्भादेवावश्याध्येयत्वेन निर्धार्या एव। सकलेष्वपि संस्कृतविद्यालयेषु प्राथमिकीः कक्षा विहायोपरितनीषु यावतीष्वपि कक्षासु यावतोऽपि विषयाननिवार्यरूपेणोपाध्यायाः सुरभारत्यामेव छात्रानध्यापयेयुः। विद्यालयाध्यक्षा विद्यालयी-

याध्यापननियतसमये व्यावहारिकीर्वार्ता अपि नेतरस्यां भारत्यां कर्तुं छात्राननुजानीयुः। अन्यथाकुर्वतश्च तानतिरूक्षं दण्डयेयुः। आदेशनावेदनपत्रलेखनादीन् निखिलानपि विद्यालयीयव्यवहारानिवार्यरूपेण सुरभारत्यामेव विदध्युर्विधापयेयुश्च।

प्रतिविद्यालयं विद्यालयाध्यक्षाः साप्ताहिकीं पाक्षिकीं मासिकीं वा परिषदमनिवार्यरूपेण संस्थापयेयुः। परिषदोऽधिवेशने चाध्यक्षा उपाध्यायाश्चावश्यमुपस्थाय स्वयं सुचारुरूपेण वादं व्याख्यानादि वा कारयेयुः। वादे व्याख्यानादौ च न केवलं शास्त्रीयानेव विषयान्, यावल्लौकिकानपि व्यावहारिकांस्तान् निर्धारयेयुः। उच्चकक्षास्थेभ्यश्छात्रेभ्यो वादादिसमय एव वादादिविषयान् प्रतिभाप्रत्ययाय प्रदद्युः। वादादौ पारिषदैर्निर्णायकैश्च सर्वतः प्रतिभाशालित्वेन निर्णीतांश्छात्रान् सुचारु पुरस्कुर्युश्च।

साम्प्रतं प्रतिपलमुन्नमत्सु भारतादितरेषु देशेषु ये केचन समीचीना भव्यभावका आविष्कारा आकर्ण्यन्ते ते त्वरितमेव सरले ललिते च संस्कृतेऽनूद्य प्रकाश्येरन् पाठ्यप्रणाल्याञ्चानिवार्यरूपेण निश्चीयेरन्, स्वल्पेन मूल्येन च विक्रीयेरन्।

परमेतादृश्या नौतन्यचमत्कृतया पद्धत्या शिक्षिता अपि भारतीयाः सुरभारतीसमुपासका विद्यार्थिनो यदि वर्णाश्रमोचिताचारविरहिताः स्वास्थ्यविहीनाः खिन्नखिन्ना दीना इव च लक्ष्येरन्, निखिलमेतत्प्रागुदीरितं विचारजातं बाढमुद्देश्यासिद्धिदूषणग्रसितं वैयर्थ्यमेव समर्थयेत्। तस्माद् विद्यालयनियमविधायिनीभिः परिषद्भिः सदाचारपरिरक्षणपरा दैनिकव्यायामविधानपराश्चानिवार्यरूपेण पालनीयास्तादृशा नियमा निर्मीयेरन् यान् विद्यालयाध्यक्षद्वारा स्वोपाध्यायसहकारेण पालयन्तश्छात्राः प्रशस्यतराचारा हृष्टाः पुष्टाश्च सम्पद्येरन्।

एवं कृते सुरभारतीसमुपासकाश्छात्रा आजन्मनः सुरभारतीमधीयाना अपि सुरभारतीमभिधातुं लेखितुञ्च न प्रभवन्ति, आवेदनादिलेखनकलां तु सर्वथैव न परिचिन्वन्तीत्यादय आक्षेपा निखिला अपि विलयमयेरन्।

सुरभारत्यां दैनिकानि साप्ताहिकानि पाक्षिकाणि मासिकानि त्रैमासिकादीनि च रुचिराणि व्यावहारिकविषयाणि चित्रादिचमत्कृतानि वर्त्तमानसंसारीयप्रत्यग्रवार्त्तावेदनपराणि समाचारपत्राणि प्राचुर्य्येण प्रकाश्येरन्। तैश्च पत्रैस्तथावार्त्तादानदक्षतां दधद्भिर्भाव्यं यथा संस्कृतपण्डिताः संस्कृताध्येतारो वा जगद्वार्त्ता अचिरमेव परिचेतुं पारयेयुः भाषान्तरीयसमाचारपत्राणि च तदर्थं नाकांक्षेयुः।

समाचारपत्रसम्पादकाश्च तदर्थमेव विहितया परिषदा परस्परं सङ्गम्य नूतनव्यावहारिकशब्दानां परिभाषणमैकमत्येन विधाय सर्वेष्वपि समाचारपत्रेषु सर्वानुमतेन स्वरूपेण पारिभाषिकशब्दान् भारतीयानां वैदेशिकानां च महानगरसागरादीनां नामधेयानि च प्रयुञ्जीरन्। येन पत्रपाठकानां

बुद्धिविभ्रमो ( यथाऽद्यत्वे ) नोदेतुमीशीत । पत्राणि चाल्पमूल्यप्राप्याणि क्रियेरन् ।

काचिदेका समस्तभारतव्यापिनी भारतीयतत्तत्प्रान्तव्यापिन्यो नाना वा भारतीयानां महामहिमशालिनां संस्कृतप्रेक्षावतां समितय उद्घाटनीयाः । यया याभिर्वा प्रतिवर्षं स्वीयसन्तोषपोषिक्रया विशिष्टया परीक्षया परीक्षितेभ्यः सर्वतः प्रसरन्त्या महत्या ख्यात्या वा समन्वितेभ्यः सुरभारत्यां महत्तापूर्णवेददर्शनव्याकरणादिशास्त्रीयग्रन्थलेखकेभ्यः कमनीयाभिनवकाव्यनाटककथाऽऽख्यायिकादिकर्तृभ्यः कविभ्यः श्लाघनीयतमाध्यापनकलाकुशलेभ्यः उपाध्यायेभ्यः प्रशंसितेभ्यः शास्त्रीयलौकिकोभयवादचातुरीचमत्कृतेभ्यः ( शास्त्रार्थकर्तृभ्यः ) रुचिरसमाचारपत्रसम्पादकेभ्यः ज्योतिषि विज्ञानशिल्पादौ वा कांश्चन चमत्कारान् लोकलोचनगोचरतामानीतवद्भ्यः प्राचुर्येणातुरान् रुचिरं चिकित्सितवद्भ्यो वैद्येभ्य इतरेभ्यश्च शिक्षासम्बन्धिनं कमपि समुत्कर्षमासादितवद्भ्यो विद्वद्भ्यः पुष्कलः पारितोषिकस्तत्तद्विषयवैदुष्योत्कर्षपरिचायको विरुदादिश्च वितीर्येत ।

एवमनुष्ठिते भारतीयैर्विपश्चिद्भिः सोत्साहं सुरभारत्याः सर्वाङ्गीणोन्नयने विधीयमाने च सुरभारती मृता कथङ्कारमपि व्यवहारयोग्या नार्हति भवितुमिति मुहुर्व्याहरतां वैदेशिकानां सुरभारतीद्रुहां दैशिकानां च व्याहृतयः समूलघातं विहन्येरन् ।

अथेदानीं प्रश्नोऽयं पुरः पदमाधत्तुम-र्हति यदेतस्य प्रागभिहितस्य मनोराज्यकल्पस्य परामर्शजातस्य निष्पत्तिर्नान्तरेण प्रचुरेण द्रविणेनार्हति भवितुम् । द्रविणस्य चैतादृश्येवास्ति गतिर्यत् सुरभारत्यां प्रकाश्यमानानि विरलान्यपि समाचारपत्राणि लघुना मूल्येन लभ्यान्यपि नैव गृह्णन्ति सुरभारतीसमुपासकाः, कथङ्कारं वा तावन्तो ग्रन्थाः सरलसुरभारत्यां लिखिताः प्रकाशिता वा भवेयुः ? संस्कृतसंख्यावन्तो हि प्रकृत्यैव भवन्ति नितरां स्निग्धया दयितयेवाकिञ्चनतया सोत्कण्ठं कण्ठे गृह्यमाणा इति ते कथं तथाविधं महान्तं व्ययभारं वोढुं प्रभवेयुः ? कथङ्कारञ्च परिमितया भृत्या जीवनं निर्वहन्तो भृतिकृत्य एव बहुलं कालं यापयन्तस्ते तावतो ग्रन्थान् व्याख्यातुं निर्मातुं वा भवेयुरात्मनः प्रभव इति ।

आपाततः प्रश्नोऽयं दुरुत्तर इवाभाति। परं निपुणं समीक्षणे क्रियमाणे परमेव सरलः पन्थाः समञ्चति लोचनगोचरताम् । तथाहि—समस्तस्यैव भारतस्य महामहिमशालिनां सर्वतोमुखीनप्रतिभाचमत्कृतचेतसां संस्कृतप्रेक्षावतां कल्प्यतामेको महीयान् समवायः ( संस्थारूपः ) । तस्य च समवायस्य सकलप्रान्तीयप्रेक्षावत्समुपस्थानसौलभ्यशालिनि क्वचन महानगरे कार्यालय एको व्यवस्थाप्यताम् । व्यवस्थापिते च तस्मिन् निरुक्तसमवायेन निर्धारितनामधेयैः प्रेक्षावद्भीरैर्भारते वसुसंग्रहाय विधीयतां समस्तदेशव्यापि भ्रमणम् । राजानो महाराजाः श्रेष्ठिनश्च याच्यन्तां पुष्कलानि वसूनि । एवं कृते

सं० र० शिक्षाङ्कः



स्व० विद्वद्वरेण्य-द्राविड-श्रीलक्ष्मीनाथशास्त्रिमहाभागाः
भूतपूर्वजयपुर-महाराज-संस्कृतकालेजाध्यक्षाः

## राजकीयसंस्कृतकॉलेजभूतपूर्वाध्यक्षाः,

### विद्वद्वरेण्यगुरुवरश्रीलक्ष्मीनाथशास्त्रिचरणाः

जन्मत एव मेधाविनः श्रीमन्तो भारतसुप्रसिद्धवैयाकरणानां प्रातःस्मरणीयश्रीबालशास्त्रिचरणानां शिष्याः। द्राविडब्राह्मणश्रीरामनाथशास्त्रिणां सकाशात् १९०८ तमे विक्रमाब्दे श्रीमतां जन्माऽभवत। स्वर्गीयतात्याशास्त्रि-दामोदरशास्त्रि-म. म.शिवकुमारमिश्रमहाभागप्रभृतयः श्रीमतां सहाध्यायिनोऽभूवन्। १९३० तमे वि.वत्सरे व्याकरणादिशास्त्राणां पूर्णं पाण्डित्यमधिगम्य श्रीमन्तो गुरुचरणाः पारम्परिकनिवासभूतं जयपुरं परावर्वृतिरे। श्रीमतां ख्यातिस्तस्मिन्समये प्रसिद्धप्रसिद्धपण्डितेष्वासीत्। शास्त्रार्थप्रक्रियायां श्रीमतामसाधारणी मेधा बभूव। स्वर्गीयो महाराजाधिराजः श्रीरामसिंहदेवः पं०श्रीराजीवलोचनमैथिलेन निजाज्ञया निर्मीयमाणस्य धर्मचन्द्रोदयस्य (धर्मशास्त्रग्रन्थस्य) निर्माणे श्रीगुरुचरणानाज्ञापयत्, यत्र हि गुरुवरश्रीकृष्णशास्त्रिचरणा अपि सहकारिणोऽभूवन्। उक्तं हि जयपुरविलासे—

'राजीवलोचनबुधेन समस्तशास्त्रा-
ण्यालोच्य रामवचसाऽरचि धर्मचन्द्रः।
याभ्यामपूरि स ततोऽन्विह कृष्ण-लक्ष्मी-
नाथौ बुधौ कथय कस्य न संमतौ हौ॥

महाराजे दिवं गते गुरुचरणाः कियन्ति वर्षाणि केवलं 'मोदमन्दिर'नाम्न्या धर्मव्यवस्थासभाया एव सदस्याः समभवन्। यदा तु बाबूहरिदासशास्त्रिमहोदयो राजकीयाङ्गलकालेजस्याध्यक्षोऽभवत्तदाऽसौ गुरुचरणान् कालेजे संस्कृताध्यापकानकरोत्। अनन्तरं च १९४८ तमे वि॰ वत्सरे पण्डितवरश्रीरामभजनशर्ममहाभागेषु स्वर्गमधिरूढेषु श्रीमन्तः संस्कृतकालेजस्याध्यक्षा अभवन्। आगत्यैव श्रीमद्भिः संस्कृतपाठशालायाः सुमहान् परिष्कारोऽक्रियत। पाठ्यप्रणाल्याः शोधनं विधाय परीक्षाप्रणाली प्राचार्यत। व्यवस्थितः श्रेणिविभागः पर्यकल्प्यत। आचार्यपरीक्षापर्यन्तश्च पाठ्यक्रमः प्रथमतया श्रीमद्भिरेव विशिष्य प्रवर्तितः, अन्यथा पूर्वं शास्त्रिपरीक्षापर्यन्त एवाऽध्ययनक्रमः समभवत, यस्य सर्वतः प्रथमं शास्त्रिपदवीं लभमानाः पं० श्रीरामचन्द्रशर्माणः (भूतपूर्वप्रवेशिकागणिताध्यापकाः) प्रमाणम्।

मार्मिकाणां नेदमविदितं यद् राजकीयसंस्कृतकालेजस्योन्नतिक्रमः श्रीमद्भिरेव तथाऽऽरभ्यत यः संप्रति पूर्णमात्रायां वर्तते, येन चायं कालेजः काशीकालेजकल्पः कल्प्यते कोविदैरद्य। श्रीमतामध्यक्षताकालो यथानियमसौष्ठवस्यारम्भकोऽभूत्तथैव व्युत्पन्नानां दृढपाण्डित्यानां सर्वतो लब्धकीर्तीनां च स्नातकानां बाहुल्यार्थमपि प्रशंसनीयोऽभवत्। अयमेव स कालोऽस्ति यत्र परीक्ष्या विद्यार्थिनो भूमण्डलप्रसिद्ध-काशीकलकत्तादिस्थमार्मिकपरीक्षकाणामपि लेखनीतो न केवलं शताच्छतं योग्यताङ्कानेव, अपि तु वि-

शिष्य प्रशंसामप्यलभन्त (यथा श्रीगिरिधरशर्मचतुर्वेदप्रभृतयः)। केचित्केचित्तु परीक्षकेभ्यः पारितोषिकमप्यलभन्त (यथा स्वर्गीयश्रीलक्ष्मीरामस्वामिमहोदयः)। यत्र यत्र च विश्वविद्यालयेऽत्रत्या विद्यार्थिनः परीक्षायां सममिलन् तत्र तत्रैव सर्वतः प्राथम्यस्याशा अन्यान्यस्थानीयैः परीक्षार्थिवराकैर्निराशं पर्यत्यज्यत (यथा पञ्चाम्बुविश्वविद्यालये)। एतस्मिन् काल एव च ते विद्वांसो निरमीयन्त ये साम्प्रतं जयपुरराजकीयसंस्कृतकालेजस्य प्रायः सर्वेष्वेव विभागेषु अध्यापकपदमधितिष्ठन्ति। यस्मिन् कालेजे ३२ अध्यापका भवेयुः सर्वेपि च ते तस्मिन्नेव कालेजे अधीतवन्तोपि स्युः, किमिदं सौभाग्यं यस्य कस्यचिद्विद्यालयस्य भवेत्?

संस्कृतकालेजेऽधीतवन्तः श्रीमतां शिष्याः— जयपुरराजगुरुश्रीहरिदत्तशर्ममैथिलमहाभाग- दाधीचपं० भवदत्तशास्त्रि-(अजमेरगवर्नमैण्टकालेजस्य भूतपूर्वः प्रधानपण्डितः) प्रभृतयः प्रख्याता एव। आङ्गलविद्यालयेऽधीतवत्सु श्रीमतां शिष्येषु—जयपुरराज्यस्य भूतपूर्वः प्रधानसचिवः ईशानचन्द्रमुकर्जी, अविनाशचन्द्रसेन—भगवानदास-बी. ए. एल्. एल. बी. प्रभृतय उल्लेखनीयाः स्युः।

शास्त्रिचरणानां व्याकरणधर्मशास्त्रादिषु प्रकृष्टं पाण्डित्यं तु विश्वविदितमासीदेव परं श्रीमन्तस्तन्त्रशास्त्रस्याप्यसाधारणपण्डिता अभवन्, येषामनन्तरं तन्त्रपाण्डित्यमिदं लुप्तप्रायमेव। साहित्ये काव्यनिर्माणे च श्रीमतां तथा प्रौढिरासीद् यां दृष्ट्वा आजन्मसंस्तत्कर्म कुर्वाणा अपि भृशं विसिष्मियिरे। अध्यक्षताकाले श्रीमद्भिः कतिचित्संस्कृतपाठ्यपुस्तकानि निरमीयन्त। यथा 'भारतीयेतिवृत्तसारः' (भागचतुष्टये भारतीयमितिवृत्तम्), प्रवेशिकापाठः (प्रवेशिकाश्रेण्याः कृते पाठ्यो गद्यपद्यसंग्रहः) इत्यादि।

राजाज्ञया निर्मितो धर्मचन्द्रोदयस्तु श्रीमतां लेखसौष्ठवसाक्षी स्यादेव, किन्तु नासावस्माभिरालोकितो दुर्लभ्याम्। परं स्वर्गीयमहाराजाधिराजश्रीमाधवेन्द्रस्याऽऽज्ञया निर्मितो जयपुरराजवंशस्येतिहासो मया न केवलमालोकित एव, अपि तु लेखन्या लिखितोप्यस्ति, यस्मिन् हि श्रीगुरुचरणानां चरमं काव्यनिर्माणमार्मिकत्वं प्रत्यक्षं खेलति स्म। तद्वृत्तान्तस्त्वयम्—महाराजश्रीमाधवसिंहदेवेन कतिपयवर्षेभ्यः पूर्वं संस्कृतभाषामयं जयपुरेतिहासं लेखितुं तस्मिन्काले प्रसिद्धास्त्रयः पण्डिता आज्ञप्ता आसन्। तेषु सूर्यवंशादारभ्य पौराणिकराजानां कालं यावत् आदिमभागनिर्माणं श्रीगुरुचरणैरङ्गीकृतमासीत्। मध्यमस्य निर्माणं श्रीकृष्णशास्त्रिचरणानामधीनम्, चरमं च म.म. पं० श्रीदुर्गाप्रसादद्विवेदिनामायत्तमासीत्। मध्यं च चरमं च कियच्च कीदृशं च निर्मितमिति नास्ति विदितम्, परमादिमभागः सोयं मया स्वलेखन्या प्रायो भूयान् लिखितः। कारणमेतस्य—आरम्भादेव मदुपरि श्रीमतां विशिष्टोऽनुग्रहः समभवत्। अत्तु. समाक्षराणि सुन्दराणीति कृत्वा बहुधा यथाऽन्यान्यदलेखयंस्तथा काव्यस्यास्यादिमभागमप्यलेखयन्। यावत्स्मरामि तावत्सोयं

सर्गद्वये पूरितोऽभूत्। तयोर्मध्ये प्रथमस्तु समग्र एव मया लिखितः, द्वितीयस्य तु कश्चिदंशः।

नासीदिदं पूर्वं विदितं यदस्मद्दौर्भाग्यात्तदिदं काव्यं केवलं परिश्रमप्रसूरेव भवेत् न प्रकाश्येत, न वा लिखितमेवोपलभ्येत। अन्यथा मनोहरतमस्यास्य एका प्रतिलिपिरन्याऽप्यकारिष्यत। किन्तु हा हन्त सांप्रतं समग्रं तल्लुप्तम्, प्रथमं पद्यमद्यापि मे मनसि वर्तते। अनेनैव काव्यमार्मिका निर्मातुरसाधारणमधिकारं शब्दशय्यां चांशतः परिचिनुयुः—

'आसीदसीमसौभाग्यनिधिर्विधिरिवाऽपरः।
आद्योऽस्य नरसर्गस्य नाम्ना वैवस्वतो मनुः॥'

एतद्विषयेऽधिकं ज्ञातव्यं तु मन्निर्मित-'जयपुरवैभवाद्' ज्ञायेत।

एतद्विषयसंग्राहकं तत्रत्यं घनाक्षरीपद्यं तु—

येषामाधिपत्ये पाठशाला पाठशालाऽभव-
त्पाण्डित्येऽद्वितीयांस्तान्न कीर्तय१न्प्रयस्यामि
शब्दशास्त्रशैलीपरिशोधकानधिकतमं
जयपुरशिक्षा२प्रतिबोधकान् वदिष्यामि।
वात्सल्यानुरक्तशिष्यकृतपरिचर्यान् सदा
मन्त्रशास्त्रधुर्यान् गुरुवर्यान् वरिवस्यामि
नित्यमेव निर्मलनिसर्गिणो ३निपुणगणे
स्वर्गिणोऽद्य लक्ष्मीनाथशास्त्रिणो नमस्यामि॥ १॥

* सोरठा *

जटिलविषयगहनेषु संचरतामपि संततम्।
४सुप्रसन्नवचनेषु येषाममृतमिवाऽस्रवत्॥ २॥

---

१ पुण्ययशसां तेषां कीर्तने मे प्रयासो न भवतीत्याशयः। २ जागरयितॄन्, उन्नायकान्।
३ निपुणगणे निर्मलस्वभावान्। ४ येषां सुप्रसादयुक्तेषु वचनेषु।



निश्चप्रचमेतद्यत् सुमहान् वसुराशिः सुखं संगृह्येत । न खलु तिरोहितमेतत्कस्यापि भारतीयस्य यदेकेनैव महामनसा सुमनसामग्रेसरेण धन्यनामधेयेन पण्डितमदनमोहन-मालवीयमहोदयेनास्मादेव भारतवर्षात् तावान् प्रचुरो वसुराशिः समगृह्यतेति । तथा च संगृहीते पुष्कले वसुराशौ प्रागुक्तस्य समवायस्य राजेष्टीकरणमनुष्ठीयताम् । 'भारतीयसंस्कृतशिक्षाव्यवस्थापिका परिषदि'-ति च धीयतां नाम तस्य समवायस्य ।

एषा च परिषद् भारतशासकात् भारतीयसंस्कृतशिक्षापद्धतेः कृते प्राप्तप्रमाणीकरणवरिवर्त्तपरिवर्धनोनीकरणनूतनांशनिवेशनाद्यधिकारा विधीयताम् । एतया च परिषदा सर्वाङ्गीणसंस्कृताभ्युदयविधायिनी वर्तमानावनतिविध्वंसिनी सुरभारतीद्रोहणपरायणाक्षेपप्रक्षेपणी भारतीयसंस्कृतिरक्षिणी सर्वाङ्गाढ्या सर्वथाऽनवद्या शिक्षापद्धतिः परिकल्प्यताम् । अखण्डे भारतभूमण्डले च सैव पद्धतिः प्रचार्यताम् ।

पद्धत्येत्थंविधया शिक्ष्यमाणा भारतीयाध्येतारो विविधकलाढ्यां विद्यामधिगत्य स्तुत्यविद्यावन्तः सम्पद्यमानाः कमनीयं विनयमापन्ना जगतीजनैः परं प्रशस्यमाना भारतीयां संस्कृतिं सातिशयं दाढर्यं नयमाना महनीयं सनातनं धर्मं देशं प्रान्तं साहित्यं समाजं च सेवितुमतितरामुत्सहमानाश्च महदुपकरिष्यन्ति भारतस्येति भृशमाश्वसिमि । इत्थं सुरभारती च सर्वतोमुखीनं नव्यं भव्यं नूनमधिगमिष्यतीत्यलं बहुना पल्लवनेनेदानीम् । ॐ शान्तिः ।

सत्यवसरे परतोऽभिधास्ये चेतसि चितानिहानुद्दिष्टान् विचारानिति शम् ।

---

# ❀ शिक्षाया इतिहासः ❀

( ले॰ व्याकरण-धर्मशास्त्रोभयाचार्यपं॰ श्रीवृद्धिचन्द्रशर्मा म॰ सं॰ कालेजाध्यापकः )

एतत्तु विदितप्रायम्, यदत्र कार्यक्षेत्रेऽवतीर्णः पुरुषः स्वीयेनानुभवेनैव पूर्वं वस्तूनां गुणदोषात्मकं धर्मं विज्ञाय, हानोपादानं चिकीर्षति । किन्तु प्रकृतिमर्यादया यद् वस्तु विशेषेण जनसाधारणस्य कृते उपादेयं भवति तस्योपादेयता न सर्वस्यानुभवे आयाति । यच्च हेयं भवति तस्य हेयतापि न सर्वजनानुभूता । मन्ये, कस्याप्येकस्य तीव्रबुद्धौ तस्य तस्य गुणदोषौ हेयोपादेयते च परिस्फुरतः । श्रुतिरप्याह—"उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः ।" ऋ॰ १० । ७१ । ४ अप्येकः पश्यन्नपि न पश्यति, वाचमपि शृण्वन्न शृणोतीत्येनामित्यविद्वांसमाहार्धम् । अप्येकस्मै स्वमात्मानं विवृणुते । ज्ञानं प्रकाशनमर्थस्याह अनया उपोत्तमया वाचा । चतुर्थेन पादेन तु दृष्टान्तो दर्शितः । बहूनामपि समानपृष्ठोदरपाणिपादानाम्, अध्ययनमधीयानानाम्, एकः कश्चित् तीक्ष्ण-

बुद्धिः कृतपरिश्रमश्च पदार्थधर्मान् जानाति, अपरे च कृतपरिश्रमा अपि न विदन्तीति । "समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे ने"ति ब्रुवता भगवता महाभाष्यकारेणाप्ययमर्थः स्पष्टीकृतः । एवं च बुद्धिमता परिश्रमिणा केनापि नरेण तत्तद्वस्तूनां धर्मज्ञानेन हेयोपादेयते परिज्ञाते भवतः । तथा च तत्तद्वस्तुधर्मज्ञानेन तस्मिन्नरि एका विशिष्टा शक्तिरुदेति; यया शक्त्या युक्तः स पूर्वापेक्षयाधिकशक्तिशाली भवतीति 'शिक्षित' उच्यते । किन्तु एकेन तेन हेयस्य हेयतायामुपादेयस्योपादेयतायां च परिज्ञातायामपि अन्यैरेभिः साधारणैर्जनैर्न शक्यते बोद्धुमिति दयापरवशेनान्येन वा कारणेन यदन्येभ्यस्तेभ्य उपदिश्यते-"अस्मिन् वस्तुनि गुणा एते, एते च दोषा एतस्मिन्, एतत्ते लाभकारि, अनेन ते हानिरिति"-सापि शिक्षा नाम । शिक्षा हि नाम शक्तिसंपादनम् । येन कर्मणा मनुष्यः शक्तो भवति तत्कर्म शिक्षा । शिक्षया हि सामर्थ्यं समुत्पाद्यते । एवं च स्वस्मिन् सामर्थ्योत्पादने मार्गद्वयं वर्तते । एकः-स्वानुभवः, अपरश्च परानुभवग्रहणम् । उभयोरपि पथोः शिक्षाशब्दो रूढः । परानुभवग्रहणे तु शिक्षाशब्दस्यात्यन्तिकी रूढिः, किन्तु स्वानुभवेपि तत्प्रचारः प्रायो दृश्यत एव । यथा-कश्चिन्नरः स्वाननुभूते पथि पदं निदध्यात् कस्मैचित् कामाय, तत्र सफलतामलभमानो यदि विपरीतमेव किञ्चित्फलं प्राप्नुयात् तदा ब्रूतेनायं खेदावसरः, अनेन कर्मणा लब्धा मया शिक्षा, एवंकरणे एतद् भवतीति । एवं स्वानुभवेन वा नरः शिक्षितो (शक्तः) भवतीति सिद्धम् ।

मन्ये, सर्गादौ पूर्वं स्वानुभवेनैव शक्तिः संपादनीया भवति । आवश्यकवस्तूनामन्वेषणं जीवननिर्वाहाय कर्तव्यत्वेनापतति मनुजस्य कृते । तद्विना संसार-यात्रापि तस्य न चलतीति अस्माकं प्राक्तनैर्ऋषिभिः पूर्वं तादृशां वस्तूनां महता परिश्रमेण गुणदोषा आविष्कृताः । पदार्थद्वयसंयोगेन प्रकटितशक्त्यन्तराणि वस्तून्यपि तैराविष्कृतानि । तान्याविष्कृतानि वस्तूनि, आविष्कार-प्रकाराश्च उपदेशद्वारा असाक्षात्कृतवस्तुधर्मणां सविधे प्रापुः । अयमेव ह्यर्थो भगवता यास्केन निरुक्ते प्रतिपादितः-"साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्म्मभ्य उपदेशेन मन्त्रान् संप्रादुरुपदेशाय ग्लायन्तोवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि चे" ति ग्रन्थेन । धर्म्मशब्देनात्र पदार्थगता शक्तिरपेक्षिता, मन्त्रशब्देन च परामर्शाः । तेन स्पष्टं प्रतीयते यत् साक्षात्कृतपदार्थशक्तिकैर्ऋषिभिरसाक्षात्कृतपदार्थशक्तिका अपि अवरे उपदेशद्वारा तत्तत्पदार्थशक्तिपरिचयेन शक्तिमन्तो (शिक्षिताः) विहिताः । एवं च शिक्षा-सपादनस्य मार्गद्वयं यास्केनापि दर्शितम् ।

यदि दयापरवशेन मानवप्रकृतिपराधीनेन वा परस्मै नोपदिश्येत, जगतो नाद्य तादृशं रूपमुपलभ्येत यादृशं हि दृश्यते । यानि खलु महान्ति नगराणि विशिष्टा गगनचु-

ल्पिनः प्रासादाः, विचित्राण्यद्भुतानि यानानि, यन्त्राणि चात्र संदृश्यन्ते, मन्ये समुज्जृम्भमाणं तदिदं शिक्षाया एव माहात्म्यम्। तदभावे, स्वल्पेस्मिन् जीवने, विचार्यतां नाम, कथं संभवेत्, प्रत्येकं पुरुषः सर्वेषां पदार्थानां गुणदोषौ लाभालाभौ च जानीयादिति। नैतावदेव, अवश्यमुपयोगिनां पदार्थानां शतांशमपि आमूलचूडं स्वानुभवेन न ज्ञातुं शक्यम्। तथा च जीवनस्याल्पत्वात् अनुभवानां चासंख्यत्वात् कस्यापि पुरुषस्य कापि समस्या न निर्णीता भवेत्। तेन सर्गोत्पत्तिकाले या हि मानवानां स्थितिः सैव प्रलयावधि संतिष्ठेत। तस्माज्जगदुन्नतये स्वानुभवप्रकाशनरूपं शिक्षणं कियदुपयोगीति स्वयमेव विचारणीयम्। एवं च कठिनतपसा प्राप्तेन स्वानुभवेन स्वस्मिन् शक्तिसंचये जाते तेनैवानुभवेन परेपि शक्ता विधेया इति शिक्षायाः परमं लक्ष्यम्। तदेव लक्ष्यं मनसि निधाय भारतीयैः पुरातनैर्महर्षिभिर्वेदाः वेदाङ्गानि च समाम्नातानीति उपर्युक्तसंदर्भेण ज्ञातमेव स्यात्।

अपि च-"उपदेशाय ग्लायन्तोऽवरे" इत्यादिग्रन्थेन तु तेन एतस्या द्विविधाया अपि शिक्षाया अस्तित्वं वेदवेदाङ्गादिभ्योपि प्राचीनमिति सघण्टाघोषमभाणि। बिल्मशब्दस्य व्याख्यानं 'बिल्मं भिल्मं भासनमिति' यास्केनैव कृतम्, तेनायं समुदायार्थः सिद्ध्यति यत्-पूर्वं तु साक्षात्कृतधर्माण उपदिष्टाः। किन्तु गच्छति काले उपदेशानां बाहुल्येन तद्धारणेष्वशक्ता जना यदाजनिषत, तदा तेषां कृते ग्रन्थरूपेण उपदेशाः संगृह्य रचिताः ते एवोपदेशाः वेदाः, वेदाङ्गानि च। यदि नाम एते उपदेशाय ग्लायन्तोवरे ऋषयो ग्रन्थरूपेण तान् न रचेयुस्तदा तस्मिन्नतिप्राचीने काले कृतानामाविष्काराणां बोधोस्माकं कृते दुष्करः स्यादिति सोयं तृतीयः प्रकारो ग्रन्थनिर्माणरूपः शिक्षायाः। अस्तु, एवं स्वानुभवरूपं शिक्षणं तु सर्गप्रारम्भात् प्रचलत्येव, किन्तु परस्मै स्वानुभवकथनं तथा परेभ्यो गुणादानरूपमपि शिक्षणं विश्वतः प्राचीनतमज्ञानराशिभूतवेदकालादपि प्राचीनमिति निःशङ्कं शक्यते वक्तुम्। तस्माच्छिक्षाया अवधिभूतस्य समयस्य (प्रारम्भसमयस्य) निर्णयो न सुकरः। वेदकालात्प्राक् शिक्षायाः किं स्वरूपम्, कथं च तस्मिन् समये तस्याः प्रगतिरित्यादिविषयेपि न निश्चयेन किमपि वक्तुं शक्यम्। आम्, वेदकालादारभ्य सूक्ष्मेक्षिकया तद्विचारे, तत्स्वरूपं ज्ञातुं शक्यते। यतो हि वेदकालेपि तस्याः शिक्षायाः प्रौढं रूपं वयमुपलभामहे। तेन शिक्षास्रोतसः प्रधानकेन्द्राद् वेदादारभ्यैव विचारयिष्यामः-तदारभ्य शिक्षया कानि कानि रूपाणि गृहीतानि, कस्मिन् कस्मिन् काले किं किमुद्दिश्य सा प्राचरत्, अद्यतनीनमस्या रूपं कस्मात्कालात्प्रचलितमिति।

वेदकाले अर्थप्रधानायाः शिक्षायाः प्रचार आसीदिति तु निर्विवादमेव तेन तस्मिन् विषये न किमपि वक्तुमिच्छामः। वक्तव्यं केवलमेतावदेव, यत्तस्मिन् समये देशस्योन्न-

तिकामैः परःसहस्रैः पुरुषैः पदार्थविद्यान्वेषणपरैर्महता परिश्रमेण ते ते पदार्था अन्वेषिताः, येषां स्मरणमात्रेण भारतीयैः सगर्वमुन्नेतुं शक्यते शिरः। यस्मिन् समये समस्तेपि भूमण्डले अज्ञानान्धकारः समुज्जृम्भते स्म, तस्मिन् घोरतमे समयेऽस्माकं पूर्वजैर्भारतीयैस्तादृग्विज्ञानराशिराविष्कृतः यमवलोक्य विज्ञानस्य परां काष्ठामुपगतेपि काले महामहावैज्ञानिका अपि चमत्कृता भवन्ति। वर्तमानयुगस्य भारतीयो महावैज्ञानिकः श्रीजगदीशचन्द्रवसुमहाभागः, येन हि वनस्पतीन्द्रियविज्ञानमाविष्कृतम्, स्वविज्ञानान्वेषणस्य मूलं स्रोतो महाभारतस्य वनस्पतिविवेचनप्रकरणमुररीकरोति। यत्र हि तैस्तैर्हेतुभिर्वनस्पतीनां सेन्द्रियत्वं साधितं भगवता व्यासेन। अस्तु, कथनस्यैतावदेव तात्पर्यं यद् वेदकालोयं प्राधान्येन पदार्थान्वेषणकाल आसीत्।

तस्मिन् काले प्रचलितेऽर्थप्रधानशिक्षाप्रकारे सर्वतः प्रथमं "सर्वारम्भास्तण्डुलप्रस्थमूलाः" सिद्धान्तानुसारं प्राणधारणोपयोगिपदार्थान्वेषणमेव प्राधान्येन प्राविशत्।

अत एवादिमज्ञानराशिरूपेण स्वीकृते ऋग्वेदेपि प्रथममग्न्यादिपदार्थानामेव स्तुतिरुपलभ्यते। ऋग्वेदस्यादिमो मन्त्रः 'अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्' इति अग्निमेव स्तौति। न केवलमेतावदेव, चतुर्णामपि वेदानां प्रारम्भिका मन्त्राः—अग्निजलादिपदार्थानेव स्मरन्ति। "अग्न आयाहि वीतये" इत्यादिरग्निम्, 'शन्नो देवीति' अपः, 'इषेत्वोर्ज्जेत्वाऽवेति' पलाशशाखाम्। तान् प्रति प्रार्थयन्ते च—'शं नो भवतु' 'यजमानस्य पशून् पाही' ति। एवं वेदे पाठभेदेनानेकस्थले विद्यमानः—'आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्ज्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।' शु० यजुर्माध्य० सं० २२। २२ इति मन्त्रोपि 'योगक्षेमो नः कल्पता'मित्येव वाञ्छति। अनेनैतद् मन्तव्यं भवति यत्पूर्वमुदरदरीभरणचिन्ता, ततोन्येषां विचाराणामवसरः। अत एव जीवनोपयोगिपदार्थान्वेषणेन भारतीयानामुदरभरणचिन्ता यदा प्रशान्ता तदैव पदार्थान्तरान्वेषणे तेषामवधानं जातम्। पदार्थान्तरेष्वपि तेषु पूर्वं व्यवहारोपयोगिनां वस्तूनामन्वेषणं तैः प्रारब्धम्, ततोन्येषाम्। तदनुसारमेव ज्येष्ठत्वकनिष्ठत्वादिव्यवहारसिद्धये प्रचलितं कालस्य कालावयवानां चान्वेषणं वेदादिग्रन्थेषूपलभामहे। अस्तु, भारतीयशिक्षाया एतदेव वैशिष्ट्यम्—यद् व्यवहारसिद्धये प्रकल्पितेषु वस्तुष्वपि न केवलं कपोल-कल्पना, अपितु तत्रापि सोपपत्तिकं विज्ञानं प्रविष्टं वर्तते। अस्माकं पक्ष-मास-संवत्सरादीनां तिथिनक्षत्रादीनां च कल्पितो व्यवहारोपि प्रत्यक्षतया गगनचारिणोः सूर्याचन्द्र-

मसोर्गत्या दर्शयितुं शक्यते, न तथान्येषां तारिकादीनाम् व्यवहारः। आस्तां तावत्।

वेदकाले अस्माकं शिक्षायाः प्रचारेण समाजस्य कीदृग् रूपमजनिष्टेति उपर्युक्तेनाब्राह्मन् ब्राह्मणो ब्रह्मवर्चसीति मन्त्रेणापि ज्ञातुं शक्यते। न केवलं समाजस्योच्छृंखलतैव दूरापास्ता, अपि तु वर्णव्यवस्थाया अपि स्थापना सम्यक्तया संजाता दृश्यते। ज्ञानबलयोः सत्तायां कस्यापि देशस्य व्यापारिकी शक्तिः सुतरामुन्नता भवतीति तदर्थं न प्रयतनापेक्षेति विदितप्रायम्। अत एवान्येषु बहुषु मन्त्रेषु चतुर्षु वर्णानामसु शृङ्गग्राहिकयोक्तेष्वपि मन्त्रेस्मिन् केवलं ब्राह्मणराजन्ययोरेव ब्रह्मवर्चःशूरत्वे अपेक्षिते। ब्राह्मणस्य ब्रह्मवर्चस्कामनया शिक्षादानेनुशासने च तस्याधिकारः स्पष्टमेव दर्शितः। एवं वीरत्वादिगुणयुक्तस्य यजमानपुत्रस्य सभेयत्वं वाञ्छतानेन सभ्यताया अपि प्रचारस्तस्मिन् समये आसीदिति स्फुटमेव प्रकटीकृतम्।

एवं जीवनोपयोगि-व्यवहारोपयोगिपदार्थानामन्वेषणायां प्राचुर्येण जातायां जीवनस्य चरमलक्ष्यस्य सिद्धये उपयोगिनामात्मादिसम्बन्धिविचाराणां जन्म। सोयं वेद-भाग उपनिषन्नाम्ना प्रसिद्धः। अत एवोपनिषद् भागो वेदान्तशब्देनोच्यते। ज्ञातव्यविषयेषु अन्तिमोयं विषयो वेदान्तो नाम। नह्यतः परं किमपि ज्ञातव्यं भवति। इदमत्रावधेयम्-जगतः प्रधानतया द्वे रूपे। बाह्यमाभ्यन्तरञ्च। दृश्यमानं यत्किञ्चिदपि, बाह्यरूपमस्य। तस्मिन् विषये आपाततो दृष्टिपातो भवतीति तत्पूर्वं विचारपथाऽरूढं भवति। किन्तु तदतिरिक्तमपि अस्ति किञ्चिदिन्द्रियातीतमित्यसंदिग्धम्। तदेवान्तरं जगत्। अन्वेषणपरया मानवप्रकृत्या प्रेरितः पुरुषो यथा बाह्यं जगदन्वेषयति तथाभ्यन्तरं जगदपि। किमिदं चैतन्यम्? कानि खल्विन्द्रियाणि, यैर्वयं बाह्यवस्तून्युपभुञ्ज्महे? इन्द्रियविषययोः सम्बन्धेपि हेतुना केन कदाचिद् विषयसाक्षात्कारः कदाचिच्च नेत्यनेकशः प्रश्नाः प्रतिदिनमस्माकं चेतसि उद्यन्ति। तद्विषयकविचारा एव दर्शनशास्त्रस्य पश्चाद्रूपं जगृहुः, ये च पूर्वं वेदस्योपनिषन्नामकेन्तिमभागे निबद्धाः सन्ति। यद्यपि दार्शनिका एते विचारा जगतः प्रत्यक्षरूपेण न कमप्युपकारं कर्तुं शक्तास्तथापि यावदेषां समस्या न विनिर्णीता भवेत् तावत शान्तेः सुखस्य च साम्राज्यं न स्थापितं स्यादिति तेष्वप्यवधानं युक्तमेवास्मत्प्राचाम्।

जीवनस्य धर्म्मार्थकाममोक्षरूपं लक्ष्यचतुष्टयं शास्त्रेषु प्रतिपादितं दृश्यते। यद्यपि चरमलक्ष्यसिद्ध्यर्थं निवृत्तिमार्गोपदेशस्यावश्यकत्वम्, तथापि लक्ष्यत्रयमुपेक्ष्य न चतुर्थे शक्यते गन्तुमिति तदर्थं लौकिकशास्त्राण्येवाध्येतव्यानि भवन्ति पूर्वम्। ततो वयसः परिपाके, प्रवृत्तिमार्गाद् विरते नरे दर्शनशास्त्रमिति-आश्रमव्यवस्थापि तस्मिन् काले प्राचलत। एवं क्रमशः शिक्षायाः प्रचारे प्रवर्द्धमाने व्यतीते च चिरकाले, लोके जातेषु च बहुषु विद्वत्सु, गुणादानकाङ्क्षाप्रेरिताः पुरुषाः तेषां व्यावयशसामाश्रमानु-

द्विश्य गत्वा तत्रोषित्वा च शिक्षां गृह्णन्ति स्म। तस्मिन्नेव समये उपनयनसंस्कारस्य जन्म। संस्कृतमेव वस्तु गुणाधानयोग्यं भवति। यथा अधौत-वाससो रञ्जनं न सम्यक्तया संभवति एवमेवासंस्कृतो बालोपि नाध्येतुं शक्त इति तं संस्कृत्य स्वसमीपे प्रापयन्ति स्म अध्यापकाः, सोयं संस्कारः उपनयननाम्ना प्रसिद्धिमाप। उपनयनसंस्कारपूर्वकाध्यापनेनाध्यापके च आचार्यत्वं ख्याप्यते स्म। तद्धि आचार्यत्वं तात्कालिकः प्रतिष्ठापक उपाधिरासीत इति 'उपनीय तु यः शिष्यमित्यादि' मनुवानक्ये प्रतीयते। अस्तु तस्मिन् समयेपि तेषां वृत्तिरूपेणाध्यापनं न प्रावर्तिष्ट। वृत्तिचिन्तायां च सम्यक्तया पदार्थान्वेषणं न कर्तुं शक्यम्, तच्छिक्षा च न दातुं शक्येति तात्कालिकै राजभिः तेषां कृते वृत्तिनियमा विहिताः। अपि च ब्राह्मणैरेवाध्यापनं विधेयमित्यपि नियमः कृतः। अन्यथा वृत्तिलोभेनान्यैरपि तथा कर्तुं सुकरम्। एवं भारते राज्यशासनव्यवस्थाया दृढीभावे, वर्णाश्रमव्यवस्थायाश्च समाजबन्धने सुदृढे ब्राह्मणेष्वेव सर्वशिक्षाभार आपतितः। ऐहिकामुष्मिकसर्वविषयविशेषज्ञेन तेनैव स्वं स्वं चरित्रं सर्वेभ्यः शिक्षणीयम्-इति। एष प्रकारो मनोः शासनकाले सम्यक् प्रचलित आसीदिति तस्य "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः" इत्यनुशासनेन स्पष्टं ज्ञातुं शक्यते। यथा हि सर्वमानवाः अग्रजन्मनः सकाशादेव शिक्षेरन्निति तस्याज्ञा तथैव भूसुरान् प्रत्यपि तस्य परामर्शः "ब्राह्मणस्य तु देहोयं क्षुद्रकामाय नेष्यते। कृच्छ्राय तपसे चैव प्रेत्यानन्तसुखाय चे"ति। क्षुद्रकामशब्देनात्र इन्द्रियतृप्तिकामा गृहीताः। ब्राह्मणेनापि सर्वजनोपकारिपदार्थान्वेषणे प्रवर्तितव्यम्। न चेन्द्रियतृप्तिमात्रकामनया साधारणेषु कार्येषु-इति तस्य हृदयम्। एवं शिक्षायां राजानुशासनेन सम्यक् प्रचलितायां यदा तस्याः प्रचारो बाहुल्येन संजातस्तदा तेषु साधारणेषु गुरुकुलेषु ज्ञानपिपासा न शशाम बहूनां धीमतां छात्राणाम्। एतादृश्यां परिस्थितौ तैः कुलपतीनामाश्रमेषु गत्वाधीयते स्म। एते हि कुलपतयो धीरधिषणावधीरितसुरगुरवः शेमुषीमन्तोनुभविनो विद्वांस आसन्। ते यावज्जीवं कृतपरिश्रमेण लब्धान् सिद्धान्तान् सरलसरलोपायैः शिष्यांस्तथावगमयन्ति स्म यथा ते तात्त्विकं ज्ञानमलभन्त। इयं कुलपतिपरंपरा काव्यनाटकेषु बहुषु वर्णितोपलभ्यते। कविकुलगुरुः कालिदासोपि अभिज्ञानशाकुन्तले नाटके तृतीयेङ्के कण्वस्य कुलपतित्वं स्मरति 'सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम्' इति।

तेषु कुलपतीनामाश्रमेषु अर्थप्रधानैव शिक्षा प्रावर्तिष्ट। मन्ये, बहुत्र स्थानेषु पदार्थपरीक्षणार्थं विज्ञानशाला अपि स्थापिता आसन्। यासु विद्वांसः पदार्थानां प्रायोगिकीं परीक्षां कुर्वन्ति स्म। यदि नैवं स्यात् अस्माकमायुर्वेदशास्त्रं कथं संगृहीतं स्यात्। यस्मिन् हि शास्त्रे वनस्पतीनां नामानि, तेषामास्वादः, तत्रस्था गुणाश्च शृङ्गग्राहि-

कया दर्शिताः। केषां केषां संमिश्रणेन किं किं वैशिष्ट्यमुत्पद्यत इत्यपि तत्र प्रतिपादितं वर्तते। प्रायोगिकशिक्षणाभावे तु नैतत्कथमपि संभवि। एवमेव शरीरस्याभ्यन्तरा अवयवाः प्रत्यक्षतो न यावद् दृष्टा भवेयुः, तावत् शल्यशास्त्रस्य न कश्चिदप्युपयोगः। एवमेव—पुराणादिषु यत्र तत्र प्रतिपादिता भूगर्भविद्याः शिल्पशास्त्रं च न केवलेन वाचिकाध्ययनाध्यापनेन ज्ञातुं शक्यमिति तान्येतानि सर्वाणि विज्ञानशास्त्रानामस्तित्वं दर्शयन्ति।

योगजबलेनैव सर्वमेतल्लब्धं मनुषे चेत् क्रमशो विकासः पदार्थानां शास्त्राणां च यद् दृश्यते तदनुपपन्नं स्यात्। तदर्थं ज्योतिःशास्त्र एव दृष्टिपातो विधेयः—वर्तमानपञ्चाङ्गेषु निर्दिष्टा योगकरणादयो न वेदेषु कुत्राप्युपलभ्यन्ते। एवं मेषादिराशीनां नामान्यपि न केवलं वेदेषु, अपितु महाभारतेपि नैव दृश्यन्ते। वाराणां तु कथैव का। अस्मासु भारतीयेषु अद्यतने मुख्यतया प्रचलितो तिथिव्यवहारोपि पुरा नासीत। यद्यपि महाभारतकाले तिथिव्यवहारः प्रचलितः—प्रायः, तथापि न स सार्वदेशिकः। तस्मिन् समये चन्द्रमसो नक्षत्रभुक्त्यैव विशेषेण कालगणना दृश्यते; तथा हि 'कौमुदे मासि रेवत्यां शरदन्ते हिमागमे। स्फीतसस्यसुखे काले।" उद्योगपर्व, अध्या० ८३।७ एवं 'तेषां पुण्यतमा रात्रिः पर्वसन्धौ स्म शारदी। तत्रैव वसतामासीत् कार्तिकी जनमेजय।" वनपर्व, अध्याय १८२।१६ अत्र तिथिशब्दो न दृश्यते। बहुषु स्थलेषु तिथ्याद्युल्लेखाभावेन क्वाचित्कस्य तस्योल्लेखस्य पश्चाद्भावित्वं कल्पयन्त्याधुनिकाः। अत एव भारत-महाभारतशब्दयोरपि संगतिरिति तेषामभिप्रायः। अस्तु, कथनस्य तात्पर्यं केवलमेतावदेव, यन्महता परिश्रमेणान्वेषयितृभिरेवाविष्कारः पदार्थानां पूर्वजैरस्माकं कृतः अत एव ग्रहणादीनां ग्रहगतीनां विषयमवलम्ब्य निर्मितेषु गणितेषु कालान्तरे महदन्तरमुपलभ्यते। यदि तु योगबलेनैव सर्वमेतत्स्यात् स्वल्पान्तरमपि न संभवेत्। आस्तां तावत्, प्रकृतमनुसरामः।

सोऽयमध्ययनप्रकारो बौद्धकालावधि सम्यक्तया प्राचलत्। बौद्धकाले च स प्रसरन् रूपान्तरं जग्राह। यद्यपि बौद्धशासनद्वारा शिक्षाव्यवस्थायाः पूर्वमपि गुरुकुलेषु गुरुशिष्यभावेनाध्ययनाध्यापनं प्राचलदेवेति पूर्वं निवेदितप्रायम्, किन्तु बौद्धराज्याश्रयेणैव शिक्षया शिक्षणालयानां स्वरूपं गृहीतम्। बौद्धकाले देशेस्मिन् महामहाविद्यालयानां स्थापना संजाता। तेषु पाटलीपुत्रस्थनालिन्दाविश्वविद्यालयस्य काश्मीरप्रान्तस्थतक्षशिलाविश्वविद्यालयस्य च नाम्नी उल्लेखनीये। येषु परःसहस्राश्छात्राः सुशिक्षां गृह्णन्तो निवसन्ति स्म। एवमन्यान्यप्रान्तेष्वपि विद्यालयाः स्थापिता अभवन्। तस्मिन् समये माण्डलिकै राजभिरपि स्वस्वराज्ये प्रजाशिक्षणार्थं शिक्षालयाः स्थापिताः, तेषु शिक्षालयेषु स्वस्ववर्णोचिताः शिक्षा ब्राह्मणैरदीयत। तत्रस्थानां शिक्षकाणां भोजनाच्छाद-

नव्यवस्था च राज्यद्वारा सबहुमानमभवत्। किं बहुना, राज्यशासनव्यवस्थापि ब्राह्मणानामधिकार आसीत्।

यत्र तत्र संस्थापितेषु तेषु तेषु विद्यालयेषु दर्शनशास्त्रम्, नक्षत्रविद्या, भूगोलविद्या, भूगर्भविद्या, वनस्पतिशास्त्रम्, अर्थशास्त्रम्, कामशास्त्रम्, धर्मशास्त्रम्, नीतिशास्त्रम्, शिल्पशास्त्रम्, संगीतशास्त्रमित्यादयो बहव आवश्यकविषयाः पठ्यन्ते स्म पाठ्यन्ते स्म। इतिहासशिक्षापि भारते पुरावर्तत एव। अत्र पुराणमहाभारतादीनुदाहरणत्वेनोपस्थापयितुं शक्नुमः। मध्ययुगेपि, यस्मिन् युगे भारतं रणाङ्गणमेव प्रायः संजातम्, युद्धशिक्षां विहाय शिक्षान्तराणि प्रायो विरलतामेव भेजिरे, तादृशे कठिने युगेपि खण्डखण्डरूपेणास्य देशस्येतिहासः चारणानां सविधे सुरक्षित आसीत्। हन्त! अद्यत्वे संस्कृतविद्यालयेषु इतिहासस्य पठनपाठनस्य व्यवस्थैव नास्ति। अस्ति कुत्रापि, तत्रापि न तथ्यांशपरिपूर्णः पाठ्यते इतिहासः। सत्येतिहासपठनेन कार्यदक्षता देशोन्नतिवाञ्छा च समुदेति छात्रहृदयेषु। किन्तु नातः परं खेदास्पदम्, यदद्यत्वे आङ्ग्लेषु संस्कृतेषु वा विद्यालयेषु पाठ्यमानेनेतिहासेन जातमिथ्यासंस्काराः भारतमहामहानेतारोपि भारतीयानां सर्वस्वभूतान् रामकृष्णादीनपि नैतिहासिकत्वेन स्वीकुर्वन्तीति। यस्य देशस्यावनतिः कर्तव्या भवेत्तस्येतिहासं नाशयेदिति सिद्धान्तः सत्यमेव भाति। अन्यथा स्वपूर्वजादीनां गुणगणगरिम्णो-त्साहितो नरः किं किं न कुर्यात्। अस्तु.

इदमपि न विस्मरणीयम्, सभ्यताप्रचारसमकालमेव यदा भारते वर्णाश्रमव्यवस्थायाः सूत्रपातः संजातस्तत्प्रभृत्येवात्र राजतन्त्रशासनं प्रचलितम्। राजन्या एव भुवं शासति स्म। अतस्तत्तत्काले वर्तमानानां राज्ञां शिक्षायामपि प्रभावो दुर्निवारः। एष खलु सिद्धान्तः यद् राज्यव्यवस्थायाः, राजानुकूलधर्मस्य, तदीयनीतेश्च न केवलं शिक्षायाम्, अपितु तात्कालिकप्रत्येकवस्तुषु प्रभावो भवत्येव। राजाश्रयं विना कीदृश्या अपि उपयोगिन्याः शिक्षायाः प्रसारो न भवितुमर्हति। 'यथा राजा तथा प्रजाः' इत्याभाणकमेतन्मूलकमेव। अत एव यादृशा राजानो यस्मिन् समये भुवमशासिषुः, तस्मिन् समये तादृश्येव शिक्षा लोके प्राचुर्येण प्रचलिता। अतिप्राचीने जनकस्य राज्ये राजनीतेर्विज्ञानस्य च प्रचारमवलोक्य तस्य विचाराणामध्ययनमतीव सुकरम्। अत एव तदीयशासनकाले याज्ञवल्क्यसदृशस्य वैज्ञानिकस्यापि प्रादुर्भावो दृश्यते। एवं नातिप्राचीनसमये भोजशासनं स्मरणार्हम्। कवीनां यावती सृष्टिस्तस्य शासनकाले, मन्ये नाद्यावधि तावती संजाता। तदेवं राज्ञां प्रभावेण 'कालो वा कारणं राज्ञः राजा वा कालकारणम्। इति ते संशयो मा भूत् राजा कालस्य कारणमि'ति महाभारतीयसिद्धान्तानुसारम्, समये समये शिक्षायास्तारतम्यभेदेपि बौद्धकालं यावत् पदार्थगु-णादीनामन्वेषणप्रधाना शिक्षानर्गलं प्राचरदेव।

यतो हि रुचिभेदेपि राज्ञां शिक्षाप्रचारध्येयं प्रजासु सुखशान्तिस्थापनमेकमेवासीत्। प्रजानां समृद्ध्यैवास्माकं समृद्धिरिति तेषां विश्वासः, तेन तदर्थमेव तैर्यतितम्। अद्यतनीनाङ्ग्लशिक्षाया ध्येयं तु राज्यव्यवस्थासंचालनार्थं कर्मचारिगणनिर्माणमेव, नान्यत्। संस्कृतशिक्षा तु लक्ष्यमुल्लङ्घ्य निर्गतेति न किमपि तत्र वक्तव्यम्। अस्तु, बौद्धकालेपि अहिंसाया अतिप्रचारेण यद्यपि बहूनां वैज्ञानिकविवेचनानां मुखमुद्रणं संजातम्, नष्टा च भारतीया यज्ञविद्या, शल्यशास्त्रस्योन्नतिस्तु दूरापास्ता, प्रचलितप्रचारोपि विलयं गतः, दार्शनिकसिद्धान्तेषु मतभेदोप्याशातीतः संजातः, वेदेषु वर्तमाना साधारणजनतायाः श्रद्धापि प्रायो विलयं गता, सर्वमेतत्संजातं किन्तु कलाकौशलादीनां देशसमृद्धिकारिणां कर्मणां जीवनोपयोगिपदार्थपरिचयप्रकाराणाञ्च नोच्छेदो जातो येन अर्थकष्टेन पीडिता जनता विप्लुता भवेत्। अस्तु, कथमपि प्रचलिते बौद्धविप्लवे अहिंसाप्रचारप्राधान्येस्मिन् देशे आत्मतत्त्वविवेचनं प्राधान्येन पठनपाठनस्य विषयः संजातः। तदेव धर्मस्य रूपं जग्राह। एवं च बौद्धधर्मप्रचारकालादारभ्यावश्यकानां विद्याविष्काराणां तु समाप्तिप्रायमभूत्। धर्मनाशममहमाना आर्याः स्वधर्मवैशिष्ट्यप्रतिपादने बद्धपरिकराः, प्राणपणेनाप्यार्यसभ्यतेयं रक्षणीयेति कृतप्रतिज्ञाः यत्र तत्र बौद्धैः सह पणबन्धेन शास्त्रार्थं कुर्वन्ति स्म। स एव वादकालो वादग्रन्थनामाविर्भावकालः। हन्त! बौद्धभिक्षूणां पराजयस्त्वस्माभिः कृत एव, किन्तु ततः प्रभृति स्वपथाद्विच्युता वयं नाद्यावधि पूर्वपरिचिते पथि समागताः स्मः।

यद्यपि बाह्यजगतोन्वेषणं परित्यज्यान्तरे जगति आर्याणामभिनिवेशो बौद्धकालादजनि, तथाप्यर्थप्रधाना एव शिक्षा तस्मिन्नपि समये प्रचारमाप। केवलं शाब्दे एव कलहे न जीवनं यापयन्ति स्म ते। किन्तु वादग्रन्थानां पठनपाठनेन छात्राणां विदुषां च विचारो वादविषयमवलम्ब्यैव ऊहापोहे प्रवृत्तो न केवलं जैनबौद्धयोर्वैपरीत्यं भेजे, अपि तु आर्यसिद्धान्तेषु परस्परमपि वादकलहे परिणतः। अस्मिन् वादयुगे बहवो ग्रन्थाः स्वस्वसिद्धान्तानुसारं नूतना निर्मिताः। बहवश्च प्रामाणिका ग्रन्थाः प्रक्षेपपद्यैर्दूषिताश्च। मिथ्याग्रहवशात्तथ्यांशज्ञानेपि तदपोहने प्रवृत्तं तैरिति भारतीयशास्त्राणां बहु-विपर्ययः संजातः। हन्त! सेयं वादप्रणाली सर्वशास्त्रेषु प्रविशन्ती नाद्याप्यस्मान् परित्यजति चिरपरिचिता।

कथमपि प्रशान्ते बौद्धविप्लवे पुनरपि भारते ब्राह्मणसाम्राज्यं स्थापितमभूत्। प्राणपणेनापि ब्राह्मणैरार्यसभ्यतेयं रक्षितेति क्षत्रियतक्षजैर्वैश्यवर्य्यैश्च संमानिता ब्राह्मणा आश्रयमलभन्त। देशसमृद्धिस्तु न कुत्रापि गतासीदिति पुनरपि शान्तेः सुखस्य च साम्राज्यं स्थापितमभूत्। किन्तु स्वपथाद् विच्युता विप्राः पूर्वस्मिन् पथि न गत्वा काव्यादिनिर्माणे प्रवृत्ताः। बौद्धकालसमाप-

नाद् यवनराज्यकालप्रारंभपर्यन्तं बहवः काव्यनाटकग्रन्थाः प्रादुर्भूताः। अलङ्कारशास्त्रं च महतावेशेन प्रचारं प्राप। तस्मिन्नपि काले देशेस्मिन् महान्तो विद्यालया आसन्। कादम्बरीगद्यकाव्यनिर्मातुः श्रीबाणभट्टस्य समयेपि कश्चिद् महान् विश्वविद्यालय आसीत् इति राजकुमारस्य श्रीचन्द्रापीडस्य शिक्षावर्णनावसरे कृतेन शिक्षणालयस्य, शिक्षाव्यवस्थायाश्च वर्णनेन शक्यतेनुमातुम। बाणभट्टस्य कादम्बरीनिर्माणकाल ईशवीयसप्तमशताब्दी परिकल्प्यते। तथा च तस्मिन्नपि समये भारते वर्णाश्रमानुकूला व्यवहारोपयोगिनी च शिक्षा प्रचलितासीदिति वक्तुं शक्यते।

यद्यपि क्षत्रिया वैश्याश्च स्वस्ववर्णानुकूलं शिक्षणमेव गृह्णन्ति स्म तस्मिन् युगे, किन्तु ब्राह्मणाः केवलं विवाद-विषये रता निर्वाहाय तानाश्रिताः स्वजीवनं यापयन्ति स्म। यद्यपि जगद्गुरुत्वं स्मृत्यादिषु प्रतिपादितं तेषां तस्मिन् समये नष्टप्रायमभूत, तथापि धर्मोपदेशकत्वं तेषु अक्षुण्णमेवासीत् धार्मिक-कार्येषु विनियुक्तास्ते याजनप्रतिग्रहादिभिः स्वकुटुम्बमबिभरुः। एवं व्यतीते समये भारतीयानां क्षत्रियाणां परस्परमनोमालिन्येन क्षीणशक्तिकत्वाद् यवनराज्यमत्र स्थापितमभूत्। विलासि..नां यवनसम्राजां शासनकाले तेषां विलासभावनापूर्त्यै कलात्मकस्य शिक्षणस्य तु प्रचारः प्राचलदेव, किन्तु आर्याणां वैदिकविज्ञानप्रचाराय नादीयत हस्तावलम्बस्तैः। प्रत्युत वेदादिग्रन्थेषु विद्विषन्तस्ते तान् भस्मसात् विदधति स्म। तस्मिन् समयेपि महत् कष्टमनुभूयापि ब्राह्मणैः स्वसंस्कृतिरक्षणार्थं वेदादिग्रन्थाः कण्ठस्थीकृताः। ततः प्रभृति वेदस्याध्ययनाध्यापनं नार्थमनुसृत्य प्रचलति अपितु पाठमात्रेणैव। एवं चिरकालं यावत् पारतन्त्र्यमनुभूयापि ब्राह्मणैरेभिः स्वग्रन्थरक्षा तु कृता किन्तु विज्ञानमेषां लुप्तप्रायमभूत्।

एवं चार्थप्रधानशिक्षायां समाप्तायां परस्परकलहेन च शब्दप्रधानशिक्षायाः प्राधान्यमभूद् यवनशासनकाले। ततः प्रभृति शब्दप्रधानशिक्षैव प्रचलति। न केवलमेतावदेव, अपि तु तादृश्यां शब्दप्रधानशिक्षायां धर्मबुद्ध्या ब्राह्मणानां महानभिनिवेशः संजातः। वेदादिग्रन्थानां पारायणेनैव धर्मः, धर्मस्य च मोक्षेणैव साक्षात् सम्बन्ध इत्यपि तेषां विश्वासः समजनि। वस्तुतस्तु धर्मो हि नाम जगतः प्रतिष्ठा'। धर्मस्यार्थेन कामेन च यावान् संबन्धस्तावन्न मोक्षेण। एवं च पूर्वोक्ते लक्ष्यचतुष्टये युग्मद्वयं परिकल्प्य धर्मस्य मोक्षेणैव साक्षात्संबन्धः, अर्थस्य तु कामेनेति वदन्तो यावन्मात्रसंस्कृतवाङ्मयस्य मोक्षमेव लक्ष्यं कथयन्तः पण्डितप्रकाण्डा एव भारतस्य भौतिकविज्ञानावनतेः कारणमिति नात्र सन्देहलेशोपि। यावन्मात्रसंस्कृतवाङ्मयस्य धार्मिक-रूप-कल्पनेपि मोक्ष एव लक्ष्यमिति तु नोचितम्। यतो हि जगतः स्थितिरेव धर्माधीना अतोऽर्थकामाभ्यामपि धर्मस्य दृढतमः संबन्धः। इत्थं यावज्जीवं मोक्षपाठ. पाठयन्तोपि प-

ण्डितप्रकाण्डाः, ये चात्मनो धार्मिकान् मन्वते, स्वकीय-जीवनस्य प्रतिक्षणमर्थेन कामेन च संबन्धं स्थापयन्ति। किन्तु तद्विषये ऽशिक्षिता वराका न जानन्त्यर्थार्जनोपायम्। केवलं धनप्राप्तमधुरवाञ्छया धनिकद्वाराणि सेवमानाः समये समये तैस्तिरस्क्रियमाणाश्चारहरहं विलोक्यन्ते। यदि नाम नैतत सत्यम्, पृच्छ्यते को हि नाम धर्मधुरीणो विद्वान् गार्हस्थ्यमुपवसन् न ददाति स्निग्धं चक्षुरर्थे च कामे च? तदा भारतीयसंस्कृतिरक्षानाम्ना प्रवञ्चनामात्रं कुर्वाणा भारतस्य भाविब्राह्मणसन्ततेः कर्णधारास्तां दारिद्र्यसमुद्रे पातयितुं प्रवर्तन्ते? पूर्वं निवेदितमेव यत् 'शिक्षा हि नाम सामर्थ्योत्पादनम्' सामर्थ्यं चापारतन्त्र्येण, एतत्तु सुखेन प्रतिष्ठया च जीवनयापनरूपमेव। यया शिक्षाभासया शिक्षितंमन्यो जनः स्वावलम्बेन जीवनं यापयितुं न समर्थः सा नाम किं शिक्षा? अद्यत्वे तु शिक्षितः सर्वथा पारतन्त्र्येणैव निर्वोढुं शक्तः। न हि तादृशः कश्चिद् विश्वविद्यालयो भारते वर्षे, यत्र छात्राः स्वावलम्बिजीवनयापनाय शक्ता विधीरयेन्। तदा तेषां क उपयोग इति तु कथान्तरं किन्तु तेषां स्नातकाः कया शक्त्या संपन्ना भवन्तीत्यपि वयं न जानीमहे।

यद्यपि शिक्षायाः केवलमर्थप्राप्तिरेव न लक्ष्यम्। 'शिक्षा तु सामर्थ्यमुपार्जयन्ती जागर्ति कल्याणपरम्परायै' इति सर्वमतसिद्धं हि तस्य लक्ष्यम्। तल्लक्ष्यं तु दूरापास्तम्। आपाततो दृष्टं द्रव्यप्राप्तिलक्ष्यमपि लक्ष्यं यदि शिक्षायाः स्वीक्रियेत, हन्त! तदपि तु भारतीयशिक्षणालयेषु प्रचलितायाः शिक्षाया न सम्भवि। यदि मादृशा विद्यालयस्नातकाः किञ्चिल्लभन्ते नैतदर्जनम्, अपि तु राज्ञां धनिकानां च कृपाकटाक्षप्रसादभूतमिति मन्ये। क्षणं विचार्यतां नाम, यस्मिन् कर्मणि नियुक्ता भवन्तो वेतनं लभन्ते तत्र यदि भवन्तो नैव विनियुज्येरन् एतया शिक्षया किमुपार्जयितुं शक्येत भवद्भिः। अस्तु,

भारतीयाः संस्कृतज्ञा महतावेशेन प्रतिपादयन्ति यदियं संस्कृत-भाषा पुरा राष्ट्रभाषासीदिति। नास्ति मे काचिद्विप्रतिपत्तिरत्र किन्तु प्रष्टव्यं केवलमेतावदेव यदस्या मोक्षसाधने प्रवृत्ता ग्रन्थाः वादग्रन्था एव वा साहित्यम्? शृङ्गारादिरसप्रधानकाव्यैर्वा सर्वाङ्गीणतास्याः? उतान्यासामपि विद्यानां तया भाषया प्राकाश्यं संजातम्? न जातमिति ब्रूषे चेद् वर्षसहस्रैरपि, युक्तिलक्षैरपि राष्ट्रभाषात्वमस्या नोपपादयितुं शक्यम्। ओमिति ब्रवीषि चेत्तदा क ते विषयाः? तेषामन्वेषणं प्राणपणेनापि संपादनीयमस्माभिः। ततोऽप्यधिकं यदन्यदेशेभ्यो लभ्यते तदपि स्वभाषापरिपुटेनात्मसात् करणीयम्। पूर्वमस्माकं पूर्वजैस्तथा कृतमपि। ज्यौतिषेजातकविद्या अन्येभ्योऽपि गृहीतात्मसात्कृता च। येन हि संस्कृत-भाषा संजीव्यात्, भारतं च भारतं स्यात्। 'उत्तिष्ठत, जागृत, प्राप्य वरान् निबोधत' इति श्रुतेराज्ञया स्वदेश-धर्मरक्षायै प्रयतेरन्। दुराग्रहेण समा-

जस्याहितं न कुर्युः। तस्माच्छीघ्रातिशीघ्रं शब्दप्रधानशिक्षा, शिक्षादूषयित्री परीक्षाप्रणालीचेयं परित्याज्येति। 'कलिः शयानो भवति सञ्जिहानस्तु द्वापरः। उत्तिष्ठँस्त्रेता भवति कृतं संपद्यते चरंश्चरैव चरैव।' बह्वृचब्राह्मणम् ३३, ३.

# ❁ संस्कृतभाषा कथं व्यावहारिकी भवेत् ? ❁

( निबन्धा-श्रीदीनानाथशर्मा शास्त्री सारस्वतः, स० ध० कालेजोपाध्यायः, मुलतानसिटी )

यद्यपि प्राक्तनेषु युगेषु संस्कृतभाषा स्नाने, ध्याने, दाने, भोजने, आलापे, एवमादिकसर्व्वव्यवहृतिष्वासामास, तथाप्यद्यत्वे सा प्रायो ग्रन्थमात्रावशिष्टा स्थिता। नाऽद्य प्राचीनहिन्दुजात्या राज्यम्, येन सार्व्वत्रिकव्यवहारे तदीयाया मातृभाषायाः संस्कृतभाषाया एव × प्रसेस्रीया भवेत्। अद्य तु भिन्नजात्या राज्यम्। ये चाऽद्यतनहिन्दवः स्वराज्यमपीच्छन्ति, तेऽपि तस्मिन् स्वराज्ये संस्कृतव्यतिरिक्तभाषाया एव प्राधान्यमिच्छन्ति, न किल संस्कृतभाषाया इति महतः खेदस्याऽवसरः। एतदर्थमेव संस्कृतानुरागजुषां विदुषां हृदि एष प्रश्नः स्वत उत्तिष्ठते यत् सँस्कृतभाषा कथं व्यावहारिकी भवेत् ? ।

तत्र विमर्शे विहिते इदं तत्त्वमधिगम्यते यत्—प्रागेतदनुरागिभिर्यथाकथञ्चिदियं राजाश्रितीकर्त्तव्या। राज्ञः प्रभावः प्रजोपर्य्यवश्यं भवति। तस्य प्रमाणमेतदेव यद्—राजा यान् नियमान्, यादृशीं वा वेषभूषामवलम्बेत, प्रजोपरि तत्प्रभावः स्वयमेव जन्यते। अत्र उदाहृतिप्रदानप्रयोजनीयता नास्ति। एवं यदि आस्माकीनानां प्रयत्नेन राजा अस्याः संस्कृतभाषायाः प्राधान्यं स्वीकुर्य्यात्, तर्हि राजकीयविविधकार्य्येषु एतस्या उपयोगे प्रारब्धे, स्वयमेवाऽस्या इतस्ततः प्रसरणं स्यात्।

पाठकमहाभागा जानन्ति यद्—अस्मिन् युगे जनता धनगृध्नुर्वर्त्तते। यत्र कार्य्ये धनं तत्र जना भ्रमराः कमलमिव व्याप्य तिष्ठन्ति। राजकीयकार्य्येषु धनागमनं प्रसिद्धमेव। तदैव तु जना राज्ञा स्वीकृतामाङ्गलभाषां, प्राधान्यमापादितां चोर्दूभाषामद्यत्वेऽर्थकरीं विभाव्य तत्रैव प्रयतन्ते। एवं यदि संस्कृतभाषामपि राजा स्वीकुर्य्यात् तेषु तेषु कार्य्येषु, तर्हि सर्व्वसाधारणजनानां तत्र भविष्यद्धनप्राप्त्याशावशात् स्वयमेव प्रवृत्तिर्भवेत। तदा च तत्र प्रवृत्तिवशाद् विविधेषु व्यवहारेषु सा स्वयमेवोपयुज्येत, राजकीयव्यवहाराणां सर्व्वतोमुखीनत्वात्। इत्थमसौ व्यावहारिकी भवेत्।

द्वितीयमदसीयव्यावहारिकताकारणं विश्वविद्यालयेषु तदीयप्राधान्याय चेष्टा। अद्यत्वे सर्व्वत्र देशे वा विदेशे वा विश्वविद्या-

× प्रसेस्रीया। यदन्ताद् 'अप्रत्ययाद्' इति अप्रत्ययः।

लयानां परीक्षा एव सर्व्वजनप्रिया जाताः। तत्र ये खलु विश्वविद्यालयाः ख्यातिमुपागताः; ते यदि संस्कृतभाषायाः प्राधान्यमुरीकुर्य्युः, अथवा भिन्नभाषिकपरीक्षासु संस्कृतस्य न्यूनान्न्यूनमेकपत्रस्याऽनिवार्य्यतां कुर्य्युः; तदाऽप्यवश्यं संस्कृतभाषाया व्यावहारिकत्वे पर्य्याप्तं साहाय्यं प्राप्येत्। यदा विविधविश्वविद्यालयैस्तस्याः प्राधान्यं स्वीकरिष्यते तदा तैः स्वाश्रितविद्यालयेषु भिन्नभिन्नभाषिकाणामप्यध्यापकानां कृते संस्कृतभाषाऽध्ययनाऽनिवार्य्यताऽवश्यं क्रियेत। अथवा संस्कृतवेदितॄणां वेतने वैशिष्ट्यं स्वत एव कर्त्तुमापत्येत। तदा स्वयमेव संस्कृतभाषा व्यावहारिकी स्यात्।

तृतीयं छात्राणामुत्साहनम्। छात्रा एव सुरसरस्वतीतरोर्मूलम्। छात्रत्वे यथैवैते संस्कारं लभेरन्, यौवनेपि तादृशा एव स्युः। छात्रतायामेव इमे संस्कृतभाषाध्ययनार्थमुत्साहनीयाः। इत्थं च स्तोतव्याः, यथा ते धन्यम्मन्याः स्युः सँस्कृताध्ययनेन। तदात्वे एवाऽमी स्वकलितललितपदावलीगुम्फितलेखादिकार्थमुत्साहनीयाः। संस्कृतसमाचारपत्रेष्वपि एषां कृते विशिष्ट एकः स्तम्भः स्थाप्यः सम्पादकैः, यत्र छात्राणां लेखाः प्रकाश्येरन्। अशुद्धानामपि तदीयलेखानां स्वयमेव शोधनं विधेयम्। स्वलेखप्रकाशनेन छात्राणां महती प्रसत्तिस्तद्विषये उन्नतिश्च जायते। तदा ते तत्तत्समाचारपत्त्राणां× भूयिष्ठान् ग्राहकान् निर्म्मान्ति, बहूँश्च स्वप्रशस्यवयस्यान् संस्कृतमध्येतुमुत्साहयन्ति। एवं छात्रगणसङ्ख्यावृद्धौ सत्यां संस्कृतभाषा स्वयमेव व्यावहारिकी भवेत्। यतो यस्या भाषायाश्छात्रगणानां सङ्ख्याऽधिका स्यात्, सा भूयसी संख्या स्वयमेव तां भाषां विविधव्यवहारमानीय तां प्रसारयति। एवञ्च तेषामुत्साहनार्थं विविधपुरस्कारप्रदानं पदकादिप्रदानं विविधप्रशस्तिपत्त्रप्रदानकार्य्यञ्च कार्य्यम्, यथा तेषामुत्साहोऽत्र प्रवर्द्धेत।

तुरीयं कारणं समाचारपत्त्रवृद्धिः। भाषायाः प्रचारे प्रसारे वा समाचारपत्त्राणामपि महिष्ठं स्थानम्। युगानुरूपमेव सर्व्वं कार्य्यं शोभते। अद्यत्वे यस्या भाषायाः पत्त्राणां सङ्ख्या बहुला, सैव भाषा जीविता मन्यते। अत एव संस्कृतज्ञैरपि विज्ञैः संस्कृतभाषाया व्यावहारिकतार्थं संस्कृतसमाचारपत्त्राणां वृद्धिरपि कार्य्या। अद्यत्वे दृश्यन्ते यद्यपि कतिचन संस्कृतपत्त्राणि, तथापि तेषां दशा शोचनीया दयनीया वा वर्त्तते। यद्यपि ग्राहकाणामल्पता तत्र कारणम्, तथापि तत्र सम्पादकप्रकाशकानामपि दोषो दृश्यते। कैश्चित्पत्त्रं नियमिततिथावेव न प्रकाश्यते। कैश्चित् तथा कृत्वापि तदीयाऽऽकारवृद्धिः, समये २ विशिष्टाङ्कप्रकाशनव्यवस्था वा न क्रियते। कैश्चित् तस्मिन्नभद्रकर्गजानामुपयोगो विधी-

× पत्त्रशब्दो द्वितकारवान् भवति, एकतकारप्रयोगस्तु व्याकृतिविरुद्धः, न तकारलोपप्राप्तिः।

यते। केश्चित् खलु स्वपत्रे विषयदारिद्र्यमवस्थाप्यते। सर्व्वसाधारणहितजनकाः परीक्षार्थिलाभप्रदा वा विविधा हृदयावर्ज्जका विषया न समर्प्यन्ते। एवं यत्रेदृक्षमासिकपत्राणामावश्यकता, तत्र पाक्षिकाणां साप्ताहिकानां दैनिकानां वा पत्राणामपि प्रकाशनस्य आवश्यकता विद्यते। तेषामपि च व्यवस्थायाः सुदृढीकरणस्य प्रयोजनीयता वरीवर्त्ति। तदा ग्राहकाः स्वयमेव वृद्धिं प्राप्नुयुः संस्कृतपत्राणाम्। ततश्च संस्कृतभाषा स्वयमेवाऽश्नुवीत व्यावहारिकताम्।

पञ्चम उपायो बृहत्कोषद्वयप्रकाशनम्। तत्र एकस्मिन् कोषे संस्कृततो 'हिंन्दी'शब्दानां सङ्कलनं विधेयम्। तत्र वनौषधिवर्गस्था अप्रसिद्धौषधयः, सिंहादिवर्गस्था अप्रसिद्धाः पशुपक्षिणश्च एतत्कालप्रसिद्धशब्देषु अनुवदितव्याः। एवमन्यत्। यदभावात् पुष्पविशेषः, वृक्षविशेषः, पशुविशेषः, पक्षिविशेष इति बहुभिः प्रयोक्तव्यं भवति। द्वितीये कोषे च हिन्दीतः संस्कृतशब्दा अनुवदनीयाः, येषु अद्यत्वे प्रचलिता उर्द्वाङ्गलशब्दाश्चापि अनुवदितव्याः, यान् केचिद् ' ' इति चिह्नेषु केचिच्च साक्षात्÷प्रयुञ्जते। केचिच्च तान् यौगिकतारूपेण अनुवदन्ति, अपरे तत्सदृशसंस्कृत्या? । इत्थं पूर्णरूपेण साकल्यं नोपसीदन्ति, संस्कृते च नवानुरागिण एतदादिककोषाभावादेव विसेष्मीयन्ते, आत्मनश्च संस्कृतार्णवे विहर्त्तुमनीशाँश्च जानते। उक्तकोषद्वितयनिर्म्मितौ तु नवानुरागिणोऽपि संस्कृतभाषायां निरवच्छिन्नं विहर्त्तुमलम्भूष्णुतां प्रपद्येरन्। तेनाऽत्रापि +विद्वन्मतल्लिकाभिश्चेष्टनीयम्।

षष्ठ उपाय आरम्भिकशिक्षायां सारल्यम्। आरम्भिकशिक्षायां सारल्याऽवस्थापनेन तद्भाषाजिज्ञासूनां तत्र उत्साहो वरीवृद्ध्यतेऽनुरागश्चाऽपि। सारल्यस्य नेदमभिप्रेतं यत्—संस्कृतभाषातः कतिचन शब्दाः पृथक् क्रियेरन्, कतिचन लकारा वा बहिष्क्रियेरन्, नवीना वा प्रत्ययाः कल्प्येरन्, नैवं युक्तम्। एवं कृते सति तु सा संस्कृतभाषायाः सार्व्वकालिकतासार्वदेशिकतयोर्विशिष्टता कर्पूरायेत*। कश्चित् स्वं महापुरुषं मन्यमानस्तत्र स्वसुविधानुसारि परिवर्त्तनं चिकीर्षेत्, तद् अन्यदीयाऽसत्विध्याय स्यात्। अन्योऽपि च पुनर्वदेद् यद्—न हि २, ईदृक्षे सुधारेऽप्यस्माभिर्विषमता दृश्यते, परं संस्कृतप्रणाल्यां मदुक्तप्रकारेण परिवर्त्तनं विधेयम्। यदि प्राक्तनः कश्चिद् आचार्य्यः, तर्ह्यहं स्वप्रान्तस्य नेतास्मीति। तर्हि वाक्यम्, कस्य किं मन्येत, कश्चोपेक्ष्येत ?। पाठकानां विदितं भवेद् यद् हिन्दीभाषायाः संस्कृतभाषातोऽपभ्रष्टत्वात् तस्या मर्य्यादा स्वरूपं वाऽद्यापि न निर्णीतम्। तेनाऽद्यत्वे या हिन्दीभाषा वर्त्तते, या च 'चन्दवरदाई'

÷ प्रयुञ्जते। प्रोपाभ्यां युजे' रिति तङ्, बहुवचने झस्याऽत्।
+ विद्वन्मतल्लिकाभिः। 'प्रशंसावचनैश्च' इति समासः, मतल्लिकाशब्दो नियतलिङ्गः।
* क्यङि तङ्।

प्रणीत 'पृथ्वीराजरासो'ग्रन्थसमये हिन्दीभाषाऽऽसीत्, तयोराकाशपातालसदृशो भेदो दृश्यते । 'चन्दवरदाई' सामयिकीं हिन्दीभाषां बोद्धुमद्यतना हिन्दीकोविदा अपि आञ्जस्येन ईशाना न भवन्ति । यद्यद्यत्वे संस्कृतप्राचीनक्रमेऽपि स्वसुविधानुसारिसुधारश्चिकीर्ष्येत, तत्रापीयं व्यवस्था दृश्येत । अस्माकं संस्कृतभाषायाः सेयं विशिष्टताऽऽसीद् यद्-लौकिकसंस्कृतसाहित्यमद्यतो लक्षकोटिवर्षेभ्यः प्राग् यादृक्षमासीद्, अद्यापि तादृक्षमेवाऽस्ति, यादृशञ्चासीद् भारते तादृशमेव च त्रिविष्टपे । सेयं विशिष्टता ÷ नश्येत संस्कृतभाषायास्तत्क्रमपरिवर्त्तने । तदा सहस्रलक्षाब्दीसन्दृब्धा रामायणमहाभारतादिग्रन्था येऽधुनाऽस्माकं ज्ञानगम्या भवन्ति, त एव पुनः संस्कृतभाषायां परिवर्त्तने आपादिते पुनर्महाकाठिन्यमुपसीदेयुः । तदा संस्कृतभाषाया दशा 'महाजनी'भाषावत् स्यात् । भिन्नभिन्नानां पुरुषाणां स्वसङ्केतानुसारिणी भिन्नभिन्नैव संस्कृतभाषा भवेत् । तादृश-संस्कृतसुधारापेक्षया इयं वर्त्तमाना हिन्दीभाषैव स्वीक्रियतां यस्यां पर्य्याप्तप्रयत्नो जातः । संस्कृते सुधारस्य प्रयासस्तु व्यर्थो भवेद्, गिरिखनने मृतमूषिकाप्राप्तिसदृशं फलं स्यात् । तस्मादेवंविधात् साहसाद् विरमन्तु महाभागा इति सानुनयं पौनःपुन्येन प्रार्थ्यते ।

तत्र यत् पुनः पुनः सारल्यस्य प्रश्नोऽवस्थाप्यते, तत्र एतदेवोत्तरं यद्-अस्मत्संस्कृतसाहित्येऽपि विभागत्रयं दृश्यते । उत्तमो विभागो मध्यमः साधारणश्च विभागः । तत्र आरम्भिकशिक्षायां साधारण एव विभागोऽवस्थाप्यः । परमेतावतैव कृतार्थम्मन्यैर्मा भावि× । क्रमशो विदिताद् अविदितं प्रति, सुगमात् कठिनं प्रति, स्थूलात् सूक्ष्मं च प्रति ध्रुवमेवाऽनुसृतिर्विधेलिमा । ये तु साधारणमेव विभागमधिगम्य सपद्येव उत्तमविभागमारुरुक्षन्ति, ते शिष्या दम्याश्च । यदि साधारणविभागे वर्त्तमानयुगौपयिकग्रन्थानामल्पता दृश्येत, तत्र प्रामाणिकविदुषां द्वारा तत्पूर्त्तिर्विधापनीया । नाऽत्र वयं विप्रतिपन्नाः । परं तत्र संस्कृतभाषायां लेशतोपि परिवर्त्तनं मा विधायि × ।

प्रारम्भिकशिक्षा यद्यपि सरला कार्येत्यत्र नाऽस्माकं विसंवादः, तथापि सापि शैघ्र्येण न समापनीया । मूलं यावद् दृढं भवेत्, तदुपरि निर्म्मीयमाणः प्रासादोपि सुचिरं तिष्ठेत । अद्यत्वे जना ईदृगाघ्राणमात्ररसिकाः संवृत्ताः, तेषामियमिच्छा भवति यद् अद्य वयं संस्कृतवर्णमालाशिक्षणारम्भं कुर्व्वीमहि, एकमासोत्तरञ्च अस्मासु ईदृशी योग्यता जायेत यद्-वयं वेदभाष्यकाराः स्याम । परं नैतद् विचारचारु, ईदृक्षा जना अवश्यं दम्याः ।

सप्तम उपायः सम्मेलनानां सृष्टिः । समयोऽयमाडम्बरप्रियः । अस्मिन् या सं-

÷ नश्येत्, कर्त्तरि लिङ् ।
× मा भावि, मा विधायि । माङि कर्मणि लुङ्, अडोऽभावः ।

स्था वा, या भाषा वा प्रचिचारयिष्येत ❀, तत्र यावद् विविधा आडम्बरा न समुपास्येरन्, तद्विषये कोलाहला न क्रियेरन्, सभेरीनादं जनता तद्विषये यावन्न विज्ञाप्येत, विज्ञापनपत्त्राणि वा यावत् तद्विषये न वितीर्य्येरन्, किं बहुना-यावत् तादृक्सम्मेलनानि न क्रियेरन्, तावत् तत् कृत्यं न प्रचरति, तावत् तद् व्यावहारिकं न जायते। तत्र प्रधानसम्मेलनमखिलभारतवर्षीयं त्वेकमिष्यते, अन्यानि च सम्मेलनानि तच्छाखारूपाणि स्युः। तद्द्वारा राजानः प्रेरणीयाः, जना अनुरञ्जनीयाः, विद्वांस आमन्त्रणीयाः। सम्मेलनेषु पूर्णोत्साहः कार्य्यः। यथा तत्र बाह्याडम्बरः स्यात्; तथा तत्र आभ्यन्तरिकमपि कार्य्यं क्रियेत, संस्कृतोन्नामाय च प्रयत्येत, तदा स्वयं संस्कृतभाषा व्यावहारिकी स्यात्।

अष्टम उपायो विदुषां विविधाभिर्विधाभिः सम्मानः ×। संस्कृतज्ञजनतायां भूयांसो विद्वांसो विद्यन्ते। तत्र कैश्चिन्मौलिकपुस्तकानि प्रणीतानि सन्ति, कैश्चिच्च प्राचीनपुस्तकानि अनूदितानि विद्यन्ते। कैश्चिच्च गणितज्यौतिषादिषु अद्भुता आविष्काराः कृताः। ईदृक्षाणां विविधाभिर्विधाभिः सम्मानो विधेयः। एषु केचित् स्वपुस्तकप्रकाशनमात्रेणैव स्वकीयं सम्मानमभिप्रयन्ति, तेषां सा इच्छा पूरणीया। केचिच्च तत्र पुरस्कारमभिलषन्ति, ते तथात्वेन तर्प्पणीयाः। केचित् स्वपुस्तकानि विविधपरीक्षासु तिष्ठापयिषन्ति, तेषां तदिच्छापूर्त्तिर्विधेलिमा। एवं यदा विद्वत्सम्मानः प्रारभ्येत, तदा तदीयहार्दिकाशीराशिना + प्रयत्नेनोत्साहेन च संस्कृतभाषा स्वयंव्यावहारिकी भवेत्।

नवम उपायो व्याकरणदृष्टिः। व्याकरणं भवति भाषाया मूलम्, प्राणा वा। भाषायाः सार्व्वदेशिकसार्व्वकालिकसमानरूपतायाम् अपरिवर्त्तने च कारणं भवति तत्। तत्र अवश्यं प्रणिधानं विधेयम्। परमद्यत्वे जना व्याकरणाद् वृद्धाः शीतादिव बिभ्यति ÷। यावत् तेषां तस्माद् भयं तावत् संस्कृतभाषाया अवि-हतप्रचारोऽसम्भवी। केचित् संस्कृतव्याकरणस्य परीवर्त्तमभावं वाऽभिलषन्ति, तदयुक्तम्। किं विना कारणमपि कार्य्यं जायते कदाचित्? किं विना मेघैर्वृष्टिः सामान्यशास्त्रम्? किं विना पितुः पुत्रः सम्भवेत् कदाचित्?। यदि न तर्हि कथं तत्परिवर्त्तनविषये दुर्म्मतिं दधते ते-इति खेदः। )( तादृशामेव तु सौविध्याय दीक्षितेन सिद्धान्तकौमुदी प्राणायि। ततोऽपि न्यूनयोग्यतानां प्रवेशाय मध्यकौमुदी. ततोऽपि हीनानां कृते लघुकौमुदी प्रणिन्ये वरदराजेन। यदि ततोपि भयं स्यात् केषाञ्चित्, तर्हि तत्र कामं सङ्क्षेपः कार्य्यः

❀ प्रचिचारयिष्येत णयन्तसन्नन्तस्य कर्मणि लिङ्। × सम्मानः। घञन्तत्वात् पुंसि। + आशीराशिना। 'रोरि' इति रलोपे दीर्घः, राशिः पुंसि। ÷ बिभ्यति, बहुवचनेऽभ्यस्तत्वाद् झस्याऽत्। )( तादृशाम्, विचक्षणस्याऽऽमि।

वर्त्तमानयुगौपयिकसन्धिशब्दधातुस्त्रीप्रत्यय-कारकसमास-प्रत्ययादीनामुपयोगः कार्य्यः । इत्थं सङ्क्षेपः कामं कर्त्तव्यः, परं तत्र परिवर्त्तनं न कार्य्यम् । अथ च तत्र ईदृशमपि सौकर्य्यं नो विधेलिमम्, यत्-सुगमतालोभिनोऽग्रिमव्याकृतिं ÷ दिदृक्षेरन्नेव न । प्रत्युत इत्थं रचना कार्य्या यत्-तेषां पूर्णव्याकरणाऽध्ययने रुचिः प्रवर्द्धेत । आरम्भिकशिक्षायां व्याकरणस्योपयोगः शिक्षणीय इति निष्कर्षः । एवं कृति तन्मूला संस्कृतभाषा क्रमशः स्वयमेव व्यावहारिकतामश्नुवीत ।

दशम उपायो वर्त्तते संस्कृतभाषाया व्यावहारिकत्वे विदुषामेकता । एकतया किं किं न सिद्ध्यति । यदि तृणराशिरप्येकीभूतो + मत्तदन्तिनमपि बध्नाति, यदि तन्तुराशिरपि संहत्य नग्नं पिदधाति, तर्हि यदि विदुषामपि मिथ एकता भवेत्, पारस्परिकविवादा विनश्येयुः, अहम्मन्यता दूरीभवेत्, तदा संस्कृतभाषाऽऽक्षेपका द्रुतमेव विद्रुताः स्युः, भाषायामापतिताः समस्ताः प्रत्यूहव्यूहाः क्षीयेरन् । सर्व्वेषाञ्चैकस्मिँल्लक्ष्ये सम्पन्ने संस्कृतभाषाप्रचारः स्वयमेव स्यात् ।

एकतायां सम्पन्नायां सर्व्वेषां कथितचराणामुपायानामवलम्बने सौकर्य्यं स्यात्, परिणामे च साफल्यं भवेत् । भवन्तो यद् भिन्नानां वैदेशिकभाषाणामत्र प्रसेद्धीयां पश्यन्ति; अयं सर्व्वं एकतायाः प्राक्तनोपायानामाचरणस्य च महिमा । यदा ता अस्मद्देशाऽपरिचिता अपि भाषा अस्मद्देशपरिचिता जाताः, यदा च ता भारताद् बहिरागता अपि भारतव्याप्ता जाताः, अस्मद्भिन्ना अपि अस्मदस्थिमज्ज❀ सम्पृक्ता जाताः, तदा किमस्मदीयैव भारतभारती येन केनचिद् रूपेण अद्यापि समस्तेषु देशविदेशेषु प्रसृता भारतीयसर्व्वजनव्यवहारे न प्राप्नुयात ? ।

यत् खलु केचिदभिदधति यत्-संस्कृतभाषा कदापि व्यावहारिकी भाषाऽऽसीदेव न, तदैव तु अस्यां गद्यसाहित्यं प्राचुर्य्येण न प्राप्यते-एतत्खलु यत्किञ्चित् । प्राचीनकाले आलापस्तु गद्य एव स्यादिति सर्व्वजनानुमेयम् । परं पुस्तकरुचिः प्रायः पद्यप्रणयने आसीत् । इयमेव प्रारम्भिकदशाऽऽङ्गलसाहित्यस्य पारसीभाषाया अपि च लभ्यते । अस्मत्साहित्येऽपि गद्यस्य सुतरामभावो नास्ति । प्राचीनसाहित्ये वेदस्य ब्राह्मणभागस्तदन्तर्गताश्चोपनिषदो मन्त्रभागे यजुर्वेदश्च गद्यबहुला एवेति न परोक्षम् । ततो बाणभट्टादीनां गद्यकाव्यान्यपि दृश्यन्ते एव । अनेन स्पष्टं यत् तदापि इयं व्यावहारिकी आसीदेव । इयं भाषा प्राग् व्यावहारिकी न आसामास- इत्येवमाचक्षाणानां जनानां कपोलेषु 'भाषा'-शब्द एव चपेटा-

÷ दिदृक्षेरन् । 'ज्ञाश्रु' इति सन्नन्तस्य कर्तरि तङ् । + राशिः पुंसि । ❀ मज्जन्शब्दो नकारान्तः, अत्र स समासे । केषाञ्चिन्मते आकारान्तोऽपि भवति मज्जेति ।

प्रहारं विधत्ते । भाषा भाषणाद् भवति, भाषणं च व्यवहारः । तदा कथमियं नाऽऽसीद् व्यावहारिकी ?

ये खलु कथयन्ति यद्—अस्यां संस्कृतभाषायां प्राग् लेखनपद्धतिरेव नासीद्, न च ग्रन्थप्रणयनं भवति स्म, तेऽपि भ्रान्ता एव । पाणिनिधातुपाठे लिखधातुरुपलभ्यते 'अधिकृत्य कृते ग्रन्थे' इति पाणिनिसूत्रे ग्रन्थशब्दः प्रयुक्तः । 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति पाणिनिसूत्रे भिक्षुसूत्रनटसूत्राणां साक्षात् कथनं निर्दिष्टम् । एवं पाणिनिसूत्रेषु गार्ग्यशाकटायनशाकल्यादीनां मतानि विनिवेशितानि । यदि प्राग् ग्रन्था नाऽभविष्यन्नेषामाचार्य्याणाम्, तर्हि कथं पाणिनिः केषाञ्चन विरोधं केषाञ्चन चाऽनुवादमकार्षीत् ? सर्व्वाण्येव व्याकरणान्तरसूत्राणि तेन कण्ठस्थीकृतानि स्युरिति तु न श्रद्धेयम् । तस्मात् पूर्व्वं सर्व्वेष्विदासीद् ग्रन्थलेखनादिकमिति स्पष्टम् ।

तदैव तु भोजराजराज्यकाले विक्रमादित्यकाले वा इयं भाषा पूर्णव्यवहारोन्नतिमाससाद । तेन इदानीन्तनानामाक्षेपा निर्म्मूला एव । मध्यमकाले च मौहम्मदानामेव आक्रमणाद् अस्या भाषाया ह्रसिमा × संवृत्तः । अधुना तमेव ह्रसिमानमपनेतुं यदि कथितचरणामुपायानामवलम्बनं विधीयेत, तर्हि तस्या व्यावहारिकत्वे साफल्यमाशास्यते । मन्ये अन्ये संस्कृतानुरागिणोनि निजनिजाभिप्रायप्रकाशनान्यस्मिन् विषये कुर्य्युः । समयाऽभावाद् विस्तरत उदास्महे । शम् ।

---

## ❀ प्राक्तनशिक्षाप्रकारः, आधुनिकदशा च ❀

( ले० द्रव्येशझा० व्याकरणवेदान्ताचार्यसर्वदर्शनसूरिः हरिद्वारम् )

श्रीविरञ्चिप्रपञ्चेऽस्मिन्निखिलप्राणिनिकरः शाश्वतसुखमवाप्तुन्दुःखञ्च परिहातुन्तन्निदानम्पर्य्येषमाणोऽहर्निशम्बम्भ्रमीतीति प्रत्यक्षतरं समेषाम्, अतः सुखं दुःखविरहश्चेति द्वयमपि साक्षात्फलम् अन्यत्सर्वं तत्साधनम् । एतदुभयप्रयोजनमुद्दिश्यैव सर्वाः प्रवृत्तयः प्राणिनामिति सिद्धम् । कैश्चिद्दुःखपरिहारोऽपि सुखसाधनतयैव परिगृह्यते । तेषां मते सुखमेवैकं साक्षादिष्टम्फलन्तदितरदुःखपरिहारसहितं स्रक्चन्दनवनितादि समस्तं सांसारिकं वस्तु तत्साधनमेव । तत्र किञ्चित्फलं ज्ञानमात्रैकसाध्यम्—यथा मन्दान्धकारे रज्ज्वामुरगं मत्वा भीत्या प्रवेपमानः पलायितुमारभमाणः, नायं सर्प इति कस्यचन शिष्टजनस्य वचनेन जायमानम्बोधमासाद्यैव स्वस्थः सन् सुखमधितिष्ठति । अपरञ्च ज्ञानपूर्वकानुष्ठानसाध्यम्—यथा वाणिज्यादिलौकिकसाधनजनितसुखम्, यथा वा वेदादिसच्छास्त्रतो यागादिसाधनं परिज्ञाय तदनुष्ठाय च पारमार्थिकं सुखमासाद्यते । तथा च

× ह्रसिमन्‌शब्दः पुंसि ।

ज्ञानाधीनं सुखमित्यत्र न कस्यचिद् वैमत्यम्, ज्ञानं चाध्ययनाधीनमिति तु बालेनापि विदितमत एव स्वाध्यायोऽध्येतव्य इति भगवद्वेदोपदेशामृतेनापि वयमासिच्यामहे। तस्मात् सर्वप्रकारेणाध्ययनप्रकार एव सर्वतः प्रथमम्परीक्षणीयः परिरक्षणीयश्च तत्रागतदोषनिबर्हणेन परिष्कृतसाद्गुण्यपरिवर्हणेन चश्रेयोऽभ्युदयकाङ्क्षिभिः।

साम्प्रतिकप्रचलिताध्ययनेन पर्याप्तबोधो नाधीयतेऽतः परिवर्तनीयस्तत्प्रकार इति कथा सर्वत्रोद्घुष्यमाणा मे श्रुतिपथे पथिकायते, यदा तदा द्राक्षातिशायि मधुरमिव प्रतिभाति। तत्र हेतुर्न केवलं परिवर्तनचर्चा, अपि तु येयं चतुर्वर्गफलदायिनी विद्यालताऽनादिकालतो वेदादिसच्छास्त्रस्थसंस्कृतामृतभाषाभिः परिबोध्यमाना सृष्ट्यादावङ्कुरदशामारभ्य त्रेताद्वापरयोस्तारुण्यपर्यन्तं परिवर्द्धिता सेयं वार्द्धक्ये साम्प्रतिके ह्रसमानतया परिदृश्यमाना किमु भारतम्विहायामरावतीङ्गमिष्यतीति सन्देग्धि मनः। तस्याः प्रचयोपायं गवेषमाणानां सुहृदां श्रद्धाभरं मित्राक्षरं वचः समाकर्ण्य आशालता समुदेति यद् भविष्यति तस्याः सञ्जीवनमिति। किन्तु ये प्रतीकाराः प्रदर्श्यन्ते तान् दृष्ट्वा विवेकदृष्ट्या परीक्षणेऽङ्कुरिताऽपि साऽशा शुष्यति। घटकुट्टीप्रभातवृत्तान्तं च स्मर्यते। प्रत्युत आधुनिकोपायैश्च झटित्येव विनश्यतीति विपरीतम्प्रतिभाति। तथा हि-अध्ययनस्य ज्ञानमेव फलमित्युक्तम्। ज्ञानं च सविषयकमेव भवति। विषयाश्च स्थावरादिस्थूलवस्तुप्रभृतिसूक्ष्मातिसूक्ष्मतमब्रह्मपर्य्यन्ताः। तथा च यद्वस्तु यादृशगुणस्वभावविशिष्टं वर्तते तत्स्वरूपावगाहि ज्ञानमेव यथार्थं निगद्यते। तदेवाध्ययनेन सम्पादनीयम्, न तु विपरीतं मिथ्याज्ञानमध्ययनस्य लक्ष्यीभूतं मन्तव्यम्। अतो यद्विषयकज्ञानं सिषाधयिषितं तद्यदि तद्विषयप्रतिपादकशास्त्राध्ययनेन सम्पाद्यते चेत् तदा सफलमेव मन्तव्यम्। न जातु तत्र कस्यचन परीक्षकस्य दोषगन्धमप्यारोपयितुं तर्जनीतर्जनावसरः। यदा च यद्विषयकशास्त्रमधीत्यापि तद्विषये विशेषज्ञानकौशलस्य कैव कथा? सामान्यज्ञानमपि नासादयतेऽपि तु विपरीतबोधेनाऽबोधनेन च सहितः सन् स्वात्मानं बहुमन्यमानो विपरीतमेव तद्विषयं परिग्राहयतीतरान् तदा कस्को न दोषकलङ्कपङ्कमुत्किरेत् इति सुगमोऽयम्परीक्षणप्रकारः सकलसम्प्रतिपन्नः। उत्सृजेः किरति वर्तते।

तत्पथेन विचारणायां सर्वतः प्रथमं वेदे कीदृशः शिक्षणप्रकार इत्यत्र दृष्टिप्रक्षेपे बहुविधाः समुपलभ्यन्ते। तथाहि-इतिहासमुखेन वर्णनम्, अनेन शिष्यस्य झटिति बोधो भवति। इतिहासश्च यथाभूत एवेति नाग्रहः कल्पितोऽपि समाश्रयणीयः। अयमाशयः स एवाध्यापकः प्रशस्यतेतराम्, तस्यैवाध्यापननैपुण्यं सुष्ठुतरं निगद्यते यः केनाप्युपायेन लक्ष्यविज्ञानं त्वरितमारोपयति शिष्येषु। इमामेव शैलीमादाय संहिताशतपथब्राह्मणादावनेकाख्यायिकाः प्रदर्शिताः सन्ति। यथा बृहदारण्यछान्दोग्ययोः प्राणेन्द्रियसम्वादः प्रकल्पितः। प्राण एवेह शरीरे प्र-

प्रहारं विधत्ते । भाषा भाषणाद् भवति, भाषणं च व्यवहारः । तदा कथमियं नाऽऽसीद् व्यावहारिकी ?

ये खलु कथयन्ति यद्—अस्यां संस्कृतभाषायां प्राग् लेखनपद्धतिरेव नासीद्, न च ग्रन्थप्रणयनं भवति स्म, तेऽपि भ्रान्ता एव । पाणिनिधातुपाठे लिखधातुरुपलभ्यते 'अधिकृत्य कृते ग्रन्थे' इति पाणिनिसूत्रे ग्रन्थशब्दः प्रयुक्तः । 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति पाणिनिसूत्रे भिक्षुसूत्रनटसूत्राणां साक्षात् कथनं निर्दिष्टम् । एवं पाणिनिसूत्रेषु गार्ग्यशाकटायनशाकल्यादीनां मतानि विनिवेशितानि । यदि प्राग् ग्रन्था नाऽभविष्यन्नेषामाचार्य्याणाम्, तर्हि कथं पाणिनिः केषाञ्चन विरोधं केषाञ्चन चाऽनुवादमकार्षीत् ? सर्व्वाण्येव व्याकरणान्तरसूत्राणि तेन कण्ठस्थीकृतानि स्युरिति तु न श्रद्धेयम् । तस्मात् पूर्व्वं सर्व्वञ्चिदासीद् ग्रन्थलेखनादिकमिति स्पष्टम् ।

तदैव तु भोजराजराज्यकाले विक्रमादित्यकाले वा इयं भाषा पूर्णव्यवहारोन्नतिमाससाद । तेन इदानीन्तनानामाक्षेपा निर्म्मूला एव । मध्यमकाले च मौहम्मदानामेव आक्रमणाद् अस्या भाषाया ह्रसिमा × संवृत्तः । अधुना तमेव ह्रसिमानमपनेतुं यदि कथितचराणामुपायानामवलम्बनं विधीयेत, तर्हि तस्या व्यावहारिकत्वे साफल्यमाशास्यते । मन्ये अन्ये संस्कृतानुरागिणोनि निजनिजाभिप्रायप्रकाशनान्यस्मिन् विषये कुर्य्युः । समयाऽभावाद् विस्तरत उदास्महे । शम् ।

---

## ❀ प्राक्तनशिक्षाप्रकारः, आधुनिकदशा च ❀

( ले० द्रव्येशझा० व्याकरणवेदान्ताचार्यसर्वदर्शनसूरिः हरिद्वारम् )

श्रीविरञ्चिप्रपञ्चेऽस्मिन्निखिलप्राणिनिकरः शाश्वतसुखमवाप्तुन्दुःखञ्च परिहातुन्तन्निदानमन्वेषमाणोऽहर्निशम्बम्भ्रमीतीति प्रत्यक्षतरं समेषाम्, अतः सुखं दुःखविरहश्चेति द्वयमपि साक्षात्फलम् अन्यत्सर्वं तत्साधनम् । एतदुभयप्रयोजनमुद्दिश्यैव सर्वाः प्रवृत्तयः प्राणिनामिति सिद्धम् । कैश्चिद्दुःखपरिहारोऽपि सुखसाधनतयैव परिगृह्यते । तेषां मते सुखमेवैकं साक्षादिष्टम्फलन्तदितरद्दुःखपरिहारसहितं स्रक्चन्दनवनितादि समस्तं सांसारिकं वस्तु तत्साधनमेव । तत्र किञ्चित्फलं ज्ञानमात्रैकसाध्यम्—यथा मन्दान्धकारे रज्ज्वामुरगं मत्वा भीत्या प्रवेपमानः पलायितुमारभमाणः, नायं सर्प इति कस्यचन शिष्टजनस्य वचनेन जायमानम्बोधमासाद्यैव स्वस्थः सन् सुखमधितिष्ठति । अपरञ्च ज्ञानपूर्वकानुष्ठानसाध्यम्—यथा वाणिज्यादिलौकिकसाधनजनितसुखम्, यथा वा वेदादिसच्छास्त्रतो यागादिसाधनं परिज्ञाय तदनुष्ठाय च पारमार्थिकं सुखमासाद्यते । तथा च

× ह्रसिमा=लघुत्वम् ।

ज्ञानाधीनं सुखमित्यत्र न कस्यचिद् वैमत्यम्, ज्ञानं चाध्ययनाधीनमिति तु बालेनापि विदितमत एव स्वाध्यायोऽध्येतव्य इति भगवद्वेदोपदेशामृतेनापि वयमासिच्यामहे। तस्मात सर्वप्रकारेणाध्ययनप्रकार एव सर्वतः प्रथमम्परीक्षणीयः परिरक्षणीयश्च तत्रागतदोषनिबर्हणेन परिष्कृतसाद्गुण्यपरिबर्हणेन चश्रेयोऽभ्युदयकाङ्क्षिभिः।

साम्प्रतिकप्रचलिताध्ययनेन पर्याप्तबोधो नाधीयतेऽतः परिवर्तनीयस्तत्प्रकार इति कथा सर्वत्रोद्घुष्यमाणा मे श्रुतिपथे पथिकायते, यदा तदा द्राक्षातिशायि मधुरमिव प्रतिभाति। तत्र हेतुर्न केवलं परिवर्तनचर्चा, अपि तु येयं चतुर्वर्गफलदायिनी विद्यालताऽनादिकालतो वेदादिसच्छास्त्रस्थसंस्कृतामृतभाषाभिः परिबोध्यमाना सृष्ट्यादावङ्कुरदशामारभ्य त्रेताद्वापरयोस्तारुण्यपर्यन्तं परिवर्द्धिता सेयं वार्द्धक्ये साम्प्रतिके ह्रसमानतया परिदृश्यमाना किमु भारतम्विहायामरावतीङ्गमिष्यतीति सन्देग्धि मनः। तस्याः प्रचयोपायं गवेषमाणानां सुहृदां श्रद्धाभरं मित्राक्षरं वचः समाकर्ण्य आशालता समुदेति यद् भविष्यति तस्याः सञ्जीवनमिति। किन्तु ये प्रतीकाराः प्रदर्श्यन्ते तान् दृष्ट्वा विवेकदृष्ट्या परीक्षणेऽङ्कुरिताऽपि साऽशा शुष्यति। घटकुट्टीप्रभातवृत्तान्तं च समर्थ्यते। प्रत्युत आधुनिकोपायैश्च झटित्येव विनश्यतीति विपरीतम्प्रतिभाति। तथा हि-अध्ययनस्य ज्ञानमेव फलमित्युक्तम्। ज्ञानं च सविषयकमेव भवति। विषयाश्च स्थावरादिस्थूलवस्तुप्रभृतिसूक्ष्मातिसूक्ष्मतमब्रह्मपर्य्यन्ताः। तथा च यद्वस्तु यादृशगुणस्वभावविशिष्टं वर्तते तत्स्वरूपावगाहि ज्ञानमेव यथार्थं निगद्यते। तदेवाध्ययनेन सम्पादनीयम्, न तु विपरीतं मिथ्याज्ञानमध्ययनस्य लक्ष्यीभूतं मन्तव्यम्। अतो यद्विषयकज्ञानं सिषाधयिषितं तद्यदि तद्विषयप्रतिपादकशास्त्राध्ययनेन सम्पाद्यते चेत् तदा सफलमेव मन्तव्यम्। न जातु तत्र कस्यचन परीक्षकस्य दोषगन्धमप्यारोपयितुं तर्जनीतर्जनावसरः। यदा च यद्विषयकशास्त्रमधीत्यापि तद्विषये विशेषज्ञानकौशलस्य कैव कथा ? सामान्यज्ञानमपि नासादयतेऽपि तु विपरीतबोधेनाऽबोधनेन च सहितः सन् स्वात्मानं बहुमन्यमानो विपरीतमेव तद्विषयं परिग्राहयतीतरान् तदा कस्को न दोषकलङ्कपङ्कमुत्किरेत् इति सुगमोऽयम्परीक्षणप्रकारः सकलसम्प्रतिपन्नः।

तत्पथेन विचारणायां सर्वतः प्रथमं वेदे कीदृशः शिक्षणप्रकार इत्यत्र दृष्टिप्रक्षेपे बहुविधाः समुपलभ्यन्ते। तथाहि-इतिहासमुखेन वर्णनम्, अनेन शिष्यस्य झटिति बोधो भवति। इतिहासश्च यथाभूत एवेति नाग्रहः कल्पितोऽपि समाश्रयणीयः। अयमाशयः स एवाध्यापकः प्रशस्यतेतराम्, तस्यैवाध्यापननैपुण्यं सुष्ठुतरं निगद्यते यः केनाप्युपायेन लक्ष्यविज्ञानं त्वरितमारोपयति शिष्येषु। इमामेव शैलीमादाय संहिताशतपथब्राह्मणादावनेकाख्यायिकाः प्रदर्शिताः सन्ति। यथा बृहदारण्यछान्दोग्ययोः प्राणेन्द्रियसम्वादः प्रकल्पितः। प्राण एवेह शरीरे प्र-

+ व्यूदिरे इति सम्प्रसारणे सति रूपम् ।

धानः श्रेष्ठश्चेति निर्धारयितुमहमेव श्रेयान् इति परस्परम्प्राणः इन्द्रियाणि च+ विविदिरे तत्र विजयपरिचयाय नियमोऽयं निरचायि, यत् येन विना शरीरमिदं पापिष्ठं भवेत् नावस्थातुं च शक्नुयात् स एव श्रेयान् इति। तदा वागादयः सर्वे प्रत्येकं सम्वत्सरपर्यन्तं विग्रहमिमं विहायान्यत्र स्थित्वा समागत्य पूर्ववद् अविभ्रष्टमेकाङ्गविकलं सदपि स्वरूपेणानवभ्रं ददृशुः । प्राणस्य तु गमनोद्यमकाले एवेतराण्यपीन्द्रियाणि नावस्थातुमशक्नुवन् क्षणमपि शरीरेऽस्मिन् । इत्यादिप्रकारेण प्राणश्रैष्ठ्यं सुगमतयैव बालेनापि सुबुध्यते । एवमेव सृष्ट्याद्युत्पत्तिविषये प्रश्नोपनिषदि बृहदारण्यकादौ च विचित्रघटनाजनकोपाख्यानं तात्पर्यपर्यन्तदृष्टिदाने यथार्थभूतमापातदृष्ट्या त्वसंगच्छमानं प्राप्यते। लेखविस्तारभयात्तु तत्स्वरूपं नोद्घाटितम् । अत एवैतत्सारानभिज्ञाः केचन बालमतयः सत्यविवेचकंमन्यमाना भागमिमं वेदाद् बहिर्भूतम्, केचन वेदस्य पौरुषेयत्वं समुद्गिरन्ति । क्षमणीयास्ते भ्रान्ता वैदिकमतानुयायिभिः ।

किंच क्वचित् यस्य शिष्यस्य सदुपदेशेनापि बोधो न जातस्तस्य बुद्धिस्थदोषं विनिश्चित्य ब्रह्मचर्य्याद्यनुष्ठानेन तमुपशमय्य परिनिष्ठितबोधः करणीयः इत्युपलभ्यते । यथा प्रजापतिरिन्द्रस्यैकशतवत्सरं ब्रह्मचर्य्याश्रमनिवासानन्तरं सम्पादयति स्म तत्त्वबोधम् ।

क्वचिच्चोपलभ्यते—शिष्यस्य यद्विषये जिज्ञासा जाता तदुपशमाय बाह्यदृष्टान्तमनुसृत्य तद्विषयकोपदेशः कर्तव्य इति । तत्रापि न केवलवाङ्मात्रेण किन्तु समक्षं दृष्टान्तीकृतवस्तु संस्थाप्य परीक्ष्य च जातं मे विज्ञानमिति तुष्ट्युद्गारानन्तरमुपदेशाद् विरमति स्म । यथा श्वेतकेतूपाख्यानं छान्दोग्ये, बार्हदारण्यजनकयाज्ञवल्क्यसम्वादे च कारणं ब्रह्म सूक्ष्ममदृश्यमानं कार्यञ्च स्थूलं दृश्यमानञ्च । सूक्ष्मात् स्थूलस्य कथमुत्पत्तिरिति श्वेतकेतोर्जिज्ञासा जाता तदुपशमाय गौतमेन गुरुणा वटबीजमादाय विभिद्य प्रदर्शितम् किमत्र दृश्यते, न किमपीत्युत्तरिते, कथितं यथैतेऽदृश्यमानाः बीजावयवा एवैतस्य महतो वटवृक्षस्य कारणन्तथैव संसारस्य स्थूलस्य सूक्ष्मं ब्रह्म कारणम् । पुनर्यदि ब्रह्म सर्वत्र वर्तते तदा कथं न चक्षुषा निरीक्ष्यते इति जिज्ञासितन्तदाह गौतमः:—सायमुदके लवणखण्डमाधाय प्रातरानीयम् । तथैव कृते, पश्य चक्षुषा क्व जले लवणमित्याज्ञापितेन श्वेतकेतुना दृष्ट्वा जलमभिहितं न किञ्चिदपि लवणमत्र दृश्यते। पुनरुक्तं गुरुणा-जलमाचाम। तदाचम्य प्रतिपादितं यन्नैकोऽपि जलबिन्दुर्यो हि लवणसान्न। तदोपदिदेश यथैव विद्यमानमपि लवणं चक्षुषा न दृश्यते किन्तूपायान्तरेण परिज्ञायते रसनया । तथैव सर्वत्र विद्यमानमपि ब्रह्म इन्द्रियादिप्रमाणेन नावगम्येत, आगमेन सह संस्कृतसमाहितमनसा साक्षात्क्रियते ब्रह्मेत्युपदेशात् शान्तजिज्ञासोऽभूत श्वेतकेतुः ।

एवंरूपेण बहून्यत्र वचनानि विस्तर-भयान्नेह प्रदर्श्यन्ते। प्रायोऽयं प्रकार एव बहुसम्मतः। अत्र भ्रमादिदोषस्याल्पावसरः। अतः सर्वैरेवाभ्यर्हणीयः। अत एव स्वकीयाध्ययनपर्य्यन्तम्प्राचीनविद्वद्भीरेयेषु अयमेवाध्यायनप्रकारः प्रादर्शि, इदमेव समालोचनात्मकपाठनं निगद्यते। अर्थात् तृतीयहेतोरव्यापकतापत्तिरिति शेखरस्थपङ्क्तिपाठन-समये केवलाक्षरार्थम्विधायैवाग्रे गमनं हास्यास्पदम्। किन्तु इयमुक्तिस्तथ्या न वेत्याचूडान्तं विचार्य्याग्रिमवाक्यं पठनीयमेतत्प्रकारेणैकग्रन्थाध्ययने शिष्यस्य तादृशी प्रतिभा समालोचिका, पदार्थेष्वन्तःप्रवेशिनी तात्पर्य्यनिःसारिका बुद्धिश्चोपजायते, यया तत्समानाननेकग्रन्थान् स्वयमेव शिष्याः संलापयन्ति। ततः कठिना अपि ग्रन्था अल्पायासेनैव स्वात्मसात् क्रियन्ते। स्वयमप्यनुभूतोऽयम्प्रकारः।

साम्प्रतं परीक्षोत्तीर्णा अपि शतावधि-ग्रन्थानधीत्यापि द्वित्रग्रन्थानपि पाठयितुमशक्ताः दृश्यन्ते, तत्कस्य हेतोः? अहं तु बाहुमुत्क्षिप्य ब्रुवे, समालोचनात्मकग्रन्थपठन-परीक्षण-शास्त्रार्थप्रकाराणां ह्रास एव पर्याप्तबोधानासादने कारणम्। स्वीकरोमि यत् साम्प्रतिकपरीक्षायां भूगोलेतिहासग्रन्थानां समावेशाभावात् व्यावहारिकबोधे स्खलितिरिति। परं च व्याकरणादिशास्त्रस्य विषयपरिज्ञानाय तु समावेशितग्रन्थाः प्रभवः किन्तु तदीयबोधेनापि तु वञ्चिता एव क्रमशो दृश्यन्ते। तदा कथमाशा करणीया यत् द्वित्रग्रन्थसमावेशमात्रेणैव पर्याप्तबोधो भवेदेवेति। एतावता अपेक्षणीयग्रन्थ-समावेशो न करणीय इति नाशयो मे। किन्तु यावन्तो ये ग्रन्था नियुज्यन्ते तेषां पाठनं परीक्षा च समालोचनात्मकतया यावन्न भवेत् तावत् पर्याप्तबोधस्याशा च, आकाशकुसुमेभ्यः सुगन्धिजिघ्रापयिषासमैव।

साम्प्रतञ्च परीक्षाणां सुगम एव प्रश्नो भवत्विति सर्वैर्निगद्यते। समालोचनार्थं यदि परीक्षकमहोदय एकमपि प्रश्नमकृत, तदा गालीप्रदानादपि न त्रपन्ते परीक्षाध्यक्षा अपि क्षणमपि न विलम्बयन्ति परीक्षककोटितो निःसारणे। तथा चेत्थं प्रवृत्तिमालोक्य कथमुन्नतेः प्रत्याशा विधेया। किञ्च वेदप्रमाणवादिनो वस्तुतो वेदतात्पर्य्यविनिर्णयः स्मृतिमन्तरा असम्भव एव। तथा च संस्कृतभाषापरित्यागे श्रुतिस्मृतितात्पर्य्यार्थबोधविरतया आर्याणामार्यतैव विनंक्ष्यतीत्यालोच्य यदि संस्कृतभाषायाः समुन्नतिर्हृदयतो वाञ्छ्यते तदा संस्कृतभाषायां भूगोलगणितेतिहासग्रन्थानुपेक्ष्य भाषान्तरीयपुस्तकरटनेन संस्कृतभाषाया उन्नतिरन्यस्या वेति विचारणे न तिरोहिता दृष्टिर्वेटोरपि मन्दाक्षस्य। किञ्च वेदान्तो निरीश्वरवादोस्तीत्यद्यावधि न कस्यापि संस्कृतग्रन्थस्य कथनम्। न च कोपि विरञ्चिरपि निरीश्वरवादत्वं वेदान्तस्य साधयितुं प्रभुः। किन्तु वेदान्तशास्त्रस्य निरीश्वरवादत्वप्रतिपादकोपि भाषाग्रन्थः संस्कृतपरीक्षायां सन्निवेशितः। तत्र च प्रतिपादितविषयाः की-

दृशभावमुद्गिरन्ति, तेन तु भारतीयानां कियानुपकारो भवेदिति गवेषणीयं मर्मविद्भिः ।

हा हतभाग्यानामस्माकं साम्प्रतं ये सुहृदः संस्कृतोपजीविनश्छात्रा विद्वांसो वा तेऽपि नात्र दृष्टिमाक्षिपन्ति । मृषाप्रलोभेन विमोहिता विपरीतं पश्यन्ति । संस्कृतरक्षकस्थाने ते एवाध्यक्षा नियुज्यन्ते ये भारतीयाचारविद्वेषिणः संस्कृते कृतचञ्चुप्रवेशा इंग्लिशविदः । तेऽहर्निशं समूलोच्छेदनाय चेष्टमाना नानाविधं गन्धर्वनगरोपमं लाभं प्रदर्श्य स्वेहितं साधयन्ति । तत्र न कोपि दृष्टिपातं करोति । तृषार्तमृग इव मरीचिं पश्यन्नग्रे धावति । न वा कोपि संघस्तेषाम् । मिलित्वा कार्य्यकारिता तु स्वप्नादपि बहिर्गता । तदा का नाम समुन्नतेः प्रत्याशा । यदि जीवनमपि सुरभारत्या वाञ्छन्ति तदा समेषां महासमितिरेका विधेया तत्र निर्धारितपद्धतौ सर्वे समं व्रजन्तु-इत्यरण्यरोदनं विधाय विरमामि ।

---

## ❁ आधुनिकी स्त्रीशिक्षा ❁

### घनाक्षरी

[ १ ]

अन्यदीयदेशनारीशिक्षामनुकृत्य निजनारीभ्योपि दापयन्ति वैदेशिकशिक्षितम् १
शिक्षिताश्च २पारितपरीक्षिताश्च नार्य इमाः सोल्लुण्ठं त्यजन्ति गृहकार्यमसमीक्षितम् ।
पूर्वं किल पारतन्त्र्यमासीत्स्वस्य देश एव साम्प्रतं ३स्वगेहेऽपि च पारतन्त्र्यमीक्षितम्
नूतनयुगेऽस्मिन्नवशिक्षितनराणामद्य नारीशिक्षणेऽपि ननु नूतनत्वमीक्षितम् ॥

[ २ ]

४वेत्रदण्डमादायाऽद्य वाक्कीलत्वमेति वधू राजकर्मचारितां च सेयमाप्यतेतमाम्
सुन्दरीसमाजेनाद्य स्वीयदलं संगृह्याऽथ राजगृहद्वारे ५बलात्स्वत्वमीप्स्यतेतमाम् ।
मञ्जुनाथ साम्प्रतं तु सैनिकत्वमाप्य सैव शस्त्रास्त्रैः सुसज्जा समरार्थं नह्यतेतमाम्
या वै गृहलक्ष्मीः पुरा ६मामण्डीति गेहमिदं साम्प्रतं तु सैव रणचण्डी चित्र्यतेतमाम्

---

१-अन्यदेशनारीशिक्षाया अनुकरणेन, आङ्ग्लभाषामयीं शिक्षां दापयन्तीत्यर्थः ।

२ पारितं समापितं परीक्षितं परीक्षणं याभिस्ताः ( परीक्षोत्तीर्णाः ) ।

३-स्त्रीभिः स्वगृहकार्ये त्यक्ते वयं कर्मकराणां भृत्यानां वशगा भविष्याम इति भोजनाच्छादनविषयेपि स्पष्टं परतन्त्रता भवेदित्याशयः ।

४-'फैशन' चिह्नं वेत्रदण्डं हस्ते गृहीत्वा ।

५-'सफ्रेजिस्ट' संप्रदायस्य 'पार्लमैण्ट' सकाशाद्बलपूर्वकमुच्चाधिकारप्राप्तेः कथा लण्डनसमाचारपाठकैर्न विस्मृता भवेत् ।

६-या गृहलक्ष्मीः पुरा गेहं मामण्डीति ( अतिशयेन मण्डयति स्म, यङ्लुक् ) । पुराणयोगे लट् । सैव इदानीं रणचण्डीरूपेण जनैश्चित्र्यते ।

सं० र० शिक्षाङ्कः



दीवानबहादुर दीवानसाहब श्रीमान् कृष्णकिशोरमहोदयः
( रईस लाहौर )

## दीवानबहादुर-दीवान-कृष्णकिशोरस्य संक्षिप्तं जीवनवृत्तम् ।

लेखकः-पं० श्रीपरमेश्वरानन्दशर्मशास्त्रिमहाभागाः, लाहौर ।

अस्ति पञ्जापप्रान्ते इरावत्यास्तटिन्या वामतटमुपाश्रितं लाभपुरं (लवपुर-लाहौर) नामेतिहासप्रसिद्धं महानगरम् । यदद्याप्येतत्प्रान्तप्रधानशासकस्य (गवर्नरपदव्यपदेश्यस्य) मुख्यं स्थानमस्ति । अत्रैवास्माकं चरितनायकः श्रीदीवानबहादुर-दीवान-कृष्णकिशोरः स्वावदानैः प्रथिते 'सरीन'क्षत्रियकुले चतुःसप्तत्युत्तराष्टादशशततमे ( १८७४ ) ख्रिष्टवत्सरे जन्म लेभे । अस्य पूर्वजाः मुगलसाम्राज्ये राजकीयान्यतिगौरवास्पदानि पदान्यधिचक्रुः । अस्य वृद्धप्रपितामहो दीवानकर्मचन्द्रस्तदात्वे पञ्जापराज्याधिपतेर्वीरकेसरिणो महाराजरणजित्सिंहस्य सान्धिविग्रहिकः सचिव आसीत् । स हि महाराजात् प्राज्यमाजीव्यं महान्तं सम्मानं च लेभे । अस्य पुत्रोऽस्मच्चरितनेतुः प्रपितामहो दीवानरत्नचन्द्रः शैशवादेव शिष्य(सिक्ख) राज्याधिपतेः कृपापात्रतां प्राप । स हि शिशुः सन् पित्रा दीवान-कर्मचन्द्रेण सह नैकशो महाराजमासीदति स्म । यौवने वयस्यस्य प्रखरया प्रज्ञयाकृष्टो महाराज एनं क्रमशो महामहत्सूत्तरदायित्वपूर्णेषु पदेषु नियुक्तवान् । आसीत् स तदानीं राजकार्येषु महाराजस्य परमं विश्वासभाजनम् ।

जन्मनैव धर्मनिष्ठोऽसौ महाभागः स्वजन्मभूमौ काश्यां च भूयांसि विश्वजनीनानि कार्याण्यकरोत् । धर्मशाला देवमन्दिराणि च प्रत्यतिष्ठिपत् । जलावतारान् सेतूंश्चाचीकरत् । सरांसि वापीश्चाचीखनत् ।

दीवान-रत्नचन्द्रस्य पुत्रोऽस्मच्चरितनायकस्य पितामहः दीवानभगवानदासोऽपि लोकोपकारिभिः कार्यैर्महतीं ख्यातिं लेभे । भारतसम्राडस्मै वंशपरम्परानुगामिनं 'दीवान' इत्युपाधिं वितीर्य गुणग्राहितामात्मनः प्राकाशयत् । यावदयं म्रियते स्म, अस्य भूयान् कालो भगवदर्चन एव व्यत्येति स्म । एष एव महानुभावो धर्मप्रचाराय लवपुरे सनातनधर्मसभामस्थापयत् ।

अस्यैकलः पुत्रो दीवानराजकुमारो गुणैः पितरमनुजहार । परं स दुर्दैववशात् स्वपितुर्निधनाद् वर्षत्रयानन्तरमेव देवभूयमयासीत् । अस्मच्चरितनायकः श्रीदीवानकृष्णकिशोरोऽस्यैव महाभागस्य ज्येष्ठः सुनोऽस्ति । शिक्षासमुचिते वयसि पूर्वमस्य धार्मिकी शिक्षा संस्कृतेन समारभ्यत । तदन्वसावाङ्गलभाषामध्याप्यत । राजकीयमहाविद्यालये बी. ए. श्रेण्यां पठन्नयं मध्य एवास्वास्थ्यवशादनिच्छन्नपि पित्राज्ञयाध्ययनमत्यजत् । पितरि जीवत्येवास्मै ब्रिटिशशासनाधिकारिभिः सम्मानार्हमवैतनिकं प्राड्विवाकपदं व्यतीर्यत ।

गच्छता कालेन अस्य नैकैर्लोकोपकारिभिः कार्यैः परां प्रसत्तिमुपगतो भारतसम्राड् एनं 'दीवानबहादुर' इत्युपाधिप्रदानेन सममानयत् । श्रीमतामग्रण्योऽप्ययं प्रकृत्या नितरां सरलः साधुश्चास्ति । अस्यां विश्यां

शताब्द्यामपि प्रभूतायां सम्पद्यपि दुरतिक्रम-पाश्चात्यशिक्षाप्रभावो नास्य नाप्यस्य संतते-र्मनागपि प्राभवदिति विचिन्त्य यत्सत्यं चित्री-यते चेतः ।

सैव पुरातनी वेषभूषा, तदेव पवित्रं हृ-ष्टिपुष्टिप्रदं दुग्धादिप्रधानं सात्त्विकं भोजनम्, सैव वंशक्रमानुगता धार्मिककृत्यानुष्ठानपद्ध-तिः, तदेव परम्परायातं विप्राणां दानमाना-दिभिरर्हणम्, स एवाचलनिश्चलो वेदशा-स्त्रेषु विश्वासः । न किञ्चिदपि विपर्यस्तम् । प्रत्युत विपर्यासशीलमिदं जगदिति सार्वज-नीनोऽनुभव एव दीवानमहोदयविषये सर्वथा विपर्यस्तः ।

अस्य महोदयस्य भूयान् समयः प्रायो जनताहित एव व्यत्येति । अनेकासां लोको-पकारिणीनां संस्थानां प्रधानपदमधितिष्ठत्ययं महानुभावः । त्रिगर्तप्रदेशे भूकम्पविनष्टस्य वज्रेश्वर्या मन्दिरस्य जीर्णोद्धारोऽस्यैव निरी-क्षणे समजनि । एष एव निरुक्तमन्दिरजी-र्णोद्धारसमितेर्महामन्त्र्यासीत् । लवपुरस्थ-सनातनधर्मकालेजप्रबन्धसमितेः सभापति-रध्ययमेव । अस्य वदान्यतायाः संस्कृतशि-क्षाप्रेम्णश्च किं वर्णयाम । नातिचिरमभूत्, लवपुरस्थ-सनातनधर्म-संस्कृतकालेजस्य सा-धुसंचालनायै अनेन वदान्यशिरोमणिना ल-क्षमेकं वितीर्णम् । अद्य स कालेजः 'दीवान-कृष्णकिशोर-सनातनधर्म-संस्कृतकालेज' इ-त्येवं तन्नाम्नैव व्यपदिश्यते ।

एतत्प्रपितामहस्थापिते देवालये प्रत्यहं सायंप्रातरनेके संस्कृताध्येतारश्छात्रा भोजनं लभन्ते, निवसन्ति च तत्रैव । जगदीश्वर-श्चिरायुषमेनं क्रियादित्याशास्य विरम्यते ।

---

छप्पय

[ ३ ]

पत्नी प्रियतममाप्य वन्दनं वचसा कुरुते। पतिसुहृत्सु ८संयत्सु करोन्मर्दनमातनुते ॥
पतिर्व्यलीके कृते ९क्षमाशब्दं बत वर्हति। पतिवस्तुनि दत्ते च १०धन्यवादानियमर्हति ॥
अर्द्धाङ्गिनीति गौरवपदम्, प्राणसमेति च संपदम्।
युक्त्याऽपहृत्य ददते नराः ११कृत्रिमोपचाराऽऽपदम् ॥

—भट्टश्रीमथुरानाथशास्त्री।

—*❀❀*—

# ❀ संस्कृतोन्नतिः ❀

( लेखकः -विद्याभूषणः श्रीतारादत्तपन्तः शास्त्री 'मानसः' )

अस्यां किल विंशशताब्द्यां सर्वे देशाः, सकलानि राष्ट्राणि, सर्वे समाजाः, किमुत स्वलाभहानिपरिचिताः सर्वेऽपि मनुष्याः स्वस्वोन्नतिप्राप्तय एवाहर्निशं चेष्टमाना लक्ष्यन्ते। स्वराष्ट्रस्य, समाजस्य, साहित्यस्य चोन्नतिं कामयमानास्ते तेऽनवरतमेव तत्तत्कार्येषु प्रयतन्ते। देशस्य, समाजस्य, राष्ट्रस्य च तदीयसाहित्येन सहान्वयव्यतिरेकसम्बन्धोऽस्तीति विदितमेव समेषाम्।

तथैव यद्यपि भारतीयसमाजनायका राष्ट्रोन्नतिसंलग्नैकमानसा महानुभावा भारतीयवर्तमानभाषाणां हिन्द्यादीनामुन्नतये दत्तावधाना एवाखिलक्षीभवन्ति, तथापि निखिलभाषाजननीं सर्वलोकविश्रुतज्ञानविज्ञानां परमादरणीयां संस्कृतां गिरमुपेक्ष्यैव तत्तत्कार्यप्रयत्नशीलास्ते कथं भारतीयसंस्कृतेः प्राच्यकलाकौशलस्य विज्ञानस्य च रक्षणं विधातुं समर्थाः स्युरिति विवादास्पदोऽयं विषयः।

भारतीयसमाजस्य रक्षका विभिन्नजातिसंघस्थापका अपि विद्वांसोऽन्यान्यानेव विधाय विधीन् संपूरितस्वकार्यलक्ष्यानात्मनो मन्यन्ते। न च कस्यापि विशिष्टपौरुषसम्पन्नस्य जनस्य संघस्य वा चेतसि संस्कृतोद्धारविषयकः प्रश्नो जागर्ति, न वा कश्चित्सकललोकसंभावनीयकीर्तिर्मेनामधः पतितां देवगवीमुद्धर्तुं प्रयतते।

अत्र विषये यदि किञ्चित्कथञ्चिदपि

७-'गुड्मॉर्निंङ्ग्' 'नमस्ते' इत्यादिवचनेन वन्दनं करोति।

८- संमिलत्सु।

९- अप्रिये कृते सति पत्युः 'क्षमस्व' इतिक्षमाशब्दं वर्हति उच्चारयति।

१०- इयम् ( पत्नी ) भूमिपतिते पतिवस्तुनि उत्थाप्य दत्ते सति धन्यवादं न अर्हति ( प्राप्नोति )।

११—'अर्धाङ्गिनी' इति गौरवस्य पदम्, 'दयिता' 'प्राणसमा' इति वाञ्छनीयां सम्पत्तिं युक्त्या अपहृत्य कृत्रिमोपचार( 'तकल्लुफ़' )रूपामापत्तिं ददते। सम्पत्तिमपहृत्य आपत्तिप्रदानेपि स्त्रीणां प्रसन्नता पुरुषाणां कौशलम्।

कष्टमनुभूयते दोदूयते वा तत्केवलं संस्कृतविद्वत्समाजेनैव मुष्टिमेयेन । संस्कृतज्ञा विद्वांसो हि संस्कृतभारत्या इमां दशां विलोक्य, आत्मीयाञ्च लोके तादृशीमसमर्थां दीनां दशां विचार्यैकत्रावस्थिताः सन्तः स्वहृदयैकनिबद्धरागायाः, चिररुग्णायाः, भुवि च पतितायाः अस्याः भारत्याः कृतेऽरण्यरोदनं विदधति । न हि तेषां पुरतः कश्चिदपि तादृग् भिषग्वरः शल्यचिकित्सको वा समापतति, यो हि तामिमां नीरुजां विधायोत्थापयितुमाश्वासयेत् ।

बहूनि हायनानि व्यतीतानि यदेश्वरचन्द्रविद्यासागरमहोदयेन वङ्गीयपण्डितसमाजस्य साहाय्येनास्या उद्धरणार्थं मनाक्प्रयत्नः प्रारब्धः, तदनन्तरञ्च काशीस्थैरनेकैर्विद्वद्वरैरस्या उद्धरणाय सूत्रपातो विहितः, पुनश्च माननीयैरनेकैर्विद्वद्वरेण्यैरखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्योद्योगः समारब्धः । अनेन सम्मेलनेन संस्कृतप्रचारो भारतवर्षे प्रतिदिशं यथाकथञ्चिद् विहितः, परं हिन्दीसाहित्यसम्मेलनेनाल्प एव काले यादृशी समुन्नतिः, हिन्दीसाहित्यस्य यावांश्चोपकारो विहितः, तथा किं संस्कृतोन्नतिरद्यापि जाता ? यद्यपि कालप्रभावेण संस्कृताध्येतॄणां छात्राणां संख्या प्रथमतोऽधिका सञ्जाता, अनेकेषु ग्रन्थेषु नवीनाष्टीकाटिप्पण्यादयश्च प्रकाश्यन्तेऽहरहस्तथापि राज्यसत्तायां कः प्रभावः संस्कृतस्य संस्कृतज्ञानाञ्च पतित इति नास्माभिरद्यापि ज्ञायते ।

संस्कृतज्ञानां कृते व्यासवाल्मीकिप्रभृतिमहाकवीनां ग्रन्थेभ्यः, वेदान्तोपनिषदादिग्रन्थेभ्यश्च सारभूतं रसमपकृष्य किं तदास्वादनमेव कार्यमेकं वर्त्तते; आहोस्विद् वर्तमानसमयोपयोगिसाहित्यस्य, अभिनवकविसमाजस्य, सामयिकेतिहासस्य नवीनज्ञानविज्ञानस्य च प्रतिष्ठापनमपि सुतरामपेक्ष्यते ?

किं संस्कृतविदुषां तथाविधकार्ये सहयोगदानं प्राणपणं कृत्वा स्वधर्मस्य संस्कृतेश्चाधारभूतस्य संस्कृतस्योन्नतये प्रयत्नकरणञ्च नावश्यकम् ? किमसंस्कृतज्ञेषु संस्कृतप्रचारः, संस्कृतमाहात्म्यपरिचयदानम्, संस्कृतस्य निखिलसाहित्यशिरोमणित्वप्रतिपादनमपि संस्कृतविदुषां कर्तव्यं न विद्यते ?

अल्पसंख्याकाः संस्कृतज्ञा यदि कथञ्चित्संस्कृतोन्नतिकर्तव्यताकेषु सम्मेलनेषु उपस्थिता अपि भवन्ति तदा तत्रैव स्वगभीरभाषणैरभिनवकविताश्रावणैश्च दिनद्वयमतिवाह्य पश्चात्स्वीयकर्णेषु तैलं प्रपूर्येव सुप्ता भवन्ति । तत्र संस्कृतोन्नतिविषयका ये ये प्रस्तावा भवन्ति, तेष्वनवहिता इव ते, न परं किमप्यात्मीयं कृत्यमवगच्छन्ति । कथन्न ते स्थाने स्थाने संस्कृतसंघं विधाय स्वमासिकं, त्रैमासिकं, षाण्मासिकं, वार्षिकं वा कृत्यं संस्कृतोन्नत्यर्थं संस्कृतसम्मेलनस्याचक्रीरन् ?

किमेकस्यैव जनस्य, तत्परिषदः सम्मेलनस्य वा प्रतिष्ठापयितुरेव निखिलं कर्तव्यमस्ति

लनस्योन्नतिः संघशक्त्यैव भवितुमर्हति, न चेदं संस्कृतज्ञाः पण्डिता इदानीमपि स्वमनसि निर्धारयन्ति। अस्माभिः संस्कृतोन्नतिकामुकैर्जनैस्तथा स्थाने स्थाने संस्कृतप्रचारो विधेयः, संस्कृतोन्नत्यै तथा द्रव्यसञ्चयश्च कर्तव्यः, तादृशी च प्रेरणा जनताहृदि समुत्पादनीया, यथाऽल्पेनैव कालेन वयं संस्कृतं समुद्धर्त्तुं पारयेम।

एतदर्थं द्रव्यसञ्चयस्य महत्येवावश्यकता वर्तते, सा च परःसहस्राणां भारतीयसंस्कृतविदुषामल्पेनैव प्रयासेन पूरयितुमर्हा। संस्कृतज्ञाः सर्वेऽपि जना अखिलभारतीयसंस्कृतसम्मेलनस्य सदस्याः सन्ति, अतः सर्वैरपि संस्कृतहितेच्छुभिर्विद्वद्भिस्तत्सदस्यरूपेण यथानिर्धारितं वार्षिकं शुल्कमखिलभारतीयसंस्कृतसम्मेलनप्रधानकार्यालये प्रेष्टव्यमिति प्रस्तावः संस्कृतसम्मेलनेन विधेयः।

अपरञ्च राजस्थाने संस्कृतविदुषां वृत्तिहरणरूप एष नियमो राजस्थानीयशिक्षासमित्या (राजपूतानाएज्यूकेशनबोर्डसमित्या) निर्धारितोऽस्ति यत् १९३८ ईस्वीयसंवत्सरादूर्ध्वं नाङ्ग्लविद्यालयेषु संस्कृतोपाधिपरीक्षोत्तीर्णा जना नवीनाध्यापकत्वेन गृहीता भवेयुः, परं बी.ए,एम.ए.परीक्षोत्तीर्णा एव जनास्तत्र स्थानं लभेरन् इति-नियमेनानेन कियती हानिः संस्कृतविदुषां संस्कृतसाहित्यस्य च स्यादिति संस्कृतज्ञाः स्वयमेव ज्ञास्यन्ति। स्थानाप्राप्त्या को वा संस्कृतमध्येतुं प्रवृत्तः स्यात्, संस्कृतानध्ययनेन च का वा संस्कृतवाङ्मयस्य हानिः स्यात्, साहित्यमन्तरा च भारतीयसंस्कृतेरार्यधर्मस्य च का क्षतिः स्यादिति पारम्परिका अनेका हानयोऽनेन भविष्यन्ति। एष नियमः संस्कृतस्य कथं विधातकः स्यादिति भवद्भिः स्वयमेव विचारणीयम्। एतद्विरोधार्थं श्रीराजस्थानीयसंस्कृतपरिषद् ब्यावरप्रधानकेन्द्रात्प्रयतमानाऽस्ति, परमद्यावधि न किमपि फलं चक्षुषोः समापतितम्। भूयश्चेयं परिषद् यथाशक्ति प्रयतिष्यत एव। अस्य नियमस्य सर्वेभ्य एव स्थानेभ्यः प्रबलो विरोधो विद्वद्भिर्विधेयः। परं संस्कृतपण्डिताः किंकर्तव्यविमूढा इव दृश्यन्ते।

इत्थं यदि संस्कृतज्ञानां संगठनशक्तिः प्रबला स्यात तर्हि तेषां कृत आङ्ग्लविद्यालयेषु संस्कृतविद्यालयेषु च विविधसौलभ्यं वेतनाध्यापनादिषु भवितुं शक्नुयात्। अन्यभाषाध्यापकानामिव तेषामपि वेतनादेर्नियतत्वमवधिश्च सुचारुरूपेण भवेत्।

संस्कृतपाठशालासु पाठकानां कृतेऽध्यापनसौलभ्याय सहायकाध्यापकानामपि अपेक्षा जायते, तदर्थमपि नियमाद्यो विधिवद्विधेया भवेयुः।

तदैव संस्कृतज्ञाः स्ववृत्तिचिन्तादिरहिताः समयलाभेन समवगाहितविविधविषयाववोधाश्च सन्तः संस्कृतमुन्नमयितुं समर्था भवेयुः।

अपरश्चैक उपायः संस्कृतप्रचारायानुष्ठेयः स च संस्कृतमाहात्म्यपरिचायकस्य भारतीयाध्यात्मज्ञानभौतिकविज्ञानादिवि-

कष्टमनुभूयते दोदूयते वा तत्केवलं संस्कृतविद्वत्समाजेनैव मुष्टिमेयेन। संस्कृतज्ञा विद्वांसो हि संस्कृतभारत्या इमां दशां विलोक्य, आत्मीयाश्च लोके तादृशीमसमर्थां दीनां दशां विचार्यैकत्रावस्थिताः सन्तः स्वहृदयैकनिबद्धरागायाः, चिररुग्णायाः, भुवि च पतिताया अस्याः भारत्याः कृतेऽरण्यरोदनं विदधति। न हि तेषां पुरतः कश्चिदपि तादृग् भिषग्वरः शल्यचिकित्सको वा समापतति, यो हि तामिमां नीरुजां विधायोत्थापयितुमाश्वासयेत्।

बहूनि हायनानि व्यतीतानि यदेश्वरचन्द्रविद्यासागरमहोदयेन वङ्गीयपण्डितसमाजस्य साहाय्येनास्या उद्धरणार्थं मनाक्प्रयत्नः प्रारब्धः, तदनन्तरञ्च काशीस्थैरनेकैर्विद्वद्वरैरस्या उद्धरणाय सूत्रपातो विहितः, पुनश्च माननीयैरनेकैर्विद्वद्वरेण्यैरखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्योद्योगः समारब्धः। अनेन सम्मेलनेन संस्कृतप्रचारो भारतवर्षे प्रतिदिशं यथाकथञ्चिद् विहितः, परं हिन्दीसाहित्यसम्मेलनेनाल्प एव काले यादृशी समुन्नतिः, हिन्दीसाहित्यस्य यावांश्चोपकारो विहितः, तथा किं संस्कृतोन्नतिरद्यापि जाता? यद्यपि कालप्रभावेण संस्कृताध्येतॄणां छात्राणां संख्या प्रथमतोऽधिका सञ्जाता, अनेकेषु ग्रन्थेषु नवीनाष्टीकाटिप्पण्यादयश्च प्रकाश्यन्तेऽहरहस्तथापि राज्यसत्तायां कः प्रभावः संस्कृतस्य संस्कृतज्ञानाञ्च पतित इति नास्माभिरद्यापि ज्ञायते।

संस्कृतज्ञानां कृते व्यासवाल्मीकिप्रभृतिमहाकवीनां ग्रन्थेभ्यः, वेदान्तोपनिषदादिग्रन्थेभ्यश्च सारभूतं रसमपकृष्य किं तदास्वादनमेव कार्यमेकं वर्त्तते; आहोस्विद् वर्तमानसमयोपयोगिसाहित्यस्य, अभिनवकविसमाजस्य, सामयिकेतिहासस्य नवीनज्ञानविज्ञानस्य च प्रतिष्ठापनमपि सुतरामपेक्ष्यते?

किं संस्कृतविदुषां तथाविधकार्ये सहयोगदानं प्राणपणं कृत्वा स्वधर्मस्य संस्कृतेश्चाधारभूतस्य संस्कृतस्योन्नतये प्रयत्नकरणञ्च नावश्यकम्? किमसंस्कृतज्ञेषु संस्कृतप्रचारः, संस्कृतमाहात्म्यपरिचयदानम्, संस्कृतस्य निखिलसाहित्यशिरोमणित्वप्रतिपादनमपि संस्कृतविदुषां कर्तव्यं न विद्यते?

अल्पसंख्याकाः संस्कृतज्ञा यदि कथञ्चित्संस्कृतोन्नतिकर्तव्यताकेषु सम्मेलनेषु उपस्थिता अपि भवन्ति तदा तत्रैव स्वगभीरभाषणैरभिनवकविताश्रावणैश्च दिनद्वयमतिवाह्य पश्चात्स्वीयकर्णेषु तैलं प्रपूर्येव सुप्ता भवन्ति। तत्र संस्कृतोन्नतिविषयका ये ये प्रस्तावा भवन्ति, तेष्वनवहिता इव ते, न परं किमप्यात्मीयं कृत्यमवगच्छन्ति। कथञ्च ते स्थाने स्थाने संस्कृतसंघं विधाय स्वमासिकं, त्रैमासिकं, षाण्मासिकं, वार्षिकं वा कृत्यं संस्कृतोन्नत्यर्थं संस्कृतसम्मेलनस्याचरीरन्?

किमेकस्यैव जनस्य, तत्परिषदः सम्मेलनस्य वा प्रतिष्ठापयितुरेव निखिलं कर्तव्यमस्ति संस्कृतोद्धरणाय? कस्यापि सम्मे-

लनस्योन्नतिः संघशक्त्यैव भवितुमर्हति, न चेदं संस्कृतज्ञाः पण्डिता इदानीमपि स्वमनसि निर्धारयन्ति। अस्माभिः संस्कृतोन्नतिकामुकैर्जनैस्तथा स्थाने स्थाने संस्कृतप्रचारो विधेयः, संस्कृतोन्नत्यै तथा द्रव्यसञ्चयश्च कर्तव्यः, तादृशी च प्रेरणा जनताहृदि समुत्पादनीया, यथाऽल्पेनैव कालेन वयं संस्कृतं समुद्धर्त्तुं पारयेम।

एतदर्थं द्रव्यसञ्चयस्य महत्येवावश्यकता वर्तते, सा च परःसहस्राणां भारतीयसंस्कृतविदुषामल्पेनैव प्रयासेन पूरयितुमर्हा। संस्कृतज्ञाः सर्वेऽपि जना अखिलभारतीयसंस्कृतसम्मेलनस्य सदस्याः सन्ति, अतः सवैंरपि संस्कृतहितेच्छुभिर्विद्वद्भिस्तत्सदस्यरूपेण यथानिर्धारितं वार्षिकं शुल्कमखिलभारतीयसंस्कृतसम्मेलनप्रधानकार्यालये प्रेष्टव्यमिति प्रस्तावः संस्कृतसम्मेलनेन विधेयः।

अपरञ्च राजस्थाने संस्कृतविदुषां वृत्तिहरणरूप एष नियमो राजस्थानीयशिक्षासमित्या (राजपूतानाएज्यूकेशनबोर्डसमित्या) निर्धारितोऽस्ति यत् १९३८ ईस्वीयसंवत्सरादूर्ध्वं नाङ्गलविद्यालयेषु संस्कृतोपाधिपरीक्षोत्तीर्णा जना नवीनाध्यापकत्वेन गृहीता भवेयुः, परं बी.ए ,एम. ए.परीक्षोत्तीर्णा एव जनास्तत्र स्थानं लभेरन् इति-नियमेनानेन कियती हानिः संस्कृतविदुषां संस्कृतसाहित्यस्य च स्यादिति संस्कृतज्ञाः स्वयमेव जानन्ति। स्थानाप्राप्त्या को वा संस्कृतमध्येतुं प्रवृत्तः स्यात्, संस्कृतानध्ययनेन च का वा संस्कृतवाङ्मयस्य हानिः स्यात्, साहित्यमन्तरा च भारतीयसंस्कृतेरार्यधर्मस्य च का क्षतिः स्यादिति पारम्परिका अनेका हानयोऽनेन भविष्यन्ति। एष नियमः संस्कृतस्य कथं विघातकः स्यादिति भवद्भिः स्वयमेव विचारणीयम्। एतद्विरोधार्थं श्रीराजस्थानीयसंस्कृतपरिषद् व्यावरप्रधानकेन्द्रात्प्रयतमानाऽस्ति, परमद्यावधि न किमपि फलं चक्षुषोः समापतितम्। भूयश्चेयं परिषद् यथाशक्ति प्रयतिष्यत एव। अस्य नियमस्य सर्वेभ्य एव स्थानेभ्यः प्रबलो विरोधो विद्वद्भिर्विधेयः। परं संस्कृतपण्डिताः किंकर्तव्यविमूढा इव दृश्यन्ते।

इत्थं यदि संस्कृतज्ञानां संगठनशक्तिः प्रबला स्यात्तर्हि तेषां कृत आङ्गलविद्यालयेषु संस्कृतविद्यालयेषु च विविधसौलभ्यं वेतनाध्यापनादिषु भवितुं शक्नुयात्। अन्यभाषाध्यापकानामिव तेषामपि वेतनादेर्नियतत्वमवधिश्च सुचारुरूपेण भवेत्।

संस्कृतपाठशालासु पाठकानां कृतेऽध्यापनसौलभ्याय सहायकाध्यापकानामपि अपेक्षा जायते, तदर्थमपि नियमाद्यो विधिवद्विधेया भवेयुः।

तदैव संस्कृतज्ञाः स्ववृत्तिचिन्तादिरहिताः समयलाभेन समवगाहितविविधविषयावबोधाश्च सन्तः संस्कृतमुन्नमयितुं समर्था भवेयुः।

अपरश्चैक उपायः संस्कृतप्रचारायानुष्ठेयः स च संस्कृतमाहात्म्यपरिचायकस्य भारतीयाध्यात्मज्ञानभौतिकविज्ञानादिवि-

विधसाहित्याङ्गद्योतकस्यैकस्य मासिकपत्रस्य हिन्दीभाषायां प्रकाशनमेव। यदीयसाहाय्येन संस्कृतानुरागिणोऽनेकेऽसंस्कृतज्ञाः पुरुषाः संस्कृतवाङ्मयस्य विशालतां, गभीरतां, निखिलसाहित्यमूर्धन्यत्वञ्चावगम्य तदुन्नत्यै प्रयत्नशीला भवेयुरिति शम्।

---

# शिक्षाया मुख्यमुद्देश्यम्

( ले० पं० बदरीनाथशर्मा शास्त्री, एम० ए०एक्स लेक्चरर लखनऊ युनीवर्सिटी )

शिक्षाया मुख्यमुद्देश्यमुन्नतिः सर्वतोमुखी।
इह लोके सुखावाप्तिरन्ते मुक्तिः सुनिश्चिता॥

सृष्टेरारम्भादद्यपर्यन्तं सर्वेऽपि तिर्यञ्चः पशुपक्षिसरीसृपादय एकस्यामेव प्राकृतायामवस्थायां वर्तमानाः श्रूयन्ते दृश्यन्ते च। तेषां स्थितिः शतशोऽब्देभ्यः प्राग्यादृशी वेदशास्त्रपुराणेतिहासादिषु वर्णिता तादृश्येवेदानीमप्युपलभ्यते। पशवो हि तदानीं यथा प्राकृतं शष्पादि चरित्वा जीवनं यापयामासुस्तथैवेदानीमपि नियतिकृतनियमसूत्रबद्धा एव तिष्ठन्ति। पतत्रिणो यथापूर्वमुड्डीयमाना द्रुमादिनीडेष्वेव क्षपां क्षपयन्ति। सरीसृपादयोऽपि सहजं स्वभावमनतिक्रम्य भूविवरादिष्वेव शेरते। न च तेषां परिस्थितौ किमपि परिवर्तनं केनापि दृष्टं श्रुतं वा।

परं मनुष्यस्य काप्यपरैव दशा दरीदृश्यते। स हि प्रकृतेर्दास्ये जातोऽपीश्वरदत्तनिजबुद्धिवैभवाच्छिक्षाप्रभावेण प्रकृतेर्नियमानुचिताहारविहारादिभिर्यथाविधि परिपालयंस्तामतिशयान उन्नतेः शिखरमारुह्य स्वाराज्यमवलम्बते। तथा हि तेन प्राकृतान् पदार्थान् संस्कृत्य निजभोगार्थमनेकानि प्रासादनगरादीनि गृहारामादीनि वापीकूपतडागादीनि नानाविधानि भक्ष्यभोज्यानि विविधानि च वैज्ञानिकान्यस्त्रशस्त्राणि शास्त्राणि यन्त्राणि तन्त्राणि च निर्मितानि। प्राकृतभाषां च संस्कृत्य प्रवृत्तिनिवृत्तिमार्गानुसारिण्युभयविधा शिक्षापद्धती रचिता। सा शिक्षा प्रथमं पितृपितामहादिवंशपरम्परागता श्रुतिरूपा बभूव। तदनन्तरं स्मरणशक्तिमान्द्ये तत्साहाय्यार्थं लेखशैल्यां प्रवृत्तायां वेदापरनाम्नी श्रुतिः साङ्गोपाङ्गा लिखिता। ततः स्मृतिपुराणेतिहासदर्शनसाहित्यसंगीतकलादीन्यखिलानि शिक्षासाधनानि लेखेन निबद्धानि। तद्द्वारा शिक्षावितरणाय च पूर्वमृषिमहर्ष्यादिगुरूणामाश्रमास्ततो वाराणस्यादौ तक्षशिलादौ च तत्र तत्र महान्ति विद्यापीठानि क्रमशश्चानेकानि विश्वविद्यालयादीनि सच्छात्रालयानि प्रतिष्ठापितानि, यत्र तत्रत्या देशदेशान्तरीयाश्च शतशश्छात्राः सुव्यवस्थितां नियमितां शिक्षां जगृहुर्गृह्णन्ति च। तत्रास्त्रशस्त्रयोस्तत्तच्छास्त्रेषु च प्रावीण्यमधिगम्य लब्धविविधोपाधिका लोके प्रतिष्ठां प्राप्य केचित् स्वस्वयोग्यतानुसारं राजसेवायां चोच्चावचानि पदानि लभन्ते। अन्ये च वैज्ञानिकाविष्कारेषु वाणिज्यादिस्वतन्त्रव्य-

वसायेषु च यावज्जीवं सोत्साहं संलग्नाः प्रभूतं यशो वित्तं चोपार्जयन्तः सांसारिकीमुन्नतिं कुर्वन्ति । सर्वेऽप्येते प्रवृत्तिमार्गावलम्बिन ऐहलौकिकसुखानुसरणरताः कदाचित् तदनुभवन्ति कदाचिच्च स्वप्नेऽप्यचिन्तितमाकस्मिकं दुःखमवशा भुञ्जते। न च ते कदापि दुःखासंभिन्नं परमानन्दरूपं शाश्वतिकं सुखं भोक्तुं पारयन्ते, अपारसंसारार्णवमग्नाश्च तमुत्तरितुमशक्ता अनादिकालादारभ्य मायाजालसंयताः स्वस्वकर्मणा विविधा जन्ममरणयातना अनुभवन्तोऽनवरतं परिभ्रमन्ति । तेषु केचन विरला भगवदनुकम्पयाऽनेकजन्मोपार्जितसुकृतेन वा सिद्धगुरूपदेशेन वाऽकस्मादासादितनिवृत्तिपथमनुसरन्तो वास्तविकं तत्त्वज्ञानं 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्यनुसारमुपायत्वेनाधिगच्छन्ति । ततः श्रुतिवाक्येभ्यः श्रुत्वोपपत्तिभिश्च मत्वाऽष्टाङ्गयोगपद्धत्या निदिध्यास्यात्मानं साक्षात्कुर्वाणाः संसारार्णवमुत्तीर्य यद्गत्वा न निवर्तन्ते तन्मुक्तिरूपं परमं धामोन्नतेः परां काष्ठामाप्नुवन्ति । एतदेव सर्वोन्नतं स्वाराज्यम् । अयं च सर्वः शिक्षाया एव प्रभावः। तथा चोक्तम्—

'मनुष्यादितरे सर्वे प्रकृतेर्दासतां गताः ।
स तु शिक्षाप्रभावेण स्वाराज्यमवलम्बते ॥' इति ।

---

# ❀ शिक्षासंस्कारो वा आर्यसंस्कृतेर्दाहसंस्कारो वा ? ❀

## भारतं च संस्कृतभाषा च

कांग्रेसनाम्न्या राष्ट्रसभाया मोहमुद्रिते चक्षुषी अनुभवाञ्जनेन किञ्चिदुन्मीलिते इत्यासीद्बहूनां हर्षोदयः । यतो ह्येषा संस्था वर्तमानां शिक्षापद्धतिं संस्कृत्य, भारतवर्षस्य राष्ट्रोचितां देशगौरववाहिनीं सकलहितावहां च शिक्षां च लिपिं च प्रचारयितुं वर्धानगरे शिक्षासंघं संघटयामास । अनेन संघेन विचार्य प्रचारिता शिक्षापद्धतिरवश्यं देशस्य गौरवाय च हिताय च भवेदिति विश्वासात्प्रमुदितमासीन्मानसं सर्वेषाम् । देशस्य निर्व्याजहितैषिणां मार्मिकाणामयमपि सुदृढो विश्वास आसीद् यदस्मिन्नखिलभारतीयशिक्षासंघे संस्कृतशिक्षाविषयोऽप्यवश्यं विचारितः स्यात् । यतो ह्ययं संघो भारताभ्युत्थानं च गौरवं च लक्ष्यीकृत्य शिक्षासंस्कारं कर्तुमिच्छति । एवंविधः संस्कारश्च संस्कृतं विना न कथंचित्सेद्धुमर्हति । सर्वस्मिन् जगति सर्वतः प्रथमं ज्ञानालोकप्रवर्तकाणामार्याणां देशस्यास्य भारतस्य यद् गौरवं तद्भारतीयमार्षं विज्ञानम्, आर्यसभ्यतां चादायैवेति को वा विचारशीलो न मन्येत । विजेतृराज्याधिष्ठायिनोऽपि पाश्चात्यदेशीया विद्वांसो विजितस्याप्यस्य राष्ट्रस्य साहित्यं यद् बहु मन्यन्ते सोयमुपनिषदां वेदानां कौटिलीयार्थशास्त्रसदृशानां पुस्तकानामेव महिमा । 'गीता' विश्वस्मिन् सर्वप्रधानं पुस्तकमिति पाश्चात्यविद्वद्भिरेव सर्वतो घोषितम्, श्रुतं चेदं कांग्रेसीयैरपि। अधु-

वशो कृरो विवक्षि न च तत्र पदं शक्नुः ।

नापि किं संस्कृतभाषाया महत्त्वं बोधनीयं स्यात् ?'

इदं हि भौतिकविज्ञान(साइन्स)युगम् । अनेन हि विज्ञानेन नानाविधैराविष्कारैर्युगान्तरमुपस्थापितमिति केन वा चक्षुष्मता न दृश्यते ? एवं सति विज्ञानद्वारा पादाक्रान्तीकृतसमस्तभूतलस्य युरोपस्य संमुखे भारतस्य यदि किञ्चिन्महत्त्वं कांग्रेसीयैः स्थापयितुमिष्यते तर्हि नवीनशिक्षापद्धत्या भारतं युरोपादग्रगामि तु किम्, साम्यसीमास्पर्श्यपि बहुभिर्वर्षैः संभवेत् । नाद्य तदिदं संभवतीति सामान्यविचारशीलोपि जानीयात् । ततश्च नवीनविज्ञानस्य संमुखेपि यद् भारतस्य गौरवं तद्धि अस्माकमाध्यात्मिकं ज्ञानमादायैव । अतिक्रान्तस्य जर्मनमहायुद्धस्य समाप्त्युत्तरं पाश्चात्यैर्विद्वद्भिर्या प्राच्यसभ्यताया निष्पक्षपातं प्रशंसा कृतासीत्सा किं विस्मृता विवेकिभिः ? शिरःस्फोटे जाते मार्गावरोधस्य परिज्ञानं भवति । एवमेव विज्ञानोद्दमत्तानां सर्वेषामेव पाश्चात्यराष्ट्राणां भौतिकीमुन्नतिमादाय यो महान् संघर्षः समभवत् तेन हि सर्वाण्यपि राष्ट्राणि यदा क्षतिग्रस्तान्यभवन् तदा तत्रत्यविदुषामन्तरात्मा जागरूकोऽभवत् । तैः पत्रेषु स्वीयविचाराः प्रकटिता यत् 'भारतादिप्राच्यदेशानां या आध्यात्मिकी उन्नतिः सैव विश्वस्य हितावहा जगति मिथः कल्याणप्रचारिका च । सेयं भौतिकी उन्नतिस्तु परस्परं स्पर्द्धा-ईर्ष्यादिप्रवर्तिका परिणामे दुःखावहैव' इति । अपि सेयमाध्यात्मिकी उन्नतिः संस्कृतमतिरिच्य संभवेत् ?

या हि संस्कृतभाषाऽद्यावधि सर्वस्यापि जगतः संमुखे भारतस्य शिरः समुन्नमयामास, संप्रत्यपि च यस्या महत्त्वं पारेसमुद्रमप्यभिमन्यते, तच्छिक्षाया उपरि समस्तभारतराष्ट्रस्य शिक्षाविचारसमयेऽवश्यावश्यं विचारः स्यादिति कुतो वा न भवेद्विश्वासः ? संस्कृतवाणी राष्ट्रभाषा भवेत्, इयमेव सर्वेषां व्यवहार्या स्यादिति यदि न समयानुकूलं तर्हि तत्प्रसूता हिन्द्येव सुखमधिकरोतु राष्ट्रसिंहासनम्, न विप्रतिपत्तिः । किन्तु यस्याः संस्कृतभाषाया ऋणेन भारतस्य महत्त्वम्, किमधिकम्, 'भारतम्' इति नामैव यत्प्रदत्तं सा संस्कृतभाषा दुग्धान्मक्षिकेव सर्वथा दूरीक्रियेत इति केन वा विश्वास्यं स्यात ? यो गान्धीमहाभागः सर्वस्यास्य वर्धास्कीमनाटकस्य सूत्रधारः स स्वयमेव संस्कृतस्य महत्त्वं स्वमुखेन सडिण्डिमं घोषयामास । संस्कृतप्रणयिभिर्न विस्मृतं स्याद्यत् कतिपयवर्षेभ्यः पूर्वं गान्धीमहाभागेन सर्वेषु पत्रेषु राष्ट्रियरूपेण घोषणा कृतासीद्यत् 'प्रत्येकराष्ट्रकार्यकारिणः संस्कृताध्ययनमनिवार्यम्' । 'संस्कृतं'पत्रेण सेयमाज्ञा स्थूलस्थूलैरक्षरैः स्वमुखपत्र एवोल्लिख्य सर्वतः प्रचारिता च । एवंस्थिते गान्धीमहोदयेनैव स्थापितेऽस्मिन्नखिलराष्ट्रीयशिक्षासंघे संस्कृतभाषैव वराकी उपेक्षिता स्यादिति पश्चिमायां सूर्योदय इव केनचित्संभाव्यं नाम ? किन्तु भारतीयानां भाग्यं सर्वमेव संमुखमा-

नयति। यस्य शिक्षासंस्कारस्योपरि सप्तति-कोटयो भारतीयनयनानि निर्निमेषं संलग्ना-न्यासन् सा वर्धानगरस्य शिक्षायोजना (व-र्धास्कीम) प्रकटीबभूव। परं तां दृष्ट्वा यव-नभाषाकवेर्हृदय*सूक्तिरेव हृदये जागरूका-ऽभवत्।

## शिक्षायोजना

येऽस्मिन् शिक्षासंस्कारे संस्कृतशिक्षा-प्रचारस्य स्वप्नं वीक्षन्ते स्म, तैर्जाकरहुसैन-जवनिकायामस्यामपसारितायामेव हिन्दुजा-तेरेव मूलनाशस्य भयंकरं दृश्यं संमुखस्थं दृष्ट-म्! विचारशीलेषु हिन्दुषु सर्वत्र हाहाकारो व्याप्तः। देशस्य एककोणमारभ्य अपरकोणं यावत् ये किल परिणामदर्शिनोऽभूवंस्तैरब्र-ह्मण्यमुदघोष्यत। देशसेवकानां बहूनां प्रति-वादः प्रकटपत्रैर्यत्र तत्र प्रकटिताः, प्रकटी-क्रियन्ते च। महात्मा नारायणस्वामिमहो-दयो यः किल हैदराबादस्य धर्मयुद्धे सर्वा-धिकारी समभूत्, संस्कृतज्ञानां सुपरिचितो वेदतीर्थनरदेवशास्त्रिमहोदयः, एतत्प्रभृतिभिः स्पष्टैरक्षरैः प्रकाशितमस्ति यद् "योयं राष्ट्री-यशिक्षाक्रमः प्रकटितोऽस्ति एष माहम्मदा-नामेव दृष्टिकोणमालम्ब्य निर्मितः। अस्मिन् स्पष्टमेव हिन्दीभाषायाः कण्ठच्छेदो विहि-तः" इत्यादि।

पाठकमहाभागाः! यस्मिन् शिक्षासं-स्काररूपे सूनागृहे हिन्दीभाषैव वराकी कण्ठे कुठाररूपं संस्कारमनुभवति तत्र तावत्सं-स्कृतभाषायाः समादरस्य का प्रत्याशा? हृद-यादपनीयतां गान्धीमहोदयस्य पूर्वं प्रतिज्ञा-वाक्यम्। अथवा, कोऽस्य दोषः? षष्टिव-र्षोत्तरं नश्यति मनुष्यस्य मतिरिति सुप्रसि-द्धं सर्वत्र। एतावत्कालमप्येष महोदयो यत्कार्यं कृतवानेतदपि बहु। साम्प्रतं तु का-लविजृम्भणे किमाश्चर्यम्? आश्चर्यमवश्य-मेतदस्ति यदन्येऽपि कांग्रेसीया अनेन शि-क्षाक्रमेण आर्यदेशस्यास्य अभ्युत्थानस्याशां कुर्वन्ति। एवंविधां शिक्षां प्राप्याऽपि अस्य देशस्य 'भारतम्' इति नाम तिष्ठेत्?

धर्मस्य तु नामापि श्रुत्वा कांग्रेसीयाः कम्पन्ते। किन्तु 'इतिहासः' 'सभ्यता' चेति विषयद्वयं पाठ्यतया परिगणितमेतैरपि। इतिहासो हि मनुष्यस्यात्मानं निर्माति। ए-तस्याध्ययनं विना शिक्षैव न संपूर्यते इति ह्याधुनिका विद्वांस एव समर्थयन्ते। किन्तु आर्यदेशजातैर्भारतीयैः कीदृश इतिहासः पठिष्यत इत्यस्मद्धृदयं दृढीकृत्य किञ्चिद् दृश्यताम्।

पाठ्यनियमनाय या समितिर्नियमिता तस्याः कोऽध्यक्ष इति श्रुतं किञ्चिन्? एतस्य हि नाम जाकिरहुसैनः! ख्वाजा गुलामहु-सैनसैयदैन, खुशलतलकशीशाहप्रभृतयो-ऽस्याः सदस्याः। अस्मिन् पाठ्यक्रमनिर्मा-णे हार्दिकी सहायता च कैर्दत्तेत्यपि जाकि-रहुसैनदेवस्यैव वचनाच्छ्रूयताम्। 'बुनिया-दी राष्ट्रीयशिक्षा'नामको यो विस्तृतः पा-

* 'बहुत शोर सुनते थे सीने में दिल का।
जो चीरा तो एक क़तरये ख़ूँ न निकला॥'

ठ्यक्रमो 'जाकिरहुसैनसमित्या' प्रकटितस्तस्यैकादशे पत्रे स महाभागो लिखति- 'अ×-लीगढस्थमुसलिमयुनीवर्सिटीट्रेनिङ्गकालेजस्य शिक्षकाणामहं विशिष्य कृतज्ञः, यैरस्मिन्कार्ये हार्दिकी सहायता दत्ता। आवश्यकतायां च स्वकीयविशेषज्ञानेनाहमुपकृतः' इति।

यादृशी साधनसामग्री प्राप्ता, तस्याः फलमपीदानीं प्रत्यक्षं परिचीयताम् —पृ०-२००-२०१

'पांचवां दर्जा

१ हिन्दुस्थान और दुनिया में इसलामी सभ्यता का इतिहास।

क. पैगम्बर मुहम्मद का जीवन-चरित्र, उनके समय के अरब देशकी सामाजिक और भौगोलिक परिस्थिति।

ख. इसलाम के इतिहास के आदियुग के कुछ नेताओं का जीवन चरित्र, उमर अली, हुसैन, खलीफा अबदुल अजीज।

ग. हिन्दुस्थान के साथ इसलामी सभ्यता के संयोग का प्रारम्भ—मुसलमानी व्यापारी और यात्रियों का हिन्दुस्तान में आगमन, मुहम्मदबिनकासिम, ख्वाजा मईनुद्दीन चिस्ती'

आपाततो दृष्ट्वैव मया ज्ञातं यद् भ्रमेण मया मुसलमानबालकानां पाठ्योयमितिहासो दृष्टः। तेषां कृते तदिदमुचितमेव। शैशवावस्थायाः परिष्कृतायां भूमौ इसलामधर्मप्रणयस्य सुदृढो बीजवापः कर्तव्य एव, येन ते धर्माग्रहिलाः सन्तः प्राणपातेनापि निजधर्ममिममन्यान्येषु प्रचारयेयुः। किन्तु पर्यन्ततः परिज्ञातं यदयं पाठ्यक्रमो भारतवर्षस्य राष्ट्रीयः। आर्यबालका इममेव पठेयुः। शतमुखं सर्वैः प्रशंसनीयः सोयं धर्मप्रणयो जाकिरहुसैनमहाभागस्य, येन इसलामधर्मस्य तत्सभ्यतायाः पैगम्बराणां खलीफानां च नामानि विचित्य विचित्याङ्कितानि। किन्तु यस्यार्यदेशस्य कृते सोयमितिहासो नियम्यते तत्रत्यानां भगवदवतारभूतानां राम-कृष्णादीनां तु नाममात्रमपि तल्लेखनी न सस्मार। मन्ये स वराको विस्मृतवानेव यदयं राष्ट्रीयः पाठ्यक्रमः। स तु देशमात्रे स्वधर्मप्रचारार्थोयं पाठ्यक्रम इति कृत्वा तथा लिलेख। अन्यथा यैर्महापुरुषैर्न केवलं स्वदेशायैव, अपितु समग्रायापि जगते शान्तेः प्रेम्णः अहिंसायाः सद्भावनायाश्च पाठः पाठितः, न खड्गधाराबलेन बलात्स्वधर्मप्रचारस्य, तेषां नामानि विस्मर्तुं शक्येरन्? तत्रापि तल्लीलाभूमौ भारते एव?

१७२ तमे पृष्ठे दृश्यताम्—'साथ ही बुद्ध, ईसा, मुहम्मद, जैसे मानव जाति के हितकारियों की जीवनकहानियाँ रहें'।

पाठकमहाभागाः! ज्ञातम्? भारते केवलं बुद्ध एव मानवजातिहितैषी जातः, नान्यः कश्चित्। मुहम्मदोपि च मन्ये भारते

× 'मैं खुद अलीगढ मुस्लिम युनिवर्सिटी ट्रेनिंग कॉलेज के शिक्षकों का विशेष कृतज्ञ हूं, जिन्होंने इस काममें मुझे दिली मदद पहुँचायी है। और जब जरूरत पडी है, अपने विशेषज्ञान [ मालूमात ] से लाभ उठाने का मुझे पूरा मौका दिया है।

एव जातः ! यस्मिन् भारते मर्यादापुरुषोत्तमः श्रीरामः, भगवान् श्रीकृष्णः, सतीशिरोमणिर्देवी सीता, सत्यवादी हरिश्चन्द्रः, तपस्वी ध्रुवः, भक्तवरः प्रह्लादः, धर्मराजो युधिष्ठिरः, महर्षयः कपिलकणादपतञ्जलिप्रभृतयः सहस्रं मानवजातिहितकारिणः समुत्पन्नास्तेषामत्र नाममात्रेणापि नोल्लेखः ! अयमेव किं कांग्रेससभाया न्यायः ?

अन्यद् दृश्यताम्—पृ. १७४—'जिन महापुरुषोंने मानवजाति के कुछ महान् हितसाधन किये हैं उनकी कहानियाँ, जैसे जरथुस्त, सुकरात, हुसैन, लिंकन, पाश्चर, हैवी, फ्रैंकलिन, फ्लोरेंस नाईटिंगेल, टालस्टॉय, बुकरवाशिंगटन (नीग्रोकर्मवीर), सन-यातसेन, गान्धी इत्यादि ।'

महापुरुषाणां नामावल्यां भारतीयः केवलं गान्धीमहोदय एवास्ति, नान्यः कश्चित् । गान्धिमहोदयेन पुस्तकमिदमामूलचूडं पठितम् । प्रस्तावनापि चास्य स्वहस्तेनैव लिखिता । अवश्यमनेन महाभागेन महापुरुषाणां नाममालायामात्मनो नाम पठितमस्ति । किमहमतिविनम्रभावेन तदिदं प्रष्टुमर्हामि यद्विशालेऽस्मिन्पुण्यतमे भारते भगवच्छङ्कराचार्य-रामानुजाचार्य-वल्लभाचार्यादयः किं केपि नोत्पन्नाः ? अथवा महावीरस्वामी, गुरुगोविन्दसिंहसमर्थरामदासप्रभृतयः किं केचिदपि महापुरुषेषु न परिगणनीया आसन् ? अथवा, तिष्ठन्त्वेते । महर्षिदयानन्द-लोकमान्यतिलक-गोखले-लाजपतराय-मालवीय-टागोरप्रभृतयः किं केऽपि महापुरुषा भारतेऽस्मिन्नाभूवन् ? अथवा मानवजातेर्हितसाधनमेव एभिर्न विहितम् ? लिंकनफस्टरहैवीप्रभृतीनां भारतेन कियान् संबन्धः, कश्च परिचयः ? तेषामत्र बहूनामेव कीर्तनं किन्तु येषां महापुरुषाणामुपदेशाज्जीवनचरिताच्च स्वयं गान्धिमहोदयेनापि स्वजीवने भूयसी शिक्षा गृहीता, तेषु कस्यचिदपि नामनिर्देशः किं गान्धिमहाभागस्य प्रतिष्ठाहानयेऽभविष्यत् ?

पुनरालोक्यताम् '२०२' पृष्ठम्— 'क नीचे लिखे हुए ऐतिहासिक पुरुषों के जीवनचरित्र और उनके समय की सामाजिक परिस्थिति का ज्ञान-अलबरूनी, इबनेबतूता, फ़ीरोजशाह तुगलक, बाबर, चाँदबीबी, नूरजहाँ और कुछ सन्त-साधुओं को कहानियाँ—जैसे कि दादू, कबीर, गुरुनानक, बाबा फ़रीद आदि ।'

महाभागाः ! सूच्यामस्यां फ़िरोजशाहतुगलकबाबरप्रभृतीनां यवनसम्राजां तु संग्रहः कृतः, परं तस्मिन्नेव काले जातानां महाराणाप्रताप-राणाराजसिंह-वीरदुर्गादास-वीरछत्रसालप्रभृतीनां नामापि न स्मृतिमुपेतम् ? हन्त राष्ट्रस्यास्य मर्यादारक्षणार्थं यैः प्राणा अपि तृणीकृतास्तेषां नामनिर्देशोपि किं राष्ट्रस्यास्य पातकाय ?

यवनोपासनाया अपि मन्ये परा काष्ठैवात्र जाता यदस्यां सूच्यां चाँदबीबीनूरजहाँसदृशीनां तु जीवनचरितमध्येतव्यतया नियमितं किन्तु निजसतीत्वस्य रक्षार्थं देहमपि दहने आहुतीकुर्वतीनां सतीनां महारा-

झीदुर्गापद्मिनीप्रभृतीनां नामापि न गृहीतम् ? भारतीयदेवीनां निजसतीत्वरक्षणमपि किं कांग्रेसस्य 'हिन्दुस्तानी कोषे' महापातकतया निर्दिष्टम् ? यन्नामग्रहणमप्यनुचितं ज्ञायते । यद्यासां देवीनां नामग्रहणे यवनानां भीति-भूतो बाधते स्म तर्हि देशसंमानरक्षायै समरशिरसि आततायिभिर्युद्ध्वा वीरगतिं गता झांसीप्रदेशस्य वीरमहाराज्ञी लक्ष्मीबाय्येव नामतो निर्देष्टव्यासीत्, किन्तु यत्र हिन्दुनामोपरि बिन्दुरेव दातव्यः स्यात्तत्र क उपायः ? अन्यथा दूरेऽस्तु देशमर्यादा । भक्तशिरोमणिर्मीराबाई, अहल्याबाई, एतदादीनामेव नामनिर्देशे कतमासीद्बाधा ? भारतीयमहिलानां भाग्यवैभवमालोक्यताम्, याभिर्देवीभिः कांग्रेसस्याज्ञया कारागारस्य दारुणा यातना अपि सहर्षं सोढास्तासामेव पूर्वजाता जनन्यः कांग्रेसस्य विचारे एवं बहिष्क्रियन्ते, हन्त !

अन्यदप्यालोकनीयमालोक्यताम् । पृ० २०२-२०३-"इसलामी सभ्यता का संसार पर क्या प्रभाव पड़ा है-अली ( पण्डित और नेता ), बलाल ( नीग्रोलोकतन्त्रका नेता ), हारूँ रशीद ( विद्या का सरपरस्त ), सलाउद्दीन (इसलामी बहादुरीका प्रतिनिधि), अबदुलरहमान तृतीय ( स्पेनमें मूरिश सभ्यता ), संसार में मुस्लिमसाम्राज्यका विस्तार ( भूगोल के पाठ्यक्रमके साथ )।

ख. दुनियाका मानचित्र खींचकर उसमें मुसलिम साम्राज्य का विस्तार दिखाना।"

पाठकमहोदयाः ! यद्भारतवर्षं मानवसभ्यताया आदिगुरुरासीत्, येन देशेन सडिण्डिमघोषमाघोषितम्— 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥', यद्देशजातानां महर्षीणामाध्यात्मिकग्रन्थान् न केवलं भारतवर्षीया एव अपितु पारेसमुद्रमधिवसन्तो विधर्मिणोपि मौलिमालाभिरुपलालयन्ति, तस्यैव देशस्य राष्ट्रीयैर्लिखितो दृष्टोयमितिहासः श्रीमद्भिः ? अस्मिन् अलिनो वर्णनमस्ति, परमादिकवेर्वाल्मीके विश्वमात्रोपजीव्यस्य भगवतो व्यासस्य वा नामनिर्देशोपि नास्ति । बगदादवासिनो हारूँरशीदस्य वर्णनमस्ति परं भूमण्डलविख्यातस्य विद्याप्रणयिनो भोजमहाराजस्य नामापि नास्ति । इस्लामीवीरतायाः प्रतिनिधेः सलाउद्दीनस्य कीर्तनमस्ति किन्तु हिन्दुसम्राजश्चन्द्रगुप्तस्य चिह्नमपि नालोक्यते । अब्दुलहरमानस्य संमानोस्ति किन्तु विश्वविख्यातस्य राजनीतिधुरन्धरस्य श्रीमतश्चाणक्यस्य स्मरणमपि लुप्तम् । अहह ! भूगोलस्याध्ययने भुवो मानचित्रमङ्कयित्वा मुसलिमसाम्राज्यविस्तारप्रदर्शनस्योपदेशो दत्तोस्ति किन्तु हिन्दुसाम्राज्यमपि कदाचिदासीदिति कथापि हन्त भारतेऽस्मिन् विलुप्ता । धन्यमेतेषां विदुषामैतिहासिकं ज्ञानम् !

हा हन्त ! यद्येतेषां दृशि सूर्यमण्डलमिव सर्वतो भासमानं हिन्दुसाम्राज्यमपि नोपागच्छत्तर्हि राष्ट्रपतेर्जवाहरलालनेहरूमहोदयस्य पत्रमेव पठितव्यमासीद्यत्र तेन सूचित·

मभूत्-'विजयनगरस्य हिन्दुसाम्राज्यमवश्यमुल्लेखनीयमस्ति' । 'चन्द्रगुप्तमौर्यस्य साम्राज्यमितिहासे सुदृढस्य विस्तृतस्य च भारतीयसाम्राज्यस्य सर्वतः प्रथम आदर्शोऽस्ति ।"

किन्तु किमेतेन स्यात् ? वर्धासमितिस्तु सेयं हिन्दुगौरवस्यैव 'वर्धापनम्' वाञ्छति । हन्त हन्त ! यस्मिन् भारतवर्षे अश्वपतिसदृशास्ते महीपतयः समुत्पन्ना यैः समग्रस्य विश्वस्य संमुखे सभेरीघोषं प्रत्यज्ञायत—'न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।' तेषामेव राज्ञां सोयं तिरस्कारः !! अपि कांग्रेसीयाः समस्तेपि भूतले एवंविधानां नरेशानां साम्यमुपस्थापयितुं शक्नुयुः ? किन्त्वेवं प्रतीयते यत् कांग्रेसस्य दृष्टिर्हिन्दुजातिं हिन्दुधर्मं हिन्दुसंस्कृतिं हिन्दीभाषां हिन्दुसाम्राज्यं सर्वमप्येतत् साम्प्रदायिकतया व्याप्तमालोकयति । ततः समाप्तैव हिन्दूनां संकथेति फलतो बोद्धव्यम् । यदि गान्धिमहोदयः पञ्चतन्त्रस्य गङ्गदत्तमण्डूकवत् स्वकार्यसाधननीतिमत्राभिनयति तर्हि तस्याः कथायाः परिणामोऽत्रापि विचारणीयः स्यात् । पूर्वत एव दुर्दुरूढो धूर्तः सहायकः स्वहस्तेनैव दत्तसर्वाधिकारतया कदाचित्स्वजातिमूलनाशायैव न प्रभवेत ।

संस्कृतधुरन्धराः पण्डितपुरन्दराः ! भारतस्यैककोणमारभ्य परकोणपर्यन्तं वर्णविभागनिर्विशेषः कीदृशः शिक्षाक्रमः परस्तात्प्रचलिष्यतीति मया स्थालीपुलाकन्यायेन परीक्षितुं निहितः श्रीमतां सविधे । ये किल महोदया जाकिरहुसैनज्योतिःस्वरूपमिमं पाठ्यक्रमं स्वचक्षुर्भ्यां द्रष्टुमिच्छन्ति ते 'बुनियादी राष्ट्रीय शिक्षा' नामकं पुस्तकमिदं 'सेगाँव वर्धा सी. पी.' इति स्थानात् अष्टभिराणकैः प्राप्तुं शक्नुयुः । अस्तु, इयं 'बुनियादी राष्ट्रीयशिक्षायाः' पावनी कथा श्रुता श्रीमद्भिः । अधुना देशमात्रव्यापिनी या वर्णमालाशिक्षा प्रचरिष्यति तस्या अपि परिचयः किञ्चित्प्राप्यताम् ।

## राष्ट्रीयलिपिः

'वर्णशिक्षा' 'वर्णबोध' इत्यादिनामानि विरमयन्तां संप्रति । 'वर्ण' इति नामैव कांग्रेसस्य कर्णयोः सूचीवेधं विधत्ते । ततश्च वर्णलोप एव तस्या अभिमतः । साम्प्रतं शिशुपाठ्यस्य प्रथमपुस्तकस्य नाम भविष्यति 'हिन्दुस्तानी कायदा' । पाठकाः पाषाणहृदया भवत । पूर्वं भाषाया भस्मसाद्भवनं दृष्टम् । इदानीं लिपेर्विलोपोपि लोचनाभ्यां विलोक्यताम् ।

अस्मिन्पुस्तके हिन्द्यक्षराणां यथा हत्या विहिता तथा 'हिन्दुस्तानी' इति नाम धृत्वा आरव्यपारसीकभाषाशब्दास्तादृशा बलात्प्रवेशिता यान् पारसीकपण्डितः कश्चित् 'मुन्शी' एव वेदितुं शक्नुयात् न तावदुर्दूभाषाभिज्ञोपि । अस्तु 'अचः स्वराः' इति यान्पाणिनीयपण्डितवराः प्रोचुस्तेषां दशा दृश्यताम् । पृ० ३ 'अ आ अि अी अु अू अे अै ओ औ अं अः' । इति ।

दृष्टं श्रीमद्भिः ? इकार, उकार, एकाराणां त्रयाणामपि पूर्वशरीरं यमसदनं संप्रे-

झीदुर्गापद्मिनीप्रभृतीनां नामापि न गृहीतम्! भारतीयदेवीनां निजसतीत्वरक्षणमपि किं कांग्रेसस्य 'हिन्दुस्तानी कोषे' महापातकतया निर्दिष्टम्? यन्नामग्रहणमप्यनुचितं ज्ञायते। यद्यासां देवीनां नामग्रहणे यवनानां भीति-भूतो बाधते स्म तर्हि देशसंमानरक्षायै समरशिरसि आततायिभिर्युद्ध्वा वीरगतिं गता झांसीप्रदेशस्य वीरमहाराज्ञी लक्ष्मीबाय्येव नामतो निर्देष्टव्यासीत्, किन्तु यत्र हिन्दुनामोपरि बिन्दुरेव दातव्यः स्यात्तत्र क उपायः? अन्यथा दूरेस्तु देशमर्यादा। भक्तशिरोमणिर्मीराबाई, अहल्याबाई, एतदादीनामेव नामनिर्देशे कतमासीद्बाधा? भारतीयमहिलानां भाग्यवैभवमालोक्यताम्, याभिर्देवीभिः कांग्रेसस्याज्ञया कारागारस्य दारुणा यातना अपि सहर्षं सोढास्तासामेव पूर्वजाता जनन्यः कांग्रेसस्य विचारे एवं बहिष्क्रियन्ते, हन्त!

अन्यदप्यालोकनीयमालोक्यताम्। पृ० २०२–२०३–"इसलामी सभ्यता का संसार पर क्या प्रभाव पडा है–अली (पण्डित और नेता), बलाल (नीग्रोन्नोकतन्त्रका नेता), हारूँ रशीद (विद्या का सरपरस्त), सलाउद्दीन (इसलामी बहादुरीका प्रतिनिधि), अबदुलरहमान तृतीय (स्पेनमें मूरिश सभ्यता), संसार में मुस्लिमसाम्राज्यका विस्तार (भूगोल के पाठ्यक्रमके साथ)।

ख. दुनियाका मानचित्र खींचकर उसमें मुसलिम साम्राज्य का विस्तार दिखाना।"

पाठकमहोदयाः! यद्भारतवर्षं मानवसभ्यताया आदिगुरुरासीत्, येन देशेन सडिण्डिमघोषमाघोषितम्– 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥', यद्देशजातानां महर्षीणामाध्यात्मिकग्रन्थान् न केवलं भारतवर्षीया एव अपितु पारेसमुद्रमधिवसन्तो विधर्मिणोपि मौलिमालाभिरुपलालयन्ति, तस्यैव देशस्य राष्ट्रीयैर्लिखितो दृष्टोयमितिहासः श्रीमद्भिः? अस्मिन् अलिनो वर्णनमस्ति, परमादिकवेर्वाल्मीके विश्वमात्रोपजीव्यस्य भगवतो व्यासस्य वा नामनिर्देशोपि नास्ति। बगदादवासिनो हारूँरशीदस्य वर्णनमस्ति परं भूमण्डलविख्यातस्य विद्याप्रणयिनो भोजमहाराजस्य नामापि नास्ति। इस्लामीवीरतायाः प्रतिनिधेः सलाउद्दीनस्य कीर्तनमस्ति किन्तु हिन्दुसम्राजश्चन्द्रगुप्तस्य चिह्नमपि नालोक्यते। अब्दुलरहमानस्य संमानोस्ति किन्तु विश्वविख्यातस्य राजनीतिधुरन्धरस्य श्रीमतश्चाणक्यस्य स्मरणमपि लुप्तम्। अहह! भूगोलस्याध्ययने भुवो मानचित्रमङ्कयित्वा मुसलिमसाम्राज्यविस्तारप्रदर्शनस्योपदेशो दत्तोस्ति किन्तु हिन्दुसाम्राज्यमपि कदाचिदासीदिति कथापि हन्त भारतेऽस्मिन् विलुप्ता। धन्यमेतेषां विदुषामैतिहासिकं ज्ञानम्!

हा हन्त! यद्येतेषां दृशि सूर्यमण्डलमिव सर्वतो भासमानं हिन्दुसाम्राज्यमपि नोपागच्छत्तर्हि राष्ट्रपतेर्जवाहरलालनेहरूमहोदयस्य पत्रमेव पठितव्यमासीद्यत्र तेन सूचित·

मभूत्-'विजयनगरस्य हिन्दुसाम्राज्यमवश्यमुल्लेखनीयमस्ति' । 'चन्द्रगुप्तमौर्यस्य साम्राज्यमितिहासे सुदृढस्य विस्तृतस्य च भारतीयसाम्राज्यस्य सर्वतः प्रथम आदर्शोस्ति ।"

किन्तु किमेतेन स्यात् ? वर्धासमितिस्तु सेयं हिन्दुगौरवस्यैव 'वर्धापनम्' वाञ्छति । हन्त हन्त ! यस्मिन् भारतवर्षे अश्वपतिसदृशास्ते महीपतयः समुत्पन्ना यैः समग्रस्य विश्वस्य संमुखे सभेरीघोषं प्रत्यज्ञायत-'न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।' तेषामेव राज्ञां सोयं तिरस्कारः !! अपि कांग्रेसीयाः समस्तेपि भूतले एवंविधानां नरेशानां साम्यमुपस्थापयितुं शक्नुयुः ? किन्त्वेवं प्रतीयते यत् कांग्रेसस्य दृष्टिर्हिन्दुजातिं हिन्दुधर्मं हिन्दुसंस्कृतिं हिन्दीभाषां हिन्दुसाम्राज्यं सर्वमप्येतत् साम्प्रदायिकतया व्याप्तमालोकयति । ततः समाप्तैव हिन्दूनां संकथेति फलतो बोद्धव्यम् । यदि गान्धिमहोदयः पञ्चतन्त्रस्य गङ्गदत्तमण्डूकवत् स्वकार्यसाधननीतिमत्राभिनयति तर्हि तस्याः कथायाः परिणामोऽत्रापि विचारणीयः स्यात् । पूर्वत एव दुर्दुरूढो धूर्तः सहायकः स्वहस्तेनैव दत्तसर्वाधिकारतया कदाचित्स्वजातिमूलनाशायैव न प्रभवेत ।

संस्कृतधुरन्धराः पण्डितपुरन्दराः ! भारतस्यैककोणमारभ्य परकोणपर्यन्तं वर्णविभागनिर्विशेषः कीदृशः शिक्षाक्रमः परस्तात्प्रचलिष्यतीति मया स्थालीपुलाकन्यायेन परीक्षितुं निहितः श्रीमतां समक्षे । ये किल महोदया जाकिरहुसैनज्योतिःस्वरूपमिमं पाठ्यक्रमं स्वचक्षुर्भ्यां द्रष्टुमिच्छन्ति ते 'बुनियादी राष्ट्रीय शिक्षा' नामकं पुस्तकमिदं 'सेगाँव वर्धा सी. पी.' इति स्थानात् अष्टभिराणकैः प्राप्तुं शक्नुयुः । अस्तु, इयं 'बुनियादी राष्ट्रीयशिक्षायाः' पावनी कथा श्रुता श्रीमद्भिः । अधुना देशमात्रव्यापिनी या वर्णमालाशिक्षा प्रचरिष्यति तस्या अपि परिचयः किञ्चित्प्राप्यताम् ।

## राष्ट्रीयलिपिः

'वर्णशिक्षा' 'वर्णबोध' इत्यादिनामानि विस्मर्यन्तां संप्रति । 'वर्ण' इति नामैव कांग्रेसस्य कर्णयोः सूचीवेधं विधत्ते । ततश्च वर्णलोप एव तस्या अभिमतः । साम्प्रतं शिशुपाठ्यस्य प्रथमपुस्तकस्य नाम भविष्यति 'हिन्दुस्तानी कायदा' । पाठकाः पाषाणहृदया भवत । पूर्वं भाषाया भस्मसाद्भवनं दृष्टम् । इदानीं लिपेर्विलोपोपि लोचनाभ्यां विलोक्यताम् ।

अस्मिन्पुस्तके हिन्द्यक्षराणां यथा हत्या विहिता तथा 'हिन्दुस्तानी' इति नाम धृत्वा आरव्यपारसीकभाषाशब्दास्तादृशा बलात्प्रवेशिता यान् पारसीकपण्डितः कश्चित् 'मुन्शी' एव वेदितुं शक्नुयात् न तावदुर्दूभाषाभिज्ञोपि । अस्तु 'अचः स्वराः' इति यान्पाणिनीयपण्डितवराः प्रोचुस्तेषां दशा दृश्यताम् । पृ० ३ 'अ आ अि अी अु अू अे अै ओ औ अं अः' । इति ।

दृष्टं श्रीमद्भिः ? इकार, उकार, एकाराणां त्रयाणामपि पूर्वशरीरं यमसदनं संप्रे-

स्य यातनाशरीरमिव दत्तमस्ति। 'ऋ'कारो मुखाग्रतो बलान्नद्धया महत्या शुण्डया पिण्डीकृतः। 'ॠ'कारो ग्राहगीर्णो गज इव चरणे बलाद् ग्रस्तोऽभूत। 'ऋे'कारस्य तु 'अतिलोभाभिभूतस्य शिखा भवति मस्तके' इति पञ्चतन्त्रकथावत् शिरसि 'शृङ्गोन्नति'-र्जाता। अस्तु तावत्। छायारूपेण प्रेतशरीरं तु तावदेषां दृश्यते। 'ऋकार-लृकारौ' तु सर्वथा 'पशुमारममारयत्!'। इदानीम् ऋकारलृकारयोरभावे संस्कृतभाषायास्तद्व्याकरणस्य वा का दशा स्यादिति किञ्चिद्विचार्यताम्। कथमिदानीं 'कृष्णर्द्धिः' श्रूयेत देशे? कथमेष 'मार्तण्ड उपार्च्छेति!'। अपि सेयं गुणवृद्धिकथा सर्वथा लुप्तैव भारतीयानाम्? 'लृ'कारस्तु पूर्वमपि हिन्दीभाषायां वर्णमालालंकार एवासीत्केवलम्। किन्तु 'ऋ' काराभावे हिन्दीभाषाज्ञानां '१कृतिः' कथं सिध्येत्? 'दृष्टि'स्तु मन्ये लुप्येतैव, परं किं 'स्मृतिः' अपि विस्मृतिगर्भे विलीयेत? 'अमृतम्' अपि किं मृतं भवेत्?

यदि तु 'स्त्रिति:, 'अम्रितम्, इत्यादिरूपेण तस्य पुनर्जन्म संपाद्येत तर्हि अहं वक्ष्यामि 'इदं त्रिथा (वृथा)'। अनात्मज्ञा इमे प्रष्टव्याः-भारते एव किम्, भूमण्डलमात्रेपि 'ऋ'काराभावे किं '२कार्यम्' संपद्येत? ऋकारं बहिष्कृत्यापि किं भारतीयाः ३'आर्याः' स्युः? एषां तु 'कृष्टान्' अपि 'क्रिष्टान्' स्यात्। किन्तु किं संस्कृतेपि 'ऋष्यते' इत्यस्य स्थाने 'रिष्यते' इत्यकाण्डे हिंसा संपाद्येत ४? संस्कृतज्ञानां कृते संप्रति सूचनामात्रमेतत्। अन्यथा भूयानत्र वक्तव्यावकाशः।

गान्धिवराकस्य तेन नीयमानानामन्येषां वा बुद्धिरेव कियती, यत्ते जानीयुर्यन्नैषा वर्णमाला साधारणैः सृष्टा। एकैकमप्यस्या वर्णाऽलौकिकप्रभावसंपन्नः। एभिर्वर्णैरेव मन्त्रः संपद्यते यः किल कियत्प्रभावशाली भवतीति मन्ये भारतीयेभ्यस्तु न बोधनीयं भवेत्। एकमक्षरम् 'ओंकारं' तु मन्ये गान्धीमहोदयोपि जानात्येव यदस्य भारते कियान्महिमा। एवं सत्यपि जाकिरहुसैनादिसदृशानां सत्पात्राणां द्वारा योयं वर्णमन्त्राणां बलिदानारम्भः स किं भारतीयानां भव्यायैव भवेत्? भारतीयवर्णमालान्तर्गतस्य प्रत्येकं वर्णस्याकारो विज्ञानानुसारी। मन्त्रसाधनादिष्वेषां भूयानुपयोगः। मन्त्रजपात्पूर्वं मातृकान्यासेन मन्त्रशुद्धिविधानं तन्त्रपरतन्त्रस्य भारतस्य मन्ये प्रत्येकप्रान्त एव जानीयात्। तथापि च येयं चेष्टा प्रारब्धा सा किल भारतहृदयभूतस्य विज्ञानस्योच्छेदाय, शास्त्राणां मूलनाशाय चे ति को वा न विजानीयात्?

१-ऋकारसत्तायामेव कृतिः इत्यादयः शब्दा लेखितुं शक्यन्त इति तात्पर्यम्।

२-'कृ' धातोः ऋकारस्य वृद्धिं कृत्वा 'कार्यम्' इति शब्दो निष्पाद्यते। 'क्रि' इति स्वीकृतेपि 'आर्' इति वृद्धिः कथं स्यात्?

३-गत्यर्थकस्य 'ऋ'धातोर्वृद्धिं कृत्वा 'आर्य' इति रूपं संपद्यते इति भावः।

४-'ऋष्यते' इत्यत्र गतिरर्थः, 'रिष्यते' इत्यस्य तु हिंसेत्याशयः।

यदीमे शास्त्रज्ञानप्रद्यन् तर्हि विदितमेषाम–भविष्यद् यद् 'वर्णोद्धार'तन्त्रे वर्णानां स्वरूपादिकं विस्तृत्य वर्णितमस्तीति । किन्तु सर्वप्रकारेण वर्णसंहार एव येषामभीष्टस्ते वर्णोद्धारं किमिति पश्येयुः ?

किञ्च--साधारणीयं वार्ता यत् यानि सन्ध्यक्षराणि ( यथा अ+उ='ओ' इत्यादीनि ) तेषु नवीना सेयं योजना संभवेदपि, परम् 'इ' 'उ' वर्णावपि किम् 'अ'कारसंयोगेन निष्पन्नौ यदेवमत्रापि भेदनीतिरवलम्ब्यते ? नवीनाक्षरविधातृणामेकेनैवानेन कणेन सर्वोपि बुद्धिपुलाकः परीक्षितो भवेत् । अथवा हुसैनसदृशानां विज्ञानसमुद्राणां सविधे मास्तु विज्ञानकथा । किन्तु वर्णसांकर्येणानेन [ अर्थात् नवीनाक्षरमिश्रणेन ] देशस्यास्य अर्थहानिरेव कियती भवेदित्येव तावद्विचार्यम् । नवीनवर्णमालायामेवास्यां सर्वतः प्रचरितायाम्, प्राचीनलिपिमुद्रितानि पुस्तकानि शनैः शनैः सर्वाण्येवाऽपठनीयानि संपद्येरन् । पाठ्यपुस्तकानि विहाय न सर्वेषां मुद्रणं वारं वारं भवति, विशेषतस्तु संस्कृतभाषामयानाम् । यानि शास्त्रपुस्तकानि प्रकाशकस्य साहसाद् विद्यानुरागात् पण्डितानां सौभाग्याद्वा न जाने कथमेकवारं मुद्रितानि । तेषां नवीनलिप्यां पुनर्मुद्रणं किं राष्ट्रीयैः कार्येत ? न चेत् प्राक्तनसाहित्यस्य कियती हानिः संपद्येतेति किं बुद्धिमहासागरैरेभिर्विचारितचरम् ?

हिन्दुत्वाभिमानिनः पाठकमहाभागास्त्वरितमवधत्त । सर्वनाशेऽधुना स्वल्प एव समयोऽवशिष्यते । किं नालोकितं श्रीमद्भिर्यत् भोजनसांकर्य–यथेच्छविवाहादिरूपाणां शस्त्राणां कदाचित्प्रतीकारोऽपि भवेत् । किन्तु सांप्रतं दुग्धपोष्याणां बालकानामेवान्तःकरणे इतिहाससूचीयन्त्रेण आर्यत्वमूर्च्छापादकोऽयं विषप्रयोगः कर्तुमिष्यते । अन्तः प्रसृते विषे किमार्यजीवनस्य काचिदाशा ? त्वरितमस्य प्रतीकाराय संघटितरूपेण प्रबलतमं प्रतिवादमाचरत । अन्यथाऽस्मिन् समये शैथिल्यावलम्बने भाविसन्ततेर्हिन्दुत्वाय विलोदकमेव सिञ्चतेत्यलम् ।

भट्टश्रीमथुरानाथशास्त्री ।

---

## ❋ "संस्कृत-भाषा कथं व्यावहारिकी भवेत् ?" ❋

( निबन्धा -वैद्यमखिरामशर्मभिषगाचार्यः प्रिंसिपल–एस्०एच्० आयुर्वेद महाविद्यालय, रतनगढ़
( बीकानेर ), प्रधान-मंत्री-नि० भा० आयुर्वेदमहामण्डल राजपूताना–प्रान्तीय,
मेम्बर–संस्कृतबोर्ड जयपुर स्टेट )

श्रीलक्ष्मीचरणद्वन्द्वं, वन्दे भक्त्या गुणप्रदम् ।
यत्कृपा सर्वं-संसारं ससारं सुखयत्यलम् ॥ १ ॥

इदं तु निर्विवादसिद्धं यत्सकलभाषाजननी, अतीवपुरातनी संस्कृतभाषैव वर्तते । यतः सृष्टिकालादारभ्य सर्वविधशास्त्रग्रन्थ-रत्नान्यस्यां भाषायामेव निबद्धानि वर्तन्ते । हिन्दूनां महत्त्व-पूर्णाः षोडश-संस्कारा अस्यामेव भाषायां निबद्धाः सन्ति ।

येषु च विवाह-संस्कारोऽतीवमहत्त्वं प्रख्यापयति, यदनन्तरं विवाहिता बालाऽन्धमपि पतिं देववत्पूजयति, सा मनसि मन्यते यदहं संस्कृतमन्त्रैर्विवाहिता कथमुपहन्यामिमं क्रमम्, अतस्ताडिता नियन्त्रिता निगडितापि विनयं न जहाति। एतादृशं महत्त्वं विवाहसंस्कारस्याद्यापि भारते प्रचलितमस्ति। सर्वत्र भारते तैरेव संस्कृत-मन्त्रैः संस्काराः क्रियन्ते, तैश्च पापशान्तिर्धर्मोत्पादश्चेति। तदेतन्महत्त्वं संस्कृतभाषाया व्यवहारोपयोगित्वे प्राचीनाचार्याणामनवरत-परिश्रम-फलं द्योतयति।

येदृशी सुरभारती सकलभाषासु श्रेष्ठा चासीत्साद्य जनितानेकभाषापि श्वश्रूः कुपुत्रवधूष्विव पूज्या सत्यपि न तथा प्रकाशते, नोन्नतिमार्गानुगामिनी च दृश्यते। सुपरिष्कृतस्य गौरवास्पदभूतस्य सुरभारतीसाहित्यस्य हन्त का विषमा दशा सूर्यास्ते मुकुलित-कमल-पुष्पस्येव संजाता। मन्येऽनेकाभिर्हूणयवन-गौराङ्गादिजातिभिरस्याः सर्वविधसम्पन्न-साहित्य-समाश्रयेणैव निज-साहित्यमुपबृंहितम्। ताभ्यः प्रत्युपकारमीहमानेयं स्वार्थपरायणाभिस्ताभिः प्रत्युत म्रियमाणदशां प्रापिता किंचिदुच्छ्वसितीति कस्य सहृदयस्य संस्कृतानुरागिणो मानसं न दूयेत? सा जातिः, सा संस्कृतिः, सा भाषा, तत्साहित्यम्, स देशः, स पुरुषश्च धन्यो येन, केनापि शुभेन कर्मणा लोकमुपगम्य स्वप्रतिष्ठा सुव्यवस्थया व्यवस्थापिता स्याद् वृटिशराज्यवदिति। सत्यम्, परं नैतदाश्चर्यम्, पुरा हि हिन्दू-साम्राज्ये संस्कृत-भाषायाः परोन्नतिरासीद्यन्न्यायालये, धर्मकार्ये, दण्ड-विधानादिषु सर्वत्रैव संस्कृतभाषामधीत्य प्रभवन्ति स्म तत्तत्कार्येष्वध्यक्षाः। यवन-साम्राज्ये फारसीभाषायाः प्राधान्यं अधुना चैंग्लिशभाषायाः परम-प्रधानता। परं न कस्यचिदपि समाना परिस्थितिस्तिष्ठति। काले काले ह्युत्थानपतनमनवरतं संभवत्येव चक्रवत्। अनुमीयते कालक्रमेण पुनरस्माकं संस्कृत-भाषाया अवसरः। अतः सुरभारतीपादपं प्ररोहयितुं यतन्ते केचिन्महाभागाः। मन्यामहे स्वल्पेनैव कालेनास्माकीना संस्कृत-भाषा सत्पुरुषैः सिद्धोन्नतिशिखरमधिरोहेच्छ्रीकृष्णचरणप्रसादतः। परं महोत्साहैः कर्मदक्षैः स्वार्थत्यागिभिरादर्शरूपैश्च पण्डित-प्रकाण्डैः, कुलपति-श्रीमदनमोहनमालवीयसदृशैर्भाव्यमिति प्रस्तावना।

अथ संस्कृत-भाषाया व्यवहारोपयोगित्वे केचनोपायाः प्रदर्श्यन्ते। तद्यथा-

व्यवहारोपयोगित्वे, प्रचारोऽपेक्ष्यते पुरः।
दृढे प्रचारे साध्यस्य साधनं हि ततः फलम् ॥२॥

देशे देशे, प्रान्ते प्रान्ते, ग्रामे ग्रामे, प्रत्येकस्मिंश्च घोषेऽपि लक्ष्य-साधनार्थं नियुक्तैः प्रचार-पुरुषैः पत्रैः समाचारपत्रैश्चान्यसाधनैर्वा स्वाभीष्टसाधनाय प्रतिपुरुषं प्रचार्य-गुण-गौरवाख्यानं प्रचारो नाम। तेन चासाध्यमपि कार्यं साध्यं भवति; स्वल्पमपि राज्यं प्राज्यम्, स्वल्पमपि कार्यं महत्, अल्पमपि पाण्डित्यमनल्पम्, अभेषजमपि भेषजम्, अप्रशस्तशिक्षणमपि सुशिक्षणम्, अ-

ल्पमपि भाषणं सुबहुभाषितं चेत्यादि प्रचार-महिम्नः फलं प्रत्यक्षं दृश्यते । किं बहुना, प्रचारयुगेऽस्मिन्नवस्तुन्यपि वस्त्वारोपः क्रियते, किं पुनः सत्यवस्तुनः प्रचारेण गुण-गौरवाख्यानम् । एतदर्थं प्रचार-बाहुल्यं प्रशंसन्ति कुशलाः । प्रचारदाढर्ये साध्यं व्यवहारोपयोगित्वं समुपैतीति को नाम न मन्यते।

प्रचारार्थं नैजं संस्कृत-साहित्य-मण्डलं स्थापित-मस्ति, तन्मध्यतो मुख्यैः पण्डित प्रवरैरेकत्रीभूय संस्कृतभाषोन्नत्यै तत्तत्प्रान्ते गवर्नमेण्टराज्यम्, स्टेटराज्यम्, श्रेष्ठिवृन्दञ्च सम्मानपुरस्सरं सानुरोधमभ्यर्थनीयम् "यदस्य संस्कृत-साहित्य-मण्डलस्य कृते यावच्छक्यं साहाय्यं प्रदेयम् । नगरस्य चैकस्मिन् भागे तत्रत्य-पण्डित-निवासार्थं भूभागोऽपि प्रदेयः ।" येन हि नगरस्यैकभागे निवसन्तस्ते सर्वे एव पण्डिताः सर्वदा मर्वथैव संस्कृत-भाषणं विदध्युः । अथ च कुत्रचिच्छोभने प्रदेशे विपश्चितामेको ग्रामोऽपि सम्पद्येत, यत्र च विहाय संस्कृतज्ञान् विदुषोऽन्यः कश्चिदपि जनो न निवसेत । तत्र संस्कृत-भाषिणां पुत्रैः पौत्रैः प्रपौत्रैः तत्पुत्रैश्च पुरातन-परिपाट्यनुसारं प्रयासमन्तरानर्गलसंस्कृतभाषणं भाष्येत । एवं सर्वे एवाबालवृद्धाश्चन्दनचर्चितभालाः संस्कृतभाषां भाषमाणा लीलयैव ऋषिकुमाराः संजायेरन् । यद्यपि विचारधारेयं राज्याश्रयमवलम्बते यतश्च—

उत्पन्योत्पन्य तत्रैव निर्धनानां मनोरथाः । हृदयेष्वेव लीयन्ते, इतिवद् व्यक्तिगता विचाराः न प्रभवन्ति, तथापि महीयसां विदुषां कोलाहलोऽपि सर्वजनश्रेयसेऽलम् । न हि रोदनं विना कार्यव्यग्रा मातापि बालाय दुग्धं ददाति ।

सरलश्चायं पन्थाः—अविदितान्यभाषं शिशुं प्रति मातापितृभ्यां संस्कृतभाषया व्यवहारो विधेयः । अपठितापि माता पञ्च दश शब्दानभ्यस्य ततोऽधिकशब्दाभ्यासं कुर्यात् । पठिताया विषये न किमपि वक्तव्यम् । एवं विमले श्वेते पटेऽर्पितो रागो यथा नयनाभिरामं प्रभावातिशयं द्योतयति, यथा च नवे भाजने लग्नो घृतसंस्कारश्चिक्कणतां न जहाति तथा बालकस्य कर्ण-कुहरे प्रविष्टाः संस्कृत-शब्दाः संस्कारमावहन्तीत्यनुभवोऽस्माकम् ।

यत्र यत्र संस्कृत—महाविद्यालयाः, विद्यालयाः, पाठशाला वा, तत्र तत्रावश्यकश्चायं नियमो भवेद्यत्-"विद्यालयार्धावकाशेऽध्यापकाश्छात्रवर्गं संस्कृत-भाषणं कारयेयुः, सदसि च गीर्वाण-वाण्यामेव वक्तव्यमुत्तरं प्रत्युत्तरं च ।" परं विहाय कांश्चित्संस्कृत-विद्यालयान् विद्यार्थिभिः कृतः संस्कृतानुवादः शिक्षकैः सम्यक्तया न शोध्यते, ते च प्रायः स्वकर्तव्यमपालयन्तो भित्तिस्थघटिकायां दत्तचित्ता यथा तथानुवादादिकं स्वमनसा संशोध्य कालं यापयन्ति । एवं छात्रैः संस्कृतानुवादोऽपि न लिख्यते कुतो वाक्य-प्रचारः । अस्त्वेतदप्रकृतम्, प्रकृतमनुसरामः ।

विस्मृत्यैतदनुभूयते यत्प्रचलित-पाठ्यप्रणाल्यामावश्यकं परिवर्तनम् । प्रारम्भकाल

एव च्छात्रेषु सरलसंस्कृत-प्रचारः सरल-पुस्तकपाठनं च । यादृशाः खल्विदानीन्तना जना उत्सुकाः समाचार-पत्रादिषु तादृशा एव संस्कृतज्ञाः संस्कृतपत्रादिष्वपि भवेयुः । अनेकानि संस्कृत-समाचार-पत्राणि सम्पद्येरन् येषु च हास-विकासवन्ति चित्राण्यप्यङ्कितानि स्युः, यानि हि लोकं लोकं लोकाः प्रमोदमान-मानसा जायेरन् । यश्च शिक्षा-विभागाध्यक्षो भवेत्सोऽप्यपूर्वः संस्कृतज्ञः स्यात् । यथा-इंग्लिशज्ञा अल्पे विशाले वा पाठशाले इंग्लिशभाषां प्रणिगदन्ति तथैव संस्कृतपाठिभिरपि भाव्यम् । ग्रामे ग्रामे, नगरे नगरे न्यूनतो न्यूनैका संस्कृतपाठशालैतादृशी स्याद्यत्र हि सर्वेषां बालानामेतदेव परमं कर्म—स्नानध्यानयोः, आहारविहारयोरामोदप्रमोदयोः सकलेषु कृत्येषु तैः संस्कृत-भाषाभाषिभिर्भवितव्यम् ।

एकश्च कोषोऽपि नवीनः सम्पादनीयः, यत्राधुनिकानां प्रचलितशब्दानां समावेशः सारल्येन भवेत् येनाविमलमतेरपि मनसि स्थानं जायेत । यथा हि-'स्टेशन, साइकिल, मोटर, एरोप्लेन, थानेदार, तहसीलदार', इत्यादिशब्दानां पर्यायाः संस्कृतभाषायामेतत्स्वरूपभाज एव भवेयुः । यथा पूर्वोक्त-पद-सान्निध्य-साम्यभाजः शब्दाः-स्थेयासनम् (स्थिति-स्थानम्) वायुशकलम् (पादचालनयन्त्रम्) मरुच्चरः (मृत्तरिः) वायुयानम्, स्थानादरः, [1] तहशीलदार [2] एत एव शब्दाः संस्कृत-परिष्कृताः सन्ति ।

पाठशाला-निरीक्षकस्यान्येषां वा प्रधान-स्थान-जुषां विदुषां प्रधानं चैतत्कार्यं यद्विशालायां पाठशालायां शिक्षकेषु छात्रेषु चातीवतीव्रदृष्ट्या निरीक्षणं विधेयम् । तत्राधीयानानां बालानां सर्वात्मना निरीक्षणम् उदित्वा कर्गलोपरि लिखेलिम-कठिन-शब्द-लेखनादिकेन संस्कृत-भाषा-भाषणेन चेत्यादिदिशा बालाः परीक्ष्याः । तदा च तेषामुत्साह-वर्द्धनार्थं संस्कृत-भाषा-व्यवहार-सौकर्यार्थं च किंचिन्न किंचित्पारितोषिकत्वेनावश्यमेव वितरणीयम् ।

सर्वेषां परीक्षोत्तीर्णानामपि परीक्षणार्थमतीवमहती समितिर्भवेत् । यश्च तत्र वाक्चातुर्ये तद्व्यवहार-प्रचार-प्राचुर्ये साधीयान् सिद्धः स्यात्तदा स सम्मानेनादरणीयः पूज्यश्चाङ्गीकर्तव्यः । यथा च परीक्षासु इंग्लिशाध्येतारो विद्यार्थिनः प्राप्तोत्तमश्रेण्यश्छात्रवृत्तिं लभन्ते तथैव संस्कृतभाषाभाषिणामध्येतॄणां च कृते छात्रवृत्ती राजकीया भवेत् । अन्यच्च यू० पी० प्रान्ते राजसत्तया साक्षरत्वनियमो यथा प्रचालितस्तथा संस्कृतभाषा-भाषणोऽपि कारयितव्यः कर्तव्यश्च । अन्यासामुपादेयभाषाणामुपादेय-ग्रन्थान् सरलसंस्कृतेऽनूद्य, ते च परीक्षा-पा-

1-सभ्यस्य कृते स्थानमुपयुक्त आदरो यस्मिन्सः, दुष्टस्य च कृते स्थानमुपयुक्तमासमन्ताद्दरो भयं यस्मात्सः ।
2-नामैकदेशेन नामग्रहणमिति न्यायात्तान् तस्करान् घ्नन्तीति तहाः, राजपुरुषास्तेषां शीलमादृत्याति सत्करोतीति तहशीलदारः 'मजिस्ट्रेट' इति ख्यातः ।

ठयक्रमे निर्धारणीयाः।

एतदर्थं विदुषां संगठनमतीवावश्यकं येन क्रियात्मकं कार्यं सम्पद्येत। आशासे उपर्युक्त-विचार-प्रणाली-प्रसारेणाचिरेणैव कालेन पुनरपि भोजराज्यवत् भारते 'संस्कृत-भाषा व्यावहारिकी' सम्पत्स्यत इति शम्।

---

# ❀ को वेदानुद्धरिष्यति ❀

( ले० कविरत्न-पं. मायादत्तपाण्डेयः शास्त्री ज्योतिर्विद् चन्दौसीस्थधर्मसभा-प्रधानपण्डितः। )

एकदा यातयामायां त्रियामायां शय्यामधिरूढ एव वैदिकशिक्षाक्षेत्रस्य वर्तमानां दशां विमृशन् 'को वेदानुद्धरिष्यति' इत्युच्चार्य दीर्घं विनिःश्वसन् निद्रादेव्या उत्सङ्गानन्दपरवशोऽभवम्। अथ निमीलितेषु बाह्येन्द्रियेषु कस्मिन्नपि वर्णनातीते मनोराज्ये अरमत मे ऽन्तरात्मा। तदा एषोऽहं क्वचिद्विजने प्रदेशे निर्जरनिर्झरिणीतटे जपनियमतपःस्वाध्यायपरायणो दिवसाननैषम्। ततश्चैकदा कश्चिदुदारः सदारो महीपतिस्तत्र समुपाससाद। तेन सह विविधदेशकालोचितधार्मिकचर्चाप्रसङ्गे स उवाच-

भगवन्! सदैव ब्रह्मक्षत्रमयेन तेजसैव त्रिभुवनस्य विधानानि सुखेन विहितानि अभवन्, अपि च पुरुषार्थचतुष्टयस्य यथायथं समुपार्जनं जातम्, प्रजासु शान्तिः वर्णाश्रमेषु सद्भावश्च समैधिष्ट। प्रवर्तमानश्चायं मोहमयः कलिकालो बहुधा विरुद्धं समुज्जृम्भते, अत्र हि 'पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत्'। सम्प्रति सदाचाराः प्रलयवात्योपहता इवोड्डीयन्ते, वृद्धानां समादरः शारदसरित्प्रवाह इवापचीयते, शास्त्रश्रद्धा ग्रैष्मपल्वलपालिरिव शुष्कतामुपैति, क्षुद्रा धर्मोपदेष्टारः, मूर्खाः सम्मानभाजनानि, दुर्जना धनधान्यपूर्णाः, साधवो विषीदन्ति, कुलटानां प्रभुत्वम्, सतीनां दौर्गत्यम्, किमधिकं सर्वत्रैव सतां दुरवस्था विद्यते। एवञ्च दुरभिमानकुतर्केरेणुनीरसेषु जनताहृदयमरुषु विलीन एव परलोकप्राप्यपुण्यस्रोतःप्रवाहः। इमामेव दशामवलोक्य खिद्यतः कस्यापि सुकवेरिदं सुभाषितवचनमेव साम्प्रतं साम्प्रतम्।

निर्बीजा पृथिवी निरौषधिरसा नीचा महत्त्वं गताः
भूपाला निजकर्मधर्मरहिता विप्राः कुमार्गे रताः,
भार्या भर्तृविरोधिनी पररता पुत्राः पितुर्द्वेषिणः
साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे।

तदधुना जनतासु वैदिकपद्धतेः पुनरुद्धाराय वेदानामध्ययनाध्यापनप्रचारः कथं स्यात् कथं वा ब्रह्मक्षत्रमयं बलं भूयो जागर्तु, कथं वास्माकं मातृभूमेरस्य भारतदेशस्य विविधा-आधयो नश्यन्तु, केन वा प्रकारेण सर्वे भद्राणि पश्यन्तु, मानवसमाजे सुबुद्धिः सौजन्यं वा भृशं प्रसरतु, इत्युक्त्वा दीर्घं निःश्वस्य विरराम।

अथाहं नरपते! एष कालस्यैव महिमा, एष च कालो रात्रिन्दिवमयः परिवर्त इव युग-

+ कृभ्वस्तियोगे सम्पद्योग एव च साति र्विधीयते।



मयोऽपि विद्यत एव। इदानीं प्रकाशाकरो दिनकरो मध्येदिवं तपति, कालान्तरे सैव महान्धकारपूर्णा निशीथिनी समेष्यत्येव, किन्तु प्रकाशप्रियो लोकस्तथापि करोत्येव प्रकाशस्य सुप्रबन्धम्। वृद्धे रुमासन्नमरण-काले पितरि रोगग्रस्ते सति कश्चिदपि विपश्चित् 'म्रियतां नामायं वर्षीयान्, सर्वं लौकिकसुखन्तु भुक्तवानेवायम्' इति नैव वक्तुं शक्नोति, किञ्च महता मनोयोगेन तस्य निरामयप्राप्त्युपायान् चिन्तयत्येव, समाचरति च विशेषेण परिश्रमेण तस्य सुखोपयोगिनीं सेवाम्। एवमस्माभिरपि कालकलामाकलय्य विषादो न कर्तव्यः, कालोऽपि स्वकार्यं करिष्यति वयमपि स्वकर्तव्यं कर्तुं बद्धपरिकराः सुसन्नद्धास्तिष्ठामः। स्मरत-

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन, इति

भगवन्! तर्हि भवतैव निर्देष्टव्या सा कर्तव्यपद्धतिः, यया सुरभारत्या अमूल्य-कोषस्य वैदिकसाहित्यस्य रक्षा भवेत्। अपिच भवदुपदिष्टं तद्विधेयं साधयितुं शक्त्या सम्पदा च सहयोगं कर्तुं निश्चिनोमि। उच्यतान्तावदिति साग्रहं स प्रोवाच।

अथाहं प्रसन्नो निजगाद, राजन्! सत्यमेवैतत् सम्प्रति धनबलं विना सर्वाणि कार्याणि कठिनान्येव। वैदिकपद्धतेः पुनरुद्धारार्थं प्रारम्भे लक्षत्रयं रौप्यकाणामावश्यकम्, तथा सति कश्चिन्महानारम्भः सम्पादयितुं शक्येत। स चाह किं रूप्यकाणामेवाभावो विद्यते? विद्वन्! संप्रति तु बहवो दानपरायणा यत्र तत्र समाचारपत्रादिषु प्रघोषितमाहात्म्या श्रेष्ठिनो वेविद्यन्ते, ये कोटिशो धनं यत्र तत्र दानक्षेत्रेषु प्रवाहयन्ति किं ते भवतः साहाय्यं न सम्पादयिष्यन्ति?

'नैव' इत्युक्त्वा प्रत्यवोचम्-राजन्! यादृशा दानिनो भवता गणितास्ते तु धर्मदायस्य वणिजो न तु धर्मस्य हितैषिणः, न वा वैदिकस्य सदाचारस्य प्रणयिनः, केवलं धर्मदायव्यपदेशेन निजख्यातिकामुकाः सन्ति। किमपि निजं प्रधानतरं स्वार्थमुद्दिश्यैव धर्मदायं प्रयुञ्जन्ते। अत एव तादृशेन तद्धनेन प्रायस्तादृशान्येव धर्मबाधकानि विधानानि विधीयन्ते, यैर्धर्मस्य सुतरां सारल्येन च मूलतो विच्छेदः परिणमति। पश्यत भवन्तो धर्मशालानां देवमन्दिराणां स्नानघट्टानां सदावर्तानाञ्च दुरवस्थाम्, यत्र जातैर्देवापराधैः सज्जनापमानैः दुर्जनसम्मानैः सनातनधर्मस्य धौतधवलकीर्तिपटे कलङ्कप्रसङ्गा अपि क्वचित् समुज्जृम्भन्ते, अत्राधिकेनालम्।

स च-तर्हि भगवन्! गृह्यताम् रूप्यकाणां लक्षपञ्चकम्। अस्मद्भ्रातरो भारतीया बहवो नृपतयः कोटिशो रूप्यकाणि पाश्चात्यद्वीपभ्रमणविलासे विनाशयन्ति, गौराङ्गनानां प्रणयप्रपञ्चे क्षपयन्ति, विविधक्रीडाविनोदेषु जलसात्प्रवाहयन्ति, इदन्तु स्वल्पमेव धनं भवता निर्दिष्टम्? इतः परमपि गृह्यतां यथेच्छो भूभागः।

श्रुत्वैव नृपतेरौदार्यपूर्णं वचनं भगवदिच्छामवलोक्य, विस्मितोऽपि सस्मितः सचिन्तोऽपि निश्चिन्तः मुक्तोऽपि बद्धः स्वतन्त्रोऽपि परतन्त्रः संवृत्तः। किञ्च वैदिकशि-

+ अत्र तृतीया केन? दूरान्तिका... द्वितीयेत्यनेनेति चेत् ... न ह्यन्तरशब्दो दूरवचनः।

क्षापद्धतेः पुनरुद्धारार्थं निजं सर्वस्वमपि क्षपयितुं कृताभिनिवेशः ओ३मित्यवोचम्।

अथ तत्रैव सुरतटिनीरोधसि क्रोशद्वयमात्रवर्गात्मके भूभागे सुबद्धं प्राचीरं कारयित्वा तत्र मध्ये सुविशालां सभां निरमापयम्, तस्याः परितः कक्षासु विशालं पुस्तकसंग्रहालयं व्यरचयम्, यत्र कुत्रापि मुद्रितानाममुद्रितानाञ्च वेदवेदाङ्गपुराणेतिहासग्रन्थानाम् अपरेषाञ्च अपेक्षितानां तदुपयोगिनां सामयिकानाञ्च पुस्तकानां विशालं संग्रहं कारितवान्।

सभाभवनाद्दक्षिणतो विशेषेणान्तरेण+ मुद्रणालयम्, तदावश्यकवस्तुजातालयम्, तत्तत्कारुजनावासान्, क्रीडाङ्गणम्, फलपुष्पवाटिकाञ्च निर्मापितवान्। पश्चिमतः पृथक् पृथक् पञ्चविंशतिगृहाणि प्रत्येकं गृह्योपकरणकक्षयया गृह्याग्निशालया विचारभवनेन शयनकक्षया च सम्पन्नानि निर्माप्य तेषां मध्ये एकं पञ्चदेवतायतनञ्च निर्मापितवान्। उत्तरत आचार्यभवनम् उपाध्यायभवनानि च निर्माप्य, पूर्वस्यां प्रधानकार्यालयो ब्रह्मचर्याश्रमश्च संवृत्तः।

इत्थं संजाते निवासजाते कारुभिस्त्यक्ते तदाश्रमे, संस्थापिते द्वारपाले, वर्तमानसुप्रसिद्धराजकीयविद्यालयेभ्यः संप्राप्तोपाधिकान् शास्त्रिणः, तीर्थान्, आचार्यान् तत्रापि प्रथमश्रेण्यामुत्तीर्णान्विदुषोऽभिलक्षीकृत्येदमावश्यकतापत्रं प्राचारयम्—

## विज्ञापनम्

भो भो वैदिकसदाचारानुसारिशिक्षारक्षाबद्धकक्षयाः सज्जनाः! समागतो युष्माकं मनोरथसाधनस्य स्वर्णमयोऽवसरः। सम्पन्नस्तावदभ्यासमहाविद्यालयः (Risarch college) सम्प्रति अत्र आवश्यकता विद्यते पञ्चविंशतेरभ्यासार्थिनां विदुषाम्, एत एवास्य विद्यालयस्य प्रथमं विद्यार्थिनः कथयिष्यन्ते, भविष्यति च वैदिकशिक्षाकर्णधाराः भविष्यन्ति। अत्र त एव सज्जनाः प्रवेशार्हा ज्ञातव्याः—

१ ये सनातनधर्मस्य कायवाङ्मनोभिः समुन्नतिं कर्तुकामा भवेयुः।

२ ये श्रद्धया वैदिकसदाचाररक्षाव्रतिनो भवेयुः, किञ्च वैदिकान्-सदाचारान् व्यवहारतोऽपि स्वयं विधातुं चिरं सोत्साहा भवेयुः।

३ ये तपोमयं ब्राह्मण्यं विद्याविनोदेनातिवाहयितुं भृशं श्रद्धालवः स्युः।

४ ये कृतपरिणयाः, स्वास्थ्ये, प्रागल्भ्ये, वपुःप्रकर्षे, निर्भीकवक्तृत्वे, लेखपाटवे, संस्कृतभाषणे च अस्मत्कृतप्रवेशपरीक्षायां पूर्वमेव समुत्तीर्णा भवेयुः।

५ ये च संस्कृतज्ञैः सह भावतो व्यवहारतः प्रचारतश्च मैत्रीमनुरागं सम्माननं समादरञ्च कर्तुं कारयितुं प्रयतेरन्।

६ येषामायुःप्रमाणं विंशतिवर्षतस्त्रिंशद्वर्षपरिमितं भवेत्।

अत्रापि वेदानां निजनिजशाखोचितमूलपाठाभ्यासवतां प्रधानं स्थानं भविष्यति। ये चाधुनिकविविधाङ्गलभाषापठिता भवेयुः-

तेपि चेत्संस्कृतोपाधिपरीक्षोत्तीर्णाः स्युः सुतरां स्थानं प्राप्स्यन्ति अत्र विद्यालये छात्रगणनायाम्। रूप्यकाणां विंशतिं प्रतिमासं व्ययार्थं प्रत्येकं मिलिष्यति दक्षिणारूपेणाभ्यासार्थिने छात्राय, सप्तवर्षात्मकः कालस्तेषामभ्यासायालं भविष्यति। एतस्मिन्काले समेधितमेधसां तेषां भविष्यति सैव वाग्देवता आजीवनं सर्वत्र जीविकादात्री। इति।

एवं प्रचारिते विज्ञप्तिपत्रे प्रवेशार्थिनां पञ्चशतमावेदनपत्राणि समागतानि, तानि पर्यवेक्ष्य, द्विशतं तेषु प्रार्थनापत्रेषु संगृह्य, तन्नामनिर्देशपुरःसरं मार्गव्ययं दत्त्वा तत्र तत्र निर्दिष्टेषु समीपस्थानेषु गणशस्ते समाहूताः। तेष्वपि सुपरीक्षितान् प्रवेशविषये कस्यापि सज्जनस्यानुरोधलेशमविगणय्य पूर्णतया तादृशयोग्यतावतः पञ्चविंशतिं छात्राणाम् सदाराणां प्रावेशयम्।

ततश्च प्रधानाचार्यपदे वैदिकविद्याधिष्ठात्रीं देवतामिव विद्यावाचस्पतिं श्रीमधुसूदनशर्माणं न्यमन्त्रयम्। विचार्य च कार्यगौरवं समाकलय्य च सुरतटिनीतटविटपतलकुटीरनिवासोचितं निजं वार्धक्यं समागत एव तत्रभवान् जयपुरराजपण्डितः। ततश्च तदनुज्ञया शेषा विद्वांस उपाध्याया आमन्त्रिताः। महाविद्यालयस्य सुव्यवस्थाकर्मणि सप्तानां सज्जनानां समितिरपि संयोजिता। ते च-

१ संन्यासिप्रवराः करपात्रीश्रीहरिहरानन्दमहात्मानः।

२ ब्रह्मचारिप्रवराः श्रीजीवनदत्तशर्माणो नरवरस्थाः।

३ विद्वत्प्रवराः डा० गङ्गानाथझामहाभागाः महामहोपाध्यायाः।

४ ,, महामहोपाध्याया गिरिधरशर्माणश्चतुर्वेदिनः।

५ ,, पण्डितराजा राजेश्वरशास्त्रिणो द्राविडाः।

६ गृहस्थेषु- स भूपतिः।

७ कार्यनिर्वाहकसेवकेषु-सोयं सुखस्वप्नवान् लेखकः।

अथातो वैदिकशिक्षापद्धतेः समुज्जीवनमहाव्रतिनः सपत्नीकास्ते पञ्चविंशतिर्विद्वांसः प्रायश्चित्तपूर्वकं स्वीकृताग्निहोत्राः पञ्चत्रिंशता दिवसैराह्निकं गृह्यविधानं सुतरामभ्यस्तवन्तः, तदनुकूलेषु पञ्चविंशतिगृहेषु तेषां गृह्यकर्माणि प्रारब्धानि, आह्निककर्मणामभ्यासानन्तरं प्रथमे वर्षे वार्षिकाणां तेषां २ विधानानामभ्यासो व्यवहरणं तत्त्वानुसन्धानं हेतुवादाः जनतासु प्रचारप्रकाराश्च सुतरां तैरभ्यस्ताः। मध्ये सभाभवने प्रतिदिनं घण्टाचतुष्टयं तेषां गुरुसन्निधौ प्रवृत्ताः शास्त्रावलोकनाभ्यासान्वेषणविचारविमर्शलेखनभाषणात्मकाः कार्यकलापाः। ततः परं विविधानामार्षग्रन्थानां शोधनानुवादनमुद्रणप्रकाशनादिकार्यजातश्चैकतः प्रसृतम्। तस्य व्यापारकर्मणोऽपि सुव्यवस्था सम्पन्ना।

अथ च ये सन्ति सनातनधर्मक्षेत्रे सुवक्तारः शास्त्रार्थकुशला वैतण्डिकमण्डलीमुखभञ्जकास्तेऽपि यथावसरं तत्रागत्य तैर-

इदं प्रामादिकम् । एधयामासुरिति वक्तव्यम् ।
णिजभावे तु एधाञ्चक्रिरे इति स्यात् ।



तैरभ्यासार्थिभिः सह निजानुभूतप्रकारेण शास्त्रार्थं कृत्वा भाषणानि श्रावयित्वा तेषां बोधमेधाञ्चक्रुः, महत्या चानुकम्पया स्वकीयानुभवैः सुनिपुणं तान्प्रबोधयाञ्चक्रुः। अथ वैदिकविज्ञानराशिर्यथा श्रीमधुसूदनैर्विद्यावाचस्पतिभिः प्रणीतः, स तत्र व्यवहारात्मकेन शिक्षणेन प्रसृतोऽभवत्। एवं सप्तवर्षात्मके काले 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति' बोधवन्तस्ते सुपुरुषाः एवंभूताः सञ्जाताः, येनैकैकोऽपि कस्याप्येकस्य प्रदेशस्य विरुद्धभावनाभावितान् वादिनो विजित्य सत्यं शिवं सुन्दरं वैदिकं सिद्धान्तं जनतासु सुतरां प्रचारयितुम्, अकुतोभयमदीनसत्वं ब्राह्मणत्वञ्च साभिमानं पालयितुं प्राभवत, किञ्चार्यजातेः शिरोभागमुन्नमयितुं समभवत्। अथ च संस्कृतशिक्षाक्षेत्रस्य प्रवर्तकः स एव विद्वत्समाजस्ततः परं संजातः, तेनैव सर्वत्र प्रचारिता प्रजासु चारुतरा चारित्र्यपद्धतिः, संस्कृतभाषाप्रणयिषु विद्वत्सु मिथः सम्मानपूर्णा सहिष्णुता, आदर्शप्रधाना आध्यात्मिकी शिक्षाप्रणाली। किञ्च तेनैव विद्वत्समाजेन शिक्षाक्षेत्रेषु धर्मप्रचारक्षेत्रेषु धारासभासु मुद्रणप्रकाशनाभिभाषणकार्येषु राष्ट्रीयकार्यकलापेषु साधिकारं प्रवेशः कृतः। लोकानां शिक्षादीक्षाबद्धपरिकरेण जनताहितैषिणा तेनैव स्वल्पैरेव हायनैः–

> ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
> ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये ॥

इति मानवोद्घोषोपि दिङ्मुखेषु घोषितः। गृहे २ प्रवृत्ता सदाचारकथा, सर्वविधशिक्षितेषु सशिरःकम्पं सम्मानमभजत वैदिकविज्ञानपद्धतिः। देशे २ ग्रामे २ ब्राह्मणेषु प्रवृत्तो भारतभूमेरनुरागः, विद्वत्सु समसरत मिथो गुणग्राहिता अनुरागश्च। नाशं गताः कार्पण्यसंगता दोषाः, विलीना स्वार्थान्धता पिशाची, प्रवृत्तो वैदिकः स्वर्णमयो युगः। प्रभाकरोदयादन्धकार इव क्षीणताङ्गता अनार्यशक्तिः। यत्र तत्र सर्वत्र विद्यालयेषु अभ्यासमहाविद्यालयस्यैव लब्धवर्णाः प्रधानाध्यापका जाताः। तैश्च तत्र तत्र सैव स्वाभ्यस्ता पद्धतिः प्रक्रान्ता येन सकले देशे महान् शिक्षासंगठनसंभारोजातः।

अथ प्रसन्नोऽहं यदा तारस्वरेण तेन राज्ञा सहाक्रोशम्–

> जयतु जयतु धर्मः सर्वकल्याणहेतुः
> जयतु जयतु भूयो वैदिकः पुण्यसेतुः।
> जयतु जयतु शिक्षा संस्कृता देवगीर्भि–
> र्जयतु जयतु देशो भारतं वर्षमेभिः।

तदैव क्वचिद्विलीना सा मे युगान्तरकारिणी निद्रादेवी, एषोऽस्मि तस्मिन्नेव चिन्ताग्रस्ते लोके व्यलोकयं विपण्णमात्मानम्।

---

## छायाकाव्यम्

द्वारस्थिता वस्त्रार्थिनी रजकी–'भाव! सुदूरे परपारे गन्तव्यम्। व्यतीतो भूयान् कालः। संनिहिता चास्तमनवेला। हन्त! सम्मुखतरश्चोज्जृम्भिता घनघटा। तत्त्वर्यतामिदानीं महाराज।'

# ❀ संस्कृतशिक्षाविषये संक्षिप्तविमर्शः ❀

( ले० काशीस्थबिरलामहाविद्यालयाध्यक्षः पण्डितवरसभापतिशर्मोपाध्यायः )

स्वगृहे स्थापयित्वैवोपनीतानां बालकानां सदाचारविद्याध्ययनादिशिक्षाप्रकारो यादृशः पुरा आसीत्, स देशकालवैपरीत्येन समुच्छेदं गत एव। आधुनिकी या शिक्षापद्धतिः सञ्चालिता राजकीयैर्दैशिकैश्चाधिकारिवर्गैः सा संस्कृतविद्यामवनमयन्त्येव प्रतीयते। नाद्यत्वे प्राक्तनकाल इव संस्कृतविभागे आन्वीक्षिक्याः त्रय्याः वार्त्ताया दण्डनीत्यादेः चतुःषष्टिकलास्वपेक्षितकलानाञ्च विज्ञातारः विद्वांसः समुपलभ्यन्ते।

आधुनिकाविष्कारविज्ञानस्य तु वैरिभाव एव संस्कृतशिक्षालयमधिकुरुते। संस्कृतज्ञानामध्ययनाध्यापनशक्तिसम्पन्नत्वेऽपि भारतीयमर्यादासंरक्षकश्रुतिस्मृतिपुराणेतिहासपरिज्ञानदार्ढ्यसम्पादनाय न हि कचन कश्चन प्रबन्धो दृश्यते। भाषान्तराभिज्ञाः यथा तत्तत्कार्यक्षेत्रे तत्तत्कार्यकरणपटवः सम्पद्यन्ते तथा कार्यविधानदक्षा अपि नात्रोपलभ्यन्ते संस्कृतज्ञाः। अतः संस्कृतविद्योन्नतये विभागत्रयं स्थापनीयम्।

(१) एकत्र तादृशानामेव सन्निवेशो विधेयो ये धार्मिकशास्त्रालोचनपूर्वकं प्रगाढपाण्डित्यसम्पादनायैव यतितुं समुत्सहन्ते। (२) परत्र च तादृशैः प्रवेष्टव्यं ये संस्कृतसाहित्यज्ञानपुरस्सरं देशकालानुसारिज्ञानमपेक्षन्ते। (३) तृतीये च संक्षेपतः संस्कृतसाहित्यज्ञानेन समं तत्तत्कार्यक्षेत्रे स्वस्वकार्यविधानदक्षतां विधातुं ये समीहन्ते ते एव प्रवेशनीयाः।

अतः पूर्वोक्तयोग्यतोपलब्धये तत्तद्विषयकग्रन्थानां नूतनाधुनिकसर्वविधाविष्कृताङ्गलादिभाषागतान् विषयान् संस्कृतभाषया संगृह्य मुद्रितानाञ्च ग्रन्थानामध्यापनम् यथा स्यात्तथा यतितव्यं संस्कृतविद्यानुरागिभिः। स्वस्वप्रधानशास्त्राभ्यासेन समं प्रकीर्णापेक्षितशास्त्रान्तरीयसिद्धान्तावगमपुरस्सरं लेखनप्रवचनयोर्दैशिकोन्नतिविधायकव्यापृतौ च प्रशस्तकौशलं यथा स्यात् तथा ग्रन्थाः परीक्षाविभागेषु स्थापनीयाः। अतः परं छात्रादीनां निवासाय स्थानानि स्वास्थ्यकराणि विस्तृते निर्बाधप्रदेशे निर्मेयानि।

छात्रेभ्यः एतादृशशिक्षाप्रदानाय यतितव्यं यदेतेषां हृदयतो दैन्यापसरणं विनयादिगुणैः साकं पुरुषार्थपरायणत्वञ्च दृढतामियात्।

विशेषरूपेणास्माकं मतमेतद्विषये यू. पी. प्रान्तीयराजकीयसंस्कृतशिक्षासमित्या यन्निर्धारितं तत एवागतं स्यात्। सम्भाव्यतेऽल्पीयोदिनानन्तरमेव तत्संस्कृतविदुषां राजकीयविभागतः प्रकाशितं सद्हस्तगतं भवेदिति।

सं० र० शिक्षाङ्कः



सुप्रथितदानवीरविद्वान् रायबहादुर-राजा बलदेवदासबिरलामहाभागः
पिलानी ( जयपुर )



P. P. E. Press, Jaipur.

# श्रीमतां राजपदोपाधिभाजां डाक्टर-विरलाबलदेवदासमहोदयानां संक्षिप्तं जीवनचरितम् ।

( लेखकः-पं० श्रीसभापतिशर्मोपाध्यायमहोदयः, काशी )

जयपुरमण्डलान्तर्गतपिलानीग्रामवास्तव्यो भारतेश्वरवितीर्णराजोपाधिना जयपुरमहाराजसमर्पितश्रेष्ठिपदव्या काशीहिन्दूविश्वविद्यालयतः 'डाक्टर' इत्युपाधिना च सम्मानितो धार्मिकाह्निकदानादिकर्मणा परिपूतस्वान्तया नियमेन पतिचरणामृतं भगवदर्पितं तुलसीदलञ्चान्तरा किञ्चिदप्यनभ्यवहरन्त्या भगवत्स्मरणं सम्पादयन्त्या राज्या धर्मपत्न्या समलङ्कृतोऽयं श्रेष्ठिप्रवरो डाक्टर–राजा बलदेवदासविरलामहोदयः, मोहमय्यां कलिकातायां विदेशेषु च स्वीयवाणिज्यव्यापारद्वारा प्रसिद्धधनिकस्पृहणीयां समुन्नतिं सम्पाद्य स्वकर्त्तव्यताशिक्षयोन्नतिप्रदाङ्गलादिविद्याध्ययनेन च शिक्षितेषु, पौरस्त्यपाश्चात्यव्यापाररहस्याभिज्ञेषु, सर्वतोभावेन योग्यतमेषु, भारतीयानन्नुन्नतानुन्नमयत्सु, उन्नतांश्च गौरवप्रदानेन सत्कुर्वत्सु, सम्राट्-तत्प्रतिनिध्यादि ( वायसराय )राजकीयप्रधानपुरुषैः राजनीतिविशारदैः नेतृवर्गैश्च समाद्रियमाणेषु, नानाविधवैदेशिकोन्नतिकारकसंस्थासु धनादिसाहाय्यदानेन भारतवर्षं गौरवास्पदं विदधत्सु, श्रीयुगलकिशोर-रामेश्वरदास–घनश्यामदास–व्रजमोहनदास 'विरला' नामधेयेषु, औरसात्मजेषु निखिलं सांसारिकव्यवहारभारं समर्प्य, वानप्रस्थाश्रमप्रकारेण बहूनि वर्षाण्यारभ्य श्रीविश्वेश्वराधिष्ठितवाराणसीं समाश्रित्य तत्रत्येभ्यो विद्वद्वरेभ्यः संस्कृतसाहित्यरत्नाकररहस्यरत्नानि समुपलभ्य स्वीयशास्त्रीयविचारसरण्या विद्वद्ग्रगण्यानामपि चेतांसि आश्चर्योदधौ मज्जयन्, छान्दोग्योपनिषद्रहस्य—आत्मविचाराद्यनेकनिबन्धनिर्माणेन वेदान्तनिष्णातनिजमनीषां प्रकाशयन्, नियमतोऽरुणोदयवेलायां मध्येगङ्गं स्नानाद्याह्निकनित्यक्रियां सम्पादयन्, कियद्वर्षात् फलदुग्धादिकमेव भुञ्जानः काशीस्थान् देशान्तरागतांश्च विद्वद्वर्गान् तथा संस्कृतान्तेवासिनः साधुवर्गांश्च सत्कुर्वन् दीनांश्च परिपालयन् समये समये महायागादिकं कुर्वाणः सप्तसप्ततितमां शरदं समवाप्य साम्प्रतं विद्योतते।

एतेषां महानुभावानां कीर्तिकलापेषु कियन्तो निम्नलिखितप्रकारेणावगन्तव्याः ।

जयपुरमण्डलमण्डनभूते 'पिलानी' नामके निजग्रामे विरलावेदवेदाङ्गविद्यालयः' ( २ ) निःशुल्कसहस्रशश्छात्रपरिपूर्णोच्चकक्षापर्यन्ताङ्गलविद्यालयः ( ३ ) विरला-इन्टरमिडियट-कालेजः ( ४ ) छात्रावासः ( ५ ) औषधालयः ( ६ ) बालिकाविद्यालयः ( ७ ) रम्याणि अभ्रंलिहानि–अतिथिभवनादीनि, ( ८ ) श्रीशङ्करप्रतिमाजटातो निःसृत्य गङ्गाप्रवाह इव विद्युद्यन्त्रतः प्रकाशतां नीता कृत्रिमा सरित् ( नहर ) । मरुपञ्चालादिदेशेषु, शतशः संस्थापिताः हिन्दीविद्यालयाः ( ९ ) काश्यां संस्कृतमहाविद्यालयः ( संकालेज ) ( १० ) काशीविश्वविद्यालये ए-

कादशलक्षमुद्रासाहाय्यंदानम् ( ११ ) विरलासंस्कृतछात्रावासः ( १२ ) शिक्षाप्रकारशिक्षणमन्दिरम् ( ट्रेनिङ्ग कालेजः ) ( १३ ) कन्यापाठशाला ( १४ ) प्रसूतिकागृहम् ( १५ ) सारनाथे महती आर्यधर्मशाला ( १६ ) पञ्चक्रोश्यां रामेश्वरस्थाने धर्मशाला ( १७ ) ब्राह्मणानां निवासाय वितीर्णानि अनेकभवनानि ( १८ ) अगाधगङ्गाप्रवाहतटे विस्तृतं दृढतरं लालघट्ट ( ( १ ) शिवघाट ( २ ) विष्णुघाट ( ३ ) गोपीगोविन्दघाट ( ४ ) हिन्दूघाट ) निर्माणम् ( १९ ) हरिद्वारे संस्कृतछात्राणां कृते अन्नसत्रं बृहद्घट्टनिर्माणम् ( २० ) अतिथिभवनम ( २१ ) ब्रह्मकुण्डे बृहत्तरं चतुर्दिग्दृश्यं घटीयन्त्रशिखरम् ( २२ ) इन्द्रप्रस्थे ( देहली ) देशान्तरागतजनतादृश्यभूतमनन्यसाधारणं हिन्दूसभाभवनोद्यानादिपरिवृतं पौराणिकधार्मिकमहापुरुषचित्रचरितलेखालङ्कृतम् अत्युन्नतमतिविस्ततं "लक्ष्मीनारायणमन्दिरम्" बौद्धमन्दिरञ्च ।

एवं मोहमय्यां नासिके कलिकातायां प्रसिद्धनगरेषु च बहूनि वर्णनीयानि सन्ति । परन्त्वत्र स्थानाभावात् समासतोऽप्यलेख्यानि कर्णाकर्णिकया प्रायः सर्वैर्विदितानि यशोमण्डलानि अन्यतो बोद्धव्यानि ।

---

## काशीस्थसंस्कृतविरलामहाविद्यालयस्य संक्षिप्तपरिचयः

काशीस्थसं० विरलामहाविद्यालयः षट्षष्ट्युत्तरैकोनविंशतितमे वैक्रमाब्दे (१९६६) संस्थापितः । अत्र सं० छात्राणाकृते सुष्ठुतरः प्रबन्धो विद्यते । अत्रोच्चवर्गस्थान्तेवासिनः न्याय-व्याकरण-साहित्य-वेदान्तेषु,-इतः शास्त्र्याचार्यपरीक्षे समुत्तीर्यानेकप्रान्तेषु काश्याञ्च सगौरवमध्यापयन्तो दृश्यन्ते ।

प्रत्यब्दं ये आचार्यपरीक्षां समुत्तरन्ति ते स्वर्णपदकोपहारेण समाद्रियन्ते । छात्राणां योग्यतासमृद्धये संस्कृतपुस्तकालयः हिन्दीपुस्तकालयश्च वर्तेते । देशदेशान्तोदन्तपरिज्ञानाय मासिकदैनिकपत्राणि च संगृह्यन्ते । अध्यापकानां वेतनादिकमपि सुष्ठुतरम् । विद्यालयाध्यक्षा अनेकविधसाहाय्यम् अध्यापकेभ्यः छात्रेभ्यश्च सहर्षं वितरन्ति । एतद् विद्यालयस्थानं सुरधुनीतटे स्वनिर्मितलालघट्टे,-अतिरमणीयं बृहद्घटीयन्त्र-(टावर) विराजितं प्रसादयति दर्शकानां चेतांसि-इति शम् ।



# शिक्षा का मुख्य उद्देश्य
## और आधुनिक समाज।

(ले० पं० प्रभुनारायणशर्मा सहृदय, साहित्यरत्न, नाट्याचार्य, हिन्दी-प्रोफेसर महाराज-संस्कृत कालेज, जयपुर)

शिक्षा का मुख्य उद्देश्य है संस्कार करना। संस्कार किसी भी वस्तु का अथवा किसी भी प्राणी का किया जासकता है। यहाँ तक तो शिक्षा का जड़ और चैतन्य दोनो प्रकार की सृष्टि से समान सम्बन्ध है। एक रत्नको लेलीजिए, अपनी असली अवस्था में जैसा कि वह खान से निकाला जाता है—रत्न का क्या मूल्य होता है किसी से अविदित नहीं और उसी रत्न को संस्कार के द्वारा जो कुछ रूप दिया जाता है उससे वही रत्न कितना अनर्घ होजाता है यह भी किसी से छुपा न होने के कारण विशेष उल्लेखनीय नहीं। उसी प्रकार क्या पशु, क्या पक्षी और क्या विधाता की सृष्टि का सर्वश्रेष्ठ प्राणी मनुष्य सभी संस्कार की अपेक्षा रखते हैं, और संस्कृत होने पर सभी का मूल्य और अवस्था पहिले से बहुत कुछ बदल जाया करती है।

सहस्रों वर्ष व्यतीत होगये, सदियों ने सरदी-गरमी की अनेक आवृत्ति कीं, बालक युवक और युवक वृद्ध होकर अपनी यात्रा नये-नये रूपों में कई बार समाप्त कर चुके, नदियाँ—जो प्रकृति के चिरस्थायी चिह्न हैं—न जाने कितना पानी लेजाकर सागर की अथाह कुक्षि में डालचुकीं, किन्तु इस रात-दिन के धूपछाँह के खेल के साथ साथ शिक्षा की पहेली का रंगरूप वैसा ही महत्त्वपूर्ण बनाहुआ है जैसा संसार का आना और जाना।

संसार की परिवर्त्तनशीलता का शिक्षा-सिद्धान्तों पर कोई प्रभाव न पड़ता हो सो बात नहीं। शिक्षा के सिद्धान्त बदलते अवश्य हैं, किन्तु उसका चरम उद्देश्य जो किसी भी पदार्थ को सुन्दर और उपयोगी बनादेना होता है चिरन्तन कालसे एक ही है और अनन्तकाल तक एकसा ही रहेगा।

उद्देश्य की दृष्टि से शिक्षा का कोई विभाग नहीं किया जा सकता। तथापि उपयोग की दृष्टि से हमें उसे दो मुख्य भागों में बाँटना ही पड़ता है। एक तो आत्मोन्नतिमूलक और दूसरा व्यवहारपरक। इन्हीं दोनो विभागों की प्रगति का संतुलन शिक्षा के चरम उद्देश्य का पोषक है। और इन्हीं दोनो का दो विरुद्ध दिशाओं में अभिगमन उसे दूषित करदेता है।

भारतीय शिक्षा-शैली ने बहुत उथल-पुथल देखे हैं। जिस २ संस्कृति से भारत का सम्पर्क हुआ उसी उस संस्कृति का प्रभाव हमारे शिक्षा-सिद्धान्तों पर पड़ा। उसके उद्देश्य की रूपरेखा में दो भिन्न सभ्यतावाली जातियों के भाव-संघर्ष के अनुसार उतार-चढ़ाव आया। इसी सां

स्कृतिक महासंग्राम का परिणाम यह हुआ कि भारत की वास्तविक शिक्षापद्धति कैसी थी और उसका व्यावहारिक लक्ष्य क्या था यह कहानियों का विषय मात्र रहगया है। और यदि कहीं से इस सम्बन्ध में कुछ पता भी चलता है तो उसे प्रागैतिहासिक युग की वस्तु बतलाकर आज के इतिहास-विशेषज्ञ प्रमाण नहीं मानते।

यह एक मानी हुई बात है कि आनेवाला काल गये हुए की अपेक्षा व्यावहारिक रूप में एक मौलिकता–जो उसकी अपनी होती है-लेकर आता है। जो सभ्यता आज से पचास वर्ष पूर्व सभ्यसमाज का शृंगार मानी जाती थी वही आज पचासवर्ष पश्चात् दकियानूसों के विचारों के नाम से प्रसिद्ध होरही है। जो रहन-सहन के तरीके आज वर्तमान हैं, आगे आने वाला युग–संभव है–उन्हें भी सभ्यता के मान-( Standard Civilization)से नीचे गिरा दे। इस निरन्तर बदल का कारण है समय की गतिविधि के अनुसार समाज की विचार-धारा का उन्नत और अवनत होना।

उन्नति और अवनति ये दोनो समूह-विशेष की विशेषप्रकार की भावनाएँ मात्र हैं। इनका अर्थ बडा मजेदार है। आप समझते हैं उन्नति बढौतरी को और अवनति पतन को कहते हैं? ठीक है, किन्तु व्यवहार में उन्नति वही है जिसे समाज के अधिकांश लोग उन्नति माने और अवनति वही जिसे समाज की बहुसख्या पतन माने, चाहे उससे उनका कितना ही सुधार अथवा बिगाड़ ही क्यों न होता हो। उदाहरणार्थ आप वर्तमान–जीवन–यापन की शैली ही को लेलीजिए। धार्मिक दृष्टिकोण से अथवा यों कहिये, भारत के अपने दृष्टिकोण से अपने उन्नततम समय की जीवन-शैलीसे उसकी (भारत की) आज की अंग्रेजी युग की जीवनशैली एक प्रकार से पतन का लक्षण होसकती है, किन्तु नये समाज से पूछ देखिये-क्या उत्तर मिलता है, वे स्पष्ट कहेंगे-उन्हें पतित समझनेवाले अभी उनसे एक शताब्दी पीछे हैं सभ्यता की दौड में। और अधिकांश लोग इसी मत के समर्थक निकलेंगे, तब कहिये उन्नति और अवनति के वास्तविक अर्थ का क्या मूल्य रहा। मूल्य रहा उसके समर्थकों की बहु-संख्या का।

यही सिद्धान्त आजकल शिक्षा पर भी पूर्णतः लागू होरहा है। शिक्षित की परिभाषा बडी विचित्र बनगई है। खासकर व्यवहारक्षेत्र में तो जो शिक्षित की परिभाषा मानी हुई है उसके अनुसार एक प्रकार से प्राचीन–शिक्षा–पद्धति के अनुसार शिक्षितों को शिक्षित ही नहीं माना जासकता। और इस प्रकार शिक्षा के क्षेत्र से बाहर हुए वे लोग भी बिचारे धीरे २ यही समझ बैठे हैं कि वे संसार के संघर्षमय जीवन में किसी मतलब के नहीं। संसार उनका कोई मूल्य नहीं आँकेगा और यदि जैसे-तैसे कोई मूल्य लगा भी तो वह दूसरों

की अपेक्षा न कुछ के बराबर होगा। बस, इसी तरह उनके विचारों में पोचता का प्रवेश होगया, वे अपने आपको पिछडा हुआ मानकर आज बहुत पीछे रहगये और दुनियाँ उन्हें छोडकर न जाने किधर और कितनी आगे निकल गई।

एक समय था जब– इस दृश्य के विरुद्ध–संस्कृतशिक्षा परम आदर की दृष्टि से देखी जाती थी। एक समय था, इस दरिद्र और दकियानूस भारत की ही शिक्षापद्धति ने हिमाचल की शीतल और सुदृढ़ प्राचीर को लांघ कर परिवर्त्तन की कठपुतली इस दुनियाँ के कोने–कोने में अपनी धाक बिठा दी थी। लोग दूर दूर से भारत के शिक्षा–मन्दिरों के दरवाजों पर मस्तक टेकने आते थे। भारत से लौटकर गया हुआ यात्री संसार के अन्यदेशों में पहुँचकर शिक्षित–समाज का शिरमौर समझा जाता था। वह भी दिन था जब हमारी शिक्षा-शैली में ऐसी उर्वरा शक्ति थी जो अखिल-भूमण्डल को अपनी २ रुचिके अनुसार प्रचुर सामग्री दे सकती थी। संसार को राजनीति, विज्ञान, साहित्य, इतिहास, भूगोल, गणित, अर्थशास्त्र, खगोलशास्त्र, समाजशास्त्र, मनोविज्ञान, दर्शन और अनेक दूसरे २ आवश्यक विषयों में से किसी भी विषय में भारत का साद्य यह विश्वास पैदा कराने में समर्थ था कि अमुक व्यक्ति अमुक विषय में भारत मान्य है इसी कारण वह संसार से प्रतिष्ठा पाने का हकदार है। हन्त! कहां हमारे वे दिन और कहाँ आज का युग, रात दिन का अन्तर होगया हम लोगों की मानमर्यादा में!

समय बदल गया, हम बदल गये, शिक्षा के सिद्धान्त बदल गये, उसके तरीकों में जमीन–आसमान का अन्तर आगया, किन्तु उसका असली उद्देश्य नहीं बदला। इस महान् परिवर्त्तन के कारण हम उस उद्देश्य से दूर हट गये यह बात अवश्य हुई किन्तु वह उद्देश्य अपने मूलरूप में अवश्य सुरक्षित है। शिक्षा का असली उद्देश्य धुधँले अक्षरों की भाँति, हमारे सामने रहते हुए भी, हमारे उपयोग का विषय क्यों नहीं रहा इस का कारण यह है कि आधुनिक शिक्षा-सिद्धान्त और नियम हमारे अपने न होकर इङ्गलिस्तान से हमारे देश में उधार आये हैं। उन्नीसवीं शताब्दी में वहां पर व्यावसायिक क्रान्ति हुई। लोग जो अब तक खेती करते थे कारखानों का रास्ता सँभालने लगे। समाज की व्यवस्था में बदहजमी हुई, गांव उजडकर नगर बसने का जो क्रम प्रारंभ हुआ उसी से वर्तमान शिक्षा प्रचार की पुष्टि हुई। जिस शिक्षा-शैली का उद्देश्य हाय 'रोटी' के प्रश्न को बढ़ाकर पेट छाती पीटते रहना ही रहगया हो या समझागया हो वह भला किसी भी समाज के लिये कहां तक हितकर होगी थोड़ा गम्भीर होकर सोचने का विषय है।

हमने शिक्षा का उद्देश्य किसी भी पदार्थ को संस्कृत करके उपयोगी बनादेना

बतलाया है। मनुष्यमें संस्कार किस वस्तु का किया जाता है। यह एक ऐसा प्रश्न है जो आमतौर पर किया जासकता है। मनुष्य के दो प्रमुख भाग हैं। एक शरीर दूसरा आत्मा। संस्कार का सम्बन्ध शरीर से अप्रत्यक्ष और आत्मा से प्रत्यक्ष होता है। बल्कि आत्मसंस्कृति के पीछे शरीर के संस्कार की कोई भिन्न सत्ता ही नहीं रहजाती। कहने का भावार्थ है कि प्राचीन शिक्षापद्धति जिस आधार पर अवलम्बित थीउस आधार की सत्ता है आत्मोन्नति के द्वारा शान्ति, गम्भीरता, सन्तोष और सदाचार की सहायता से समाज की अवस्था को संयत रखने में, न कि 'हाय रोटी' चिल्ला २ दुनियां में तूफान पैदा करके संघर्षमय जीवन के द्वारा अशान्ति मोल लेने में।

ये हैं दो दृष्टि-कोण जिनके द्वारा दो भिन्न-समाज शिक्षा के उद्देश्य को कसौटी पर कसते हैं।

आगे वह बात है जिसे संसार का कोई भी सभ्य होने का दावा रखनेवाला देश कभी भी इन्कार नहीं कर सकता। कम से कम जब तक जीने और मरने का रहस्यमय पर्दा फ़ाश नहीं होजाता आत्मशान्ति सभी लोगों के लिये एक परम वाञ्छनीय और अनर्घ-पदार्थ बनी हुई रहेगी। दुनियँा इसकी प्राप्ति के लिये लालायित रहकर भी ऐसे धन्धों में फँसी रहेगी कि जिस से इसकी प्राप्ति उसके लिये असम्भव सी ही बनी रहे। इस विचित्र समस्या को और भी जटिल बना देने का कारण है शिक्षा शैली का अधूरापन। इसी अधूरेपन को लक्ष्य में रखकर भारत ने अपनी शिक्षाशैली की शिला-भित्ति में आत्मशान्ति का ही विशेष स्थान रखा था। अपने सांसारिक-जीवन की अडचनों को इतना महत्व कभी नहीं दिया जितना आत्मोन्नति के मार्ग में आने वाली बाधाओं को हटाने वाले अलभ्य साधनों को। भारत की अपनी शिक्षा-पद्धति की सफलता इसी में है कि वह मनुष्य को शान्तिमय और सफल-जीवन यात्रा के पश्चात् एक अटल आनन्द की सीमातक पहुँचा दे सके। यदि ऐसा नहीं तो भारतीय शिक्षा-विशेषज्ञ शिक्षा के मुख्य उद्देश्य की पूर्ति में कभी सही नहीं कर सकते। चाहे भौतिक-दृष्टि से कोई भी समाज कितना ही उन्नत क्यों न हो शिक्षाके वे आदर्श जिन्हें अध्यापक-गण टेनिङ्ग-कॉलेजों की कक्षाओं में पढ चुके हैं और उन्हीं के बल पर अपने को धन्य मानते हैं उनको शिक्षा-विशेषज्ञ शिक्षा नाम की वस्तु के अनुकूल तो दूर रहा, उससे सम्बन्धित भी नहीं मान सकते।

अब रहा यह प्रश्न कि—शिक्षा के मुख्य उद्देश्य की पूर्ति के लिये कैसे और क्या प्रयत्न किया जाय? यह एक जटिल समस्या है। सरकार की सभ्यता और संस्कृति जब तक जनता की संस्कृति के अनुकूल न हो, शिक्षा की शैली का दृष्टिकोण असली उद्देश्य की ओर कभी नहीं आसकता। जब

तक भारत का शासन-विधान भारतीय संस्कृति के सिद्धान्तों के अनुकूल भारत के ही लिये न हो, शिक्षा का मुख्य उद्देश्य पूरा कभी नहीं होसकता। आजकल पश्चिमीय शिक्षा का उद्देश्य जहां खतम होता है वहां से भारतीय प्राचीन शिक्षा-शैली का उद्देश्य आरम्भ होता है। अब पाठक देखें कितना अन्तर है आजकल इन दोनो दृष्टियों में और कैसें इनका सामञ्जस्य संगत होसकता है।

कहने का तात्पर्य यह है कि देश में शिक्षा का प्रचार जितना आवश्यक है उससे कहीं अधिक इस बात की भी आवश्यकता है कि वह देश में सुख और शान्ति के साथ २ अपने पक्ष की भी रक्षा कर सकने में समर्थ हो और ऐसा तभी होगा जब शिक्षा का आदर्श परिस्थिति के; समाज के और देश की मनोवैज्ञानिकता के अनुकूल हो और उसका ढंग भी—साथ ही साथ—सामर्थ्य के प्रतिकूल न हो।

—****—

## ❁ संस्कृतविद्यार्थिनां व्यावहारिकजीवनम् ❁

( लेखिका-कुमारी कमलादेवी गुल्लानी शास्त्री, प्रभाकर )

अस्ति युगोऽयं प्रगतिशीलः। संसारस्य समेष्वपि क्षेत्रेषु द्रुतवेगेन समुचितं परिवर्तनं परिवर्धनं च दृश्यते। विश्वसाहित्यस्याऽध्ययनेनैतत् कथयितुं शक्यते यत्—प्राक्कालीनं संसारमद्यतनीनात् संसारात् कीदृक् क्रियच्च विभिन्नमासीत्। वाष्पयान-वायुयानटेलीग्रामादिभिराविष्कारैस्सुविस्तृतजगत्यां प्रसृता मानवजातिः दूरत्वनिबन्धनं बन्धनन्तिरस्कृत्य एकीकृताऽस्ति। अतः पारस्परिकेण सभ्यताया भावानाञ्चादानप्रदानेन नूतनैव क्रान्तिरस्त्युत्पादिता।

परं यथा हि दृश्यते संस्कृतभाषाया विद्यार्थिनोऽस्मान्नित्यनूतनात् संसारात् प्रायोऽपरिचिता एव सन्ति। तेषां व्यावहारिकजीवने न हि किमपि परिवर्तनं संदृश्यते। यदा हीतरभाषीयविद्यार्थिनामन्येषाञ्च केषाञ्चिन्मुखात् श्रूयते यत् संस्कृतभाषाया विद्यार्थिनो न हि विदन्ति सम्यक् वार्तालापप्रकारम्, न हि जानन्ति सम्यक् भोजनविधिम्, नाऽपि वस्त्रपरिधानरीतिम्, नाऽपि समयस्य मूल्यम्, नाऽपि च जीवनयापनमार्गम्, तदा हृदयेन नितरां दुःखमनुभूयते। यद्यपि तेषां कथनन्नास्ति यथावत्तथाऽपि तत्र विद्यते किमपि तथ्यम्। विचारणात् परं विज्ञायते यदस्त्यत्र एक एव हेतुः। संस्कृतभाषाया विद्यार्थिनः प्रायो बाह्यविज्ञानार्जनाद्विमुखा एव भवन्ति।

ते हि प्रायः परीक्षापाठ्यविधौ स्थितपुस्तकाऽध्ययनात् परन्नहि किमपि पठन्ति। परीक्षास्थपुस्तकान्यपि नह्याधुनिकविषयावलम्बकानि, प्रत्युत अतिप्राचीनकालाल्लिखितानि प्राचीनशैलीभाञ्जि भवन्ति। तेषां पाठ्यविधौ नाऽपि स्वास्थ्यसंरक्षणस्य, नाऽपि च विज्ञानस्य किमपि स्थानमस्ति। ते हि

प्रायो ग्रन्थान् रटन्ति, परीक्षाञ्चोत्तरन्ति। परीक्षोत्तरणादनन्तरं निर्धनास्ते वराका आजीविकाया विभीषिकया भीषणं संग्रामं विदधतो बाह्यविज्ञानसंग्रहणार्थं नाऽपि समयं प्राप्नुवन्ति न चेच्छन्त्यपि। ते हि विज्ञानस्य परिमितपरिधावेव परिभ्रमन्ति। नूतननूतनैराविष्कारैः समुद्घाटितप्रकृतिरहस्यैः प्रतिदिवसपरिवर्तमानजगतः समाचारैस्ते नितरामनभिज्ञा दृश्यन्ते। ईदृश्यनभिज्ञता तु सर्वथाऽसदृशी एव प्रतीयते ; यदि तान्नवयुगीया काऽपि रीतिर्नीतिर्वा, अथवा कोऽपि सिद्धान्तस्त्रुटियुतः प्रतीयेत तर्हि तेषामस्ति कर्त्तव्यं यत्तस्य प्रतिवादाय प्रयत्नं प्रकुर्युः, यच्च किञ्चित् सुचारु, उत्तममनुकूलञ्च प्रतीयेत तस्य ग्रहणाय यतेरन्।

परन्न हि तावत्तेषु किमपि परिवर्तनं भविष्यति यावत्तेषां पाठ्यविधिर्भविष्यत्यपरिवर्तितः। पाठ्यविधेः परिवर्तनेन सहैवैका वार्ताऽपरापि ध्यानयोग्याऽस्ति। संस्कृतभाषायामाधुनिकविज्ञानविषयकाणि मौलिकान्यनूदितानि च ग्रन्थपुस्तकान्यवश्यमेव लिखितव्यानि। यतो ये हि केवलं संस्कृतमेव साहित्यभाषारूपेण जानन्ति, तेभ्यो लाभान्विताः स्युः।

---

## ❀ छात्रः शिक्षकश्च ❀

( ले० श्रीरामस्वामिमहोदयः, अलवरराज्यीय'प्रतापदुर्ग'गत'शान्तिशिवहृदाश्रम'स्थः )

छात्रजीवनस्य प्रधानमालम्बनं शिक्षकमधिकृत्यात्र किञ्चिदालोच्यते। छात्रे यथा मातृमति पितृमति च सम्पन्ने शिक्षायाः फलं सम्यगधिगम्यते, तथा योग्यशिक्षकमन्तरेण शिष्यस्यान्तर्निहितायाः शक्तेर्यथावदुन्मेषो न भवति। शिष्यः खलु केनचिद् वृक्षपोतेनोपमीयते। योग्यः शिक्षक-कृषीवलश्चेद् यथोपयुक्तोपकरणोपयोगेन मानववृक्षपोतस्यास्य वृद्धिं सम्पादयेत्, तर्ह्येव यथाकालमुचितं ज्ञान-भक्ति-रूपं कर्मफलं तत्र फलितुमर्हति।

शिक्षकस्याचरणमेव शिष्यमाचरणं शिक्षयति। 'शिक्षक'-शब्देनात्र 'आचार्यो'ऽभिप्रेयते। शिक्षकेण विभावितो दृष्टश्च ज्ञानराशिर्भाषाद्वारेण शिष्यस्याऽन्तरनुप्रविश्य तदीयं देहं मनश्च परिवर्त्तयति। तस्मादेव कारणादुपनयनग्रहणेन द्विजत्वं सम्पद्यते। पिता खलु स्थूलं जन्म प्रददाति। आचार्यस्तु शिक्षया शिष्यस्य पुनर्जन्मावाप्तौ कारणतामापद्यते। ज्ञाने गम्भीरः, भक्तौ प्रशान्तः, कर्मसूक्ष्मशीश्च पुमानेवाचार्यपदवीमारोपयितुमर्हः। नैतद्गुणविरहितेन केनचित् तद् गुरुभारस्वीकरणं न्याय्यम्।

स्वेच्छाकृतं ज्ञानकृतं कर्म यथा संस्कारमुत्पाद्य फलं प्रयच्छति, तथा जाग्रज्ज्ञानस्यान्तराले समुपचितो ज्ञानराशिरगणितसंस्कारं जनयित्वाऽस्माकं चिन्ताराशिं शरीरं भाषाञ्च संस्कृत्य तेषां गतिं नियमयति।

येषु सहचरेषु वयं निवसामः, तेषां भावं भाषामाचारव्यवहारं रीति–नीतिञ्चाकामतोऽधिगच्छामः । एतदेव खलु सङ्गस्य फलम् । देश–काल–पात्राण्येवमस्मासु प्रभावमास्तीर्य चरित्रमस्माकं निर्मिमते । शिष्यश्छात्रो वाऽप्येतन्नियमानुसारेण शिक्षकस्य सहपाठिनां वयस्यानाञ्चाचरणमनुकरोति । स्वेच्छया विद्यादानकाले शिक्षको यथा शुश्रूषोः शिष्यस्य चित्तमलं दूरीकृत्य ज्ञानालोकेन तस्याज्ञानराशिमपाकरोति, स्वकीयेनाचरणेनापि तथा सदाचारं शिक्षयित्वा शिष्यस्य देहं मनश्च सुसंस्कृतं विदधाति । ये खलु सच्छिक्षाफलेनोत्तममार्योचितमाचरणं सम्पाल्य जीवितमात्मनः सुसंस्कृतं व्यदधुः, तैर्ज्ञानिभिः धर्मिभिश्च मनीषिभिश्छात्राणां शिक्षणभारेऽङ्गीकृते शिष्यवर्गा अपि गुरोः शिक्षायाः फलेन तमनुकृत्य योग्यगुरोर्योग्यशिष्या भवितुमर्हन्ति। 'गुरुतुल्यो भवेच्छिष्यः पितृतुल्यो भवेत् सुतः' इतीयं वाक् प्रचलति ।

अद्य तावद् वर्त्तमानशिक्षापद्धतौ यैः शिक्षकस्य स्थानमधिकृतम, ते खलु वित्तोपार्जनद्वारतया तदूरीकृतवन्तः । नन्वेतद् वाणिज्य-व्यवसायवत् परिगृहीतम् । तेषु कति जनाः पूर्वाचार्यवत्, तदादर्शपरिचालिताधुनातनसंस्कृतविद्यालयाध्यापकवद् वा ज्ञानदानव्रतिनः 'ऋषियज्ञ'मुद्दिश्य ज्ञानवितरणेनात्मनः समाजस्य च कल्याणसंसाधने बद्धपरिकरा भवन्ति ? यद्यध्यापनमेतद् यज्ञत्वेनामंस्यत, यद्यस्य प्रकृतं गुरुत्वमुपलभ्य कार्यमकरिष्यत, यद्येतद् धर्मकार्यतया पर्यगणयिष्यत, तदा वर्त्तमानशिक्षापद्धतेः स्वल्पसंख्याका एव शिक्षका गुरुभारमेतमेवं व्यवसायरूपेणाग्रहीष्यन् । शिक्षका विद्यालयमायान्ति, पाठानवबोधयन्ति, स्मृतिशक्तेश्च परीक्षामाददते-एतावतैव तेषां कृत्यमवसितम् । शिष्याणां चारित्र्यं कीदृक् सम्पद्यते, नैतस्मिन् मनागप्यवदधते, नाप्यत्रावधानदानस्य प्रयोजनं मन्यन्ते-यतो नैतद् दैनिककार्यपरम्परायां (Daily routine) विनिर्दिष्टम् । अतो गुरुशिष्यसम्बन्धः केवलमापणिकानां क्रयविक्रयव्यवहारसम्बन्ध इव संवृत्तः । नूतनस्य कस्यचित् पदार्थस्य प्रतिष्ठानं यथा समयमपेक्षते, पुरातनस्य कस्यचन वस्तुनः सम्पूर्णविलोपनमपि तथैव समयसापेक्षम । आर्यभूमेः प्राचीनादर्शे या गुरुभक्तिः शिष्यस्नेहश्चास्ताम्, तत्संस्कारोऽप्येतद्देशीयसमाजस्य मर्मण्यनुस्यूतः, आचार-व्यवहार-संलापेषु च तस्य प्रचलनमस्ति । तत्संस्कारफलेनाद्यापि भारतीयशिष्येषु गुरोः सम्मानः कियानवलोक्यते । अद्यत्वेऽपि शिक्षकाश्छात्रेषु स्तोकं स्निह्यन्ति । परमत्यल्पमात्रयैव तत्स्नेहस्य विकाशः सन्दृश्यते । पुरातनी रीतिर्लयोन्मुखी सञ्जाता । या च शिक्षापद्धतिर्देशान्तरादाहृत्य प्रायः शताब्दीं यावदत्र प्रवर्त्तिता, सेदानीं फलितुमुपक्रान्ता । शिक्षकेभ्योऽभिवादनन्तु दूरत आस्ताम्; सरणौ साक्षात्कारसम्भावनायां लेशतोऽपि सम्मानप्रदर्शनभिया छत्रेणात्मानं प्रच्छाद्येदानीं मार्गमतिवाहयन्ति छात्राः । शिक्षकच्छात्रयोः परिचयोऽपि नास्तीत्येतत्कथनं नाति-

शयोक्तिं स्पृशति । यस्य खलु पितृस्थानीयस्य शिक्षकस्य पादमात्रं संस्पृश्यान्तेवासिन आत्मानं धन्यं मन्यन्ते स्म, साम्प्रतं क्वचित् तस्य कचस्पर्शमपि कर्त्तुं न सङ्कुचति भारतसन्तानः । अन्यदपि किं कर्त्तुमुद्यतते, तद्विवरीतुं क्षोभेण घृणया च म्रियमाणं भवति चेतः । दृष्टान्तोऽयं न खलु भारतस्यादर्शभूतायाः शिक्षाया निदर्शकः, अपि तु शिक्षाव्यपदेशेन यादृशी कुशिक्षा प्रचलिता, तस्या एवैतद् विषमयं फलम् । नाधुना शिक्षकः पितृत्वेन परिगण्यते, नापि च्छात्रो भवति पुत्रस्थानीयः । "तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इत्यस्य भगवद्वचनस्य नास्ति सम्प्रति सार्थक्यम् ।

शिक्षकोऽधुनाऽऽत्मानमार्यसन्तानत्वेन प्रख्यापयितुमर्हति किम् ? यत् किमपि पाश्चात्त्यदेशादानीयते, तदेव श्रेयः, यत् तु स्वीय-पितृपुरुषाणां तपोलब्धम्, तद्धेयम् इत्येवं सर्वविषयेषु निर्विचारमवधारयितुं भारतीयैः शिक्षाऽवाप्ता । साम्प्रतं वेष-भूषायां भाषायामाहारविहारे भारतस्य शिक्षितसम्प्रदायैः पाश्चात्त्यदेशस्य रीतिनीतिरवलम्बिता, अन्तरीयोत्तरीये (धोती-चद्दर) परिहृत्य 'हैट-कोटौ' (Hat coat) विधृतौ, शिखां निकृत्याश्वकेशनीतिरादृता, विशुद्धां मातृभाषां परिहाय मिश्रिता नवीना हूणवाणी समाश्रिता, मलमूत्रोत्सर्गवेलायामशुचिव्यवहारोऽपि शुचित्वेनाङ्गीकृतः, प्रातःस्नानस्थाने 'कषायपत्र' (चाय Tea) पानाभ्यासो विहितः, सन्ध्योपासनादिसमये तदवज्ञया भ्रमणमुपशिक्षितम् । अद्य त्रिदिवालयादस्मान् पितृपुरुषाः प्रत्यभिज्ञातुं क्षमन्ते किम् ? शिक्षकाश्चेदीदृशाः स्युः (अवश्यमेतैरप्यन्यदेशीयेभ्य एवैतच्छिक्षितम्, पश्चाच्छिष्यपरम्परया शिक्षाविस्तारेण सममधुना शिक्षितसम्प्रदायेष्वप्यन्यत्र प्रचारितम्), तदा शिष्या अप्येतेषामाचरणं ज्ञानतोऽज्ञानतो वाऽनुकृत्य तत्सदृक्षा भवेयुरित्यत्र नास्ति किमपि विस्मयावहम् । अनुकरणं सर्वत्रानुचितमित्येतन्न कथयितुं शक्यते । यत्र यस्यां व्यक्तौ जातौ च यच्छोभनमुपलभ्यते, तदेवानुकरणीयम् । भारते चार्यजातेरादर्शम् -कल्याणपथादर्शम्- अनुसृत्य वर्त्तनावसरे पृथिव्या अन्यजातीयेष्वपि यदि तदादर्शानुकूलं किञ्चिदवाप्यते, तदवश्यमनुकरणीयम् ।

आदर्शः खलु कश्चिद् भावगोचरः पदार्थः । कर्मसु-शिक्षायां दीक्षायाम् आचारे व्यवहारे चास्य विकाशो भवति । जातेर्जातित्वम्, जातेर्विशेषत्वम्, एकजातेरन्यजातेः सकाशात् पार्थक्यम्-सर्वमप्येतत् तस्या आदर्शगत-विशेषत्वमवलम्बते । कालेन देशेन वा न तत् सम्पद्यते । इङ्लेण्डीया ग्रीष्मप्रधानं भारतवर्षमागत्य तेषां जातीयं विशेषत्वं किमजहुः ? ग्रीष्मेऽप्येतावति स्थूलवस्त्रनिर्मितं 'कोट पैण्ट' (Coat Pant) इत्यादिस्वकीयपरिच्छदं किमत्याक्षुः ? अनेन साधारणदृष्टान्तेनैव सजीव-जातेर्विशेषत्वरक्षणप्रयासः परिलक्ष्यते । पक्षान्तरे, घर्माक्तकलेवरोऽपि नितान्तमशान्तिमनुभूयापि पाश्चात्यपरिच्छदभूषितो भारतीयश्छात्रान-

ध्यापयति, विचारासनमध्यास्य प्राड्विवाककर्म निर्वाहयति, कृत्यान्यपराण्यप्येवमनुतिष्ठति, तथाऽपि स्वजातेर्विशेषत्वरक्षणे न मनागपि दृष्टिं निदधाति-परिधानोत्तरीये(धोती चद्दर) भारतीये परिधातुं नेच्छति। किमुपसंव्यानप्रावारौ परिधायार्यसन्तानोचितां वेशभूषामादाय कृतेऽध्यापनादौ कश्चिद् दोषः प्रसज्येत, अस्ति वाऽप्येतद् विधिवारितम्?

आर्यजातेरादर्शानुरूपं सन्तानस्य चरित्रनिर्माणप्रसङ्गे यथा मातापित्रोः प्रयत्नातिरेकस्तपस्यातिशयकृतः समपेद्यते, ज्ञानयज्ञेन शिष्यं सुसंस्कृतमापादयितुमाचारव्यवहारादिषु तथा सर्वत्र शिक्षकोऽप्यार्यसन्तानः कल्याणपथपथिको भवितुमर्हति। स्वयं पितृस्थानीयेन तेन चरित्रवताऽऽदर्शज्ञानिगुरुणा भाव्यम्, शिष्यश्च निजौरससन्तान इव प्रेम्णा पालनीयः। गुरुभक्तिः शिष्यस्नेहश्च तदा स्वयमेव वृद्धिमाप्नुयाताम्। इह परत्र च गुरुशिष्यसम्बन्धोऽनवच्छिन्नस्तिष्ठेत्। शिष्यो ज्ञानी सच्चरित्रो धार्मिकश्च भूत्वा गुरोर्जीवद्दशायां तृप्तिं विदध्यात्। गुरोर्देहावसाने च तर्पणं कुर्यात्। गुरुभिः खलु नित्यमेतत स्मर्त्तव्यम्, तेषां कर्त्तव्यं नितरां गुरुत्वोपेतमिति। शिष्यैश्च सदा—'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया'—इति गीतावाक्यं स्मृतिपथमानेतव्यमिति।

---

# वर्तमानकालश्च शिक्षिताश्च

[ १ ]

भूरिधनराशिं विना विद्या दुर्लभैवाऽधुना तत्रापि च विज्ञानं विनाऽद्य १कियच्छिक्षितम्?
लब्धभूरिविद्योऽपि च विन्दते न सद्यो धनं यस्माद्धनवद्भिर्लाभवर्त्म२ समावेष्टितम्।
एवं भूरिचिन्ताभिर्व्यतीतपुरुषायुषस्य नूनमस्य भाग्ये सुखं कियदवरेखितम् ३
खेलत्खलजाले बत वर्तमानकाले कलौ भद्रजनभाले भूतभर्त्तः! किमालेखितम्॥

[ २ ]

धार्मिका म्रियन्ते, बत वैदिका विलीयन्तेऽथ, क्रन्दन्ते कुलीनाः क्वाचत्कोणे कृतवेपितम्
दातारो दरिद्राः, दुःखदग्धा दयावन्तो जना, वेपन्ते विनीता, बुधा बध्यन्ते सहेलितम्४।
साधवः सदुःखाः, पुण्यवन्तो दम्भवन्तोऽभवन्, मञ्जुनाथ मार्मिकाः प्रयान्ति परिदेवितम्
खेलत्खलजाले बत वर्तमानकाले कलौ भद्रजनभाले भूतभर्तः किमालेखितम्॥

---

१-विज्ञानम् (साइन्स) विना पृथुदिनेषु शिक्षा कियती? न किमपीत्यर्थः।
२-साइन्सादिद्वारा धनप्राप्तेर्मार्गः प्रभूतधनवद्भिर्वैदेशिकैरवरुद्ध इत्याशयः।
३-भाग्ये रेखामिः कियत् अङ्कितम्? न किञ्चिदपीत्याशयः।
४-सावहेलनं बद्धाः क्रियन्ते।

पारपुमुपनीता पूर्वपद्धतिः प्रवीणैरद्य चलिता चतुर्दिङ् नवशैली निरुपेहितम्६
आडम्बरमात्रं वंशमर्यादामवैति जनो वादायैव संप्रदायवृत्तमधुनेरितम्७ ।
मञ्जुनाथ मीलति मनस्वी निजमानसेऽद्य कस्मै कथयेत निजवृत्तमिदमेधितम्८
खेलत्खलजाले बत वर्तमानकाले कलौ भद्रजनभाले भूतभूतैः किमालेखितम् ॥३॥

भट्टश्रीमथुरानाथशास्त्री

---

# संस्कृतभाषाया लोकोपयोगित्वम्

( ले० कथाभट्टश्रीनन्दकिशोरशर्मा साहित्याचार्यः, एसिस्टेन्ट प्रोफेसर संस्कृतकालेज, जयपुर )

संस्कृतभाषाया लोकोपयोगित्वे सन्त्यनेक उपायाः। भाषाणामुन्नतौ य उपायाः सर्वत्र विलोक्यन्ते त एवात्रापि समादरणीयाः। हिन्दीभाषा पूर्वमलब्धप्रसारापि साम्प्रतं लब्धप्रसारा विलोक्यत इत्यत्रैतानि निमित्तानि। हिन्दीभाषायां पूर्वं स्वल्पमपि साहित्यं नासीदधुना तु पूर्णरूपेण दृश्यते। रामायणमहाभारतवेदवेदान्तकाव्यनाटकादीनि व्याकरणन्यायशास्त्रादीनि च हिन्दीभाषायामनूद्य विद्वद्भिर्भाषासाहित्यं समुपबृंहितम्। कथेतिहासभूगोलपुस्तकानि धर्मशास्त्रकर्मकाण्डविषयकाणि नवीनाविष्कृतबाष्पयानवायुयानराजनियमपुस्तकानि च हिन्द्यामनूदितानि प्राप्यन्ते, येषामाधारेण हिन्दीभाषाभिज्ञो जनो लोकोपयोगिविषयानभिज्ञो नावर्तत। एवमेव संस्कृतभाषायां ते विषया अनूद्या येऽत्र न विद्यन्ते, विद्यमाना अपि च येऽतिप्राचीनत्वेन महत्परिवर्तनमपेक्षन्ते। यथा वङ्गभाषायां नवीनाः प्राचीनाः संस्कृतादिभाषान्तरोपनिबद्धा वा सर्वे विषयाः समुपलभ्यन्ते। अत एव वङ्गभाषाभिज्ञो लौकिकं सर्वं विषयजातं वङ्गभाषयैव वेदितुमीष्टे। वङ्गीयेतरभाषानभिज्ञोऽपि स इतरभाषोपनिबद्धमपि विषयजातं जानीते।

संस्कृतभाषायां कियत्परिवर्तनमपेक्ष्यत इति चेत्श्रोतव्यम्। परिवर्तनं संस्कृतवाण्यां प्राचीनकालादेव यथासमयं प्रारब्धमस्ति। यथा वेदोक्ता संस्कृतगीर्भिन्नस्वरूपा, न तादृशी न्यायादिशास्त्रेषूपादीयते स्म। पूर्वं सूत्रकालस्ततो भाष्यकालः, पुनश्च भाष्याणामपि टीकाष्टिप्पण्यश्च प्रसृताः। एवमेवाधुनापि संस्कृतभाषोक्तविषयोऽपि परिवर्त्य परिवर्धनीयः।

विषयपरिवर्तनपरिवर्धनयोरियं शैली समादरणीया महाभारतपुराणादिषु यद् भौगोलिकवर्णनं वर्तते तद्वर्णनानुसारेण–

---

५–दूरीकृतेत्यर्थः।
६–निरुपाधि (स्वच्छन्दम्)।
७–वैष्णव-शैवसंप्रदायादीनां वृत्तम्, ईरितं कथितं सत् विवादाय।
८–एधितं वृद्धिं गतम् (दीर्घमिति यावत्) इदम् (आत्मवृत्तम्) कस्मै कथयेत?

धुनिकानां नगराणां ग्रामाणां नदानां नदीनां पर्वतानां स्थानानि नामानि प्रस्तरा आयामा दैर्घ्याणि च संग्रहीतव्यानि । यथा-आङ्गल-भाषायां बाबूनन्दलालदेमहाशयेन पुराणादिवर्णितभौगोलिकत्रिगर्तपाञ्चालादिप्रदेशानां स्थानानीदानीं तत्र २ सन्तीति प्रदर्शितानि । तथैव तादृशं भौगोलिकं पुस्तकं प्राचीननवीनस्थानादिप्रदर्शनपुरस्सरं संस्कृते लिखेल्लिमम् । येन संस्कृतभाषावेदिनः पाञ्चालदेशनाम्ना पञ्चाम्बुदेशं व्यवहृत्योपहासार्हा न भवेयुः ।

राज्ञो धर्मा नियमा वा मन्वादिस्मृतिषु विशिष्य प्रतिपादिताः । एतेषामाधारेणैव च साम्प्रतिकैर्महाराजैः स्वन्यायालयनियमाः (कानून-ग्रन्थाः) निर्मापिताः । येषां मूलं संस्कृते, त एव न्यायालयनियमा अस्माभिर्न ज्ञायन्ते, तदर्थं च परमुखप्रेक्षणं क्रियत इति महल्लज्जास्पदम् । अतो न्यायालयनियमाः प्राचीननवीनशैलीसमालोचनपुरस्सरं संस्कृते परिवर्तनीयाः ।

आङ्गलभाषायां नवीनाः प्रतिदिनं विषयाः प्रस्फुरिता विलोक्यन्ते । ते विषया बाष्पयानवायुयानरेडियोनिर्माणप्रतिपादकाः सेतिहासाः समालोचनपुरस्सरं संस्कृतगिरा निबद्धव्याः । विज्ञान (साइन्स) शास्त्रमितव्ययता-(इकोनामी) दिशास्त्राण्यपि संस्कृते स्युः । नवीनशब्दा अपि संस्कृतभाषायां योगानुसारेण व्युत्पत्त्यनुसारेण च यौगिका गृहीताः स्युः । यथा मनी-आर्डरपदं धनादेश इति नाम्ना व्यवहृतं स्यात् । इयं भाषान्तरोक्तविषयग्रहणसरणिर्न मदुपज्ञा, किन्तु बहोः कालादनुपणप्रचारा प्रसृता वर्तते । यथा जयनगरप्राणदात्रा राजन्यमूर्धन्येन सवाईजयसिंहेन महाराजेन पुर्तगालनिवासी कश्चिद् विद्वान् हकीम मार्टीनसाहिबनामाऽऽकारितः । तद्द्वारा च गणितविषयका अनेके रेखागणित-तारासारण्यादयो ग्रन्थाः संस्कृते निर्मापिताः । लोके विशेषतो भारतवर्षे च गणितविद्या तैर्ग्रन्थैर्यन्त्रालयैश्च पुनरुज्जीविता ।

सर्वथा ग्रन्थोच्छेदे तद्विषयस्य संस्कृतानुवादप्रणाली विद्वद्भिः समादृता । यथा सांख्यकारिका माठरवृत्तिर्या खिस्ताब्दीयप्रथमशताब्द्यां कुशनवंशीयकणिष्ककाले माठरगोत्रोत्पन्नेन मुनिना निर्मिता, सा च भारतवर्षाद्बहिश्चीनदेशे गताऽनूदिता च तत्र । पुनः सांप्रतं गवेषकैस्तामुपलभ्य चीनीयभाषातः पुनः संस्कृतभाषायामानीता सा च प्रतिविद्यालयमधीयते । कवेः कुमारदासस्य सुप्रसिद्धं जानकीहरणाख्यं काव्यं भूतपूर्वजयपुरशिक्षाविभागाध्यक्षेण पं० हरिदासशास्त्रिणा सिंहलदेशीयलिपितः संस्कृतलिपिषु १८९३ ई० वर्षे परिवर्तितमिति भारतवर्षे को न जानाति विद्वान् । लोकव्यवहारोपयोगिनो ये विषयाः संस्कृतवाण्यां न विद्यन्ते, विद्यमाना अपि च ये कालवशात्सर्वाङ्गपूर्णा न सन्ति संस्कृतप्रचाराय ते विषयाः समादरणीयाः । यथा— ज्यौतिषशास्त्रे मुनफा-अनफा- इत्थशाल-ताजिक-फलादेश-रमलप्रभृतयो विषयाः समा-

दृताः। एषां समादरणेन ज्यौतिषशास्त्रं लब्धप्रसारं बहुलं विलोक्यते।

आयुर्वेदे च महत्परिवर्तनमजायत, जायते, जनिष्यति च। यथा--व्यवहारायुर्वेदस्या-(कानूनीवैद्यक)युर्वेदशास्त्रेऽभाव एवासीत्। अधुना तद्विषयप्रतिपादको ग्रन्थो हिन्दीभाषायामनूदितो विद्वद्भिः। स एव च पाठ्यत्वेनापि निर्धारितः। अयं ग्रन्थो 'हमारे शरीर की रचना' इति ग्रन्थश्च यदि संस्कृतभाषायां निबद्धः स्यात्तदा कीदृङ् मनोरमं स्यात्संस्कृताभिज्ञानां कृते। कृते चैवं कथं न संस्कृतभाषाप्रचारबाहुल्यं भवेत्। प्रहारो व्रणो रुधिरं चेदं स्वतः प्रवृत्तं परैः प्रवर्तितं वेत्यनेन व्यवहारायुर्वेदाख्येन ग्रन्थेन सुस्पष्टं निर्णीयते। एवमेवायुर्वेदे शल्यचिकित्सा(सर्जरी)-पि नवीनशैल्यनुसारं महामनोमालवीयमहोदयेन विश्वविद्यालये प्रवर्तिता। संस्कृतविद्यानुरागिणा मालवीयमहोदयेन कायकल्पोऽपि क्रियते स्म। यो वैद्यकग्रन्थेषु लिखितोऽपि साम्प्रतमविदित इवासीत्। एवमेव संस्कृतेऽपि नूतनानां लोकोपयोगिनां विषयाणां समावेशोऽवश्यं संभाव्यते प्रचारोऽस्याः।

स्वर्यातिनालवरेन्द्रप्रमुणा श्रीजयसिंहमहाराजेन न्यायालयशब्दानां व्युत्पत्त्यनुसारेण 'वल्लभत्रैभाषिककोशः" इति नाम्ना कोशग्रन्थः संस्कृते हिन्द्यां च निर्मापितः। तदाधारेणैव च न्यायालयेषु संस्कृतशब्दान् प्रचाल्य संस्कृतभाषोन्नतिपक्षे पदमर्पितम्। यदि च तदनुकरणं सर्वराजधानीषु स्यात्तदा मन्यामहे वयमभूतपूर्वा संस्कृत-भाषासमुन्नतिः स्यादिति।

पी. वी. काणेमहाशयेन धर्मशास्त्रस्येतिहास- ( हिस्ट्री-आफ् धर्मशास्त्र )ग्रन्थः, डाक्टरसुशीलकुमारदेमहाशयेन चालङ्कारशास्त्रेतिहासग्रन्थश्चाङ्ग्लभाषायामुपनिबद्धौ। एतयोर्ग्रन्थयोर्मध्ये बहूनां पुस्तकानां पत्राणां विषयानां टीकानां टिप्पणीनां चाविदितानां वर्णनं परिचायनं मूलान्वेषणं च विहितमिति ग्रन्थाभ्यामेताभ्यामस्मिन्संस्कृतह्रासकाले धर्मशास्त्रस्यालङ्कारशास्त्रस्य च महान् समुपकारः समजायत। मन्ये ग्रन्थाभ्यामेताभ्यामनयोः शास्त्रयोर्मध्ये सजीवत्वं समुज्ज्वलत्वं सविकासत्वं च समेधितमिति।

महामान्यमहाभागाः! यदि ग्रन्थावेतौ संस्कृते स्यातां तदा कथं न संस्कृतविषयोन्नतिः संभावितासीदिति श्रीमद्भिरेव मध्यस्थैर्भाव्यम्।

श्रीमन्तो विद्वद्वर्याः! संस्कृतभाषाशिक्षणपद्धतौ योऽस्ति मदीयः स्वल्पोऽनुभवः स श्रीमतां प्रतिभावतां पुरः समुपस्थाप्यते, रोचेत चेद् भवद्भ्यस्तर्हि समभिलष्यते प्रचारोऽस्य। संस्कृतभाषाशिक्षा विद्यालयेषु तथा प्रचलिता स्याद् यया सह पदार्थसम्बन्धो ( वस्तुपाठः )ऽपि संपृक्तो भवेत्। अधुना प्रायो दृश्यते विद्यालयेषु यत पठनं पाठनं च भवति, न्याये वेदान्ते सांख्ये योगे वेदे च दुरूहग्रन्थाश्छात्रैरधीयन्ते। किन्तु तदनुकूलाभ्यासाभावः प्रायः सर्वत्रैव प्रस्फुरति।

न्यायशास्त्रे च 'यत्र धूमस्तत्र वह्निः" इति व्याप्तिविवेचनं सोपस्कारमनेकधा क्रियते पाठ्यते च, किन्तु कोऽप्येतादृशो मानवो न विलोक्यते प्रायो येन महानसे निरीक्षिताया व्याप्तेरनुभवः पर्वतेऽयोगोलके कुज्झटिकाकुले च प्रदेशे कृतः स्यात् । पुनश्च तयाग्नेरनुमानं भवति न वेति विचारितं स्यात् । मान्याः ! सति व्याप्तिलक्षणस्य पूर्णज्ञाने योऽन्यां व्याप्तिं पठितदिशा प्रकल्प्य तदाधारेण चानुमानं कुर्यात् तदा मन्यामहे संस्कृतभाषाशिक्षायाः साफल्यम् । इदं व्याप्तिलक्षणविवेचनमुपलक्षणमात्रम् ।

भारतीयदर्शनशास्त्रमाधिभौतिकानामाधिदैविकानामाध्यात्मिकानां भूचराणां खेचराणां जलचराणां विषयाणां प्रतिपादकम् । एतदध्ययनेन यद्यपि किमप्याश्चर्यजनकं वस्तु नावशिष्टं स्यात्, तथापि वयं साम्प्रतं नवनवाविष्कृतपदार्थान् विलोक्य विस्मिता भवामः । यदि दर्शनशास्त्रस्याध्ययनं वाङ्मात्रेण प्रचलितं न स्यात्तदा मन्ये संस्कृतभाषा परैर्मृतभाषानाम्ना व्यवहृता न स्यात् । वेदान्ते त्रिवृत्करणं पञ्चमहाभूतानां च पञ्चीकरणं प्रायः सर्वैः पठ्यते पठितं च, किन्त्वीदृशो मानवाः स्वल्पतरा एव, ये कमपि पदार्थमादाय तत्र पञ्चमहाभूतानां पृथक्त्वं संपाद्य प्रदर्शयेयुर्यदत्रायमग्निरिदं जलमियं पृथिवीत्यादीति । यदीयं पाठनप्रणाली प्रचलिताभविष्यत्, तदाधुनिकं साइन्सपदाभिधेयं विज्ञानशास्त्रं संस्कृतभाषाविज्ञानस्य लेशतोऽपि साम्यं नाकरिष्यत् ।

अयि संस्कृतभाषोन्नतिपरायणाः ! इतरभाषोन्नतिविषयेऽपि दृष्टिर्निक्षिप्यताम् । आंग्लविद्यालयेषु येषु विज्ञान-( साइन्स ) शास्त्रं पाठ्यते तत्र न वाङ्मात्रेण, किन्तु पदार्थविशकलनपुरस्सरं कार्यपरिणतिमुखेन । साइन्सशास्त्राध्यायिनः "धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः" इति श्रुत्वैव पठित्वैव मत्वा च न विरमन्ति, अपि तु ते कथितपदार्थैर्मेघं विरचय्य जलवर्षणमपि कारयन्ति । इयं प्रणाली संस्कृतभाषाशिक्षणेऽपि समालम्बनीया । उक्तं च श्रीमता कविमूर्धन्येन श्रीहर्षेण कविना—

अधीतिबोधाचरणप्रचारणै-
र्दशाश्चतस्रः प्रणयन्नुपाधिभिः" । इति ।

प्रतिविद्यमधीत्यादिभिरुपाधिभिश्चतस्रोऽवस्था भवन्तीति यथात्र प्रतिपादितं तथैव सर्वैरध्यापकैरध्यायिभिश्चाधीतविषयस्य ज्ञानतः पदार्थतश्च प्रचारणादि विधेलिमम् । येन सर्वे संस्कृतवेदिनः संस्कृतभाषा च समुज्ज्वलाः सजीवाः ससमादराः सोपयोगाः सचमत्काराः प्रतिकार्यप्रसराश्च भवेयुः ।

श्रीमत्सु अध्यक्षमहोदयेषु शिक्षाविभागाध्यक्षेषु शिक्षासचिवेषु च मया सादरमावेद्यते यद् प्रतिविद्यालयमांग्लविद्यालयेष्विव पुस्तकपाठेन सह वस्तुपाठोऽपि नियतरूपेण प्रचालितो भवेत् । एतत्प्रान्तोत्पन्नानां वस्तूनां पशूनां पक्षिणां तरूणां वल्लीनां फलादीनां च चित्राणि मृण्मयप्रतिमाश्च विद्यालयेषु संनिहिताः न्यस्ताश्च पुस्तकपाठन-

समये पाठकैः प्रदर्शिता भवेयुः । एतेन संस्कृतं पुनरुज्जीवितं स्यादिति मन्ये । अध्यापकमहाभागाः प्रतिदिनमस्यावश्यकतामनुभवन्ति । यथा-वसन्तवर्णनसमये काव्यनाटकादिषु सर्वत्र प्राप्यते माधवीलतायाः सविशेषवर्णनम् । कोशेऽपि ' वासन्ती माधवीलता" इत्युल्लिखितं वर्तते, किन्तु प्रायः सर्वे एव जनाः काव्यपाठनसमये "माधवी काचिल्लता" इत्येव वदन्ति जानन्ति च । यां लतामन्तरा काव्यसर्वस्वभूतं वसन्तवर्णनमकिञ्चित्करम्, तस्या एव ज्ञानेऽस्माकमियं दशा, विचार्यतां मनाक् कीदृशी दुर्व्यवस्था संस्कृतशिक्षणपद्धतेः ।

एवमेव च "कुररीगणः कृतरवस्तरवः" इति किरातार्जुनीये ' हारीतहरितहये" इतिनलचम्प्वाम्, 'उत्क्रोशकुररौ समौ' इति च कोशे पठ्यते, किन्तु न ज्ञायते बहुभिर्यत्कुररपक्षी कः कीदृशश्च स भवति । अध्यापनसमये कुररः पक्षिविशेष इत्येवाध्याप्यते ।

यथा सामयिकसमाचारपत्रेषु द्वीपान्तरीयवस्तूनां चित्रद्वारा परिचयोऽस्माकं समक्षं समुपस्थाप्यते तेनैव च तेषामप्रतिहतः प्रचारो जायते तथैव चित्रद्वारेण प्रतिमाद्वारेण च काव्यकोशादिषूक्तवस्तूनां परिचयश्छात्रेभ्यः प्रदातव्यस्तेन छात्राणां परिज्ञानं भवेत् ।

इयं व्यवस्था संस्कृतभाषावस्थितवस्तूनाम् । यानि च वस्तूनि साम्प्रतमेवाविर्भावितानि मोटर-रेल-तार-रेडियो-फोनप्रभृतीनि, तेषां यौगिकाः शब्दाः संस्कृते संगृहीताः स्युः । एवं कृते संस्कृतोन्नतिप्रचारौ भवेतामिति मदीयो विश्वासः ।

— ❀❀❀ —

## ❀ साहित्यशास्त्रस्य कीदृशी शिक्षा साम्प्रतमुपयुक्ता ❀

'साहितस्य भावः साहित्यम्' इति नामधेयादेव व्याकरण-न्यायादिसर्वशास्त्रज्ञानाधिगम्यस्य 'अलंकार'शास्त्रापरनामधेयस्यास्य साहित्यशास्त्रस्य प्रयोजनं सत्काव्यनिर्माणमिति मन्ये सर्वस्यैव विदितम् । यावद्धि साहित्यशास्त्रेण वैदर्भ्यादिरीतीः, रसगुणालंकारादींश्च न परिजानाति तावन्न तादृश्यां काव्यरचनायां पटुर्भवति या लोकानामावर्जने प्रभुर्भवेत् । न च दोषपरिचयं विना परुषवर्णत्वादिदोषेभ्यः स्वकीया रचना विनिवारयितुमेव शक्या । अत एव सत्काव्यनिर्माणाभिलाषिणा साहित्यशास्त्रमिदमधीयत इति बहोः कालात्प्रचलितो व्यवहारः । न च साध्यतावच्छेदकसंबन्धावच्छिन्नेत्यादिपदगुच्छकाऽऽच्छन्ने तर्कशास्त्रे पाटवाभिलाषी बटुः प्रातिस्विकरूपेण साहित्यपुस्तकमधीयानो दृष्टः । एवं च अन्वयव्यतिरेकाभ्यां साहित्यशास्त्राध्ययनस्य सत्काव्यनिर्माणमेवोद्देश्यमिति निर्विशङ्कमुट्टङ्कितं भवति ।

इदानीमनेन योग्यतामापकमानयन्त्रेण स्नातकानां साहित्ययोग्यता परिमीयतां नाम।

समग्रेऽपि भारते साम्प्रतमपि प्रतिवर्षं शास्त्र्याचार्यादिपरीक्षोत्तीर्णाः परश्शता एव साहित्यस्नातका नानाविद्यालयेभ्यो निर्गच्छन्ति अपि सर्वे ते काव्यनिर्माणे पटवो निष्पद्यन्ते ? न विस्मृतं भवतु भवतां यत् काव्यनिर्माणपाटवं न कस्यचिद् गुप्तं तिष्ठति—

'वार्ता च कौतुकवती, कविता च हृद्या,
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार—
मेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥'

इत्याभाणकानुसारं सत्कविता बलादेव जनताया जिह्वारङ्गभूमौ नृत्यति । किन्तु प्रकृते नेदमुपलभ्यते । ये साहित्यस्य शास्त्र्याचार्यादिपरीक्षोत्तीर्णा न सन्ति ते बहुत्र कविताम्, साधुकवितां कुर्वन्तोऽवलोक्यन्ते । ये तु साहित्यस्याचार्यपदकमावहन्ति तेषां केचिदेव 'कविः' इत्यभिख्यामलंकर्तुमलम् । अन्यथा सर्वे पठितग्रन्थाध्ययनाऽध्यापनपात्राण्येव । अक्षरयोजनेन कदाचित् श्लोकनिर्माणं तावदपरा कथा । अन्यशास्त्राध्यायिनोपि क्वचिन्निर्मान्त्येव पद्यानि । एवं सति साहित्यानुशीलनस्य, पुरुषायुषे समग्रस्याध्ययनकालव्यतिगमनस्य, कः परिणामो निष्पन्नः ?

ननु कवितायां स्वाभाविकी प्रतिभाऽपेक्ष्यते । ये किल स्वाभाविककविताबीजशालिनस्ते शास्त्र्याचार्यादयोऽपि कवयन्त्येव यथावत् । येषां च न नैसर्गिकं कवितावीजं ते तु साहित्यशास्त्राध्यापनेनापि न केनचित्कवयो बलान्निष्पादयितुं शक्याः । तत्र को दोषो वराकस्यास्य साहित्यशास्त्राध्ययनस्य ? न हि वर्तमानयाऽनया साहित्यशिक्षाप्रणाल्या कस्यचित्कवित्वं प्रतिरुध्यते इति चेत्, आम् अस्त्येवम् । ये किल स्वाभाविकाः कवयः परमेश्वरेण सृष्टास्ते तु साहित्यशास्त्रिआचार्यादिपरीक्षां विनापि कवयेयुरेव, कवयन्त्यपि । मया पूर्वं निवेदितमेव यद् ये शास्त्र्याचार्यादिपरीक्षोत्तीर्णा न सन्ति ते बहुत्र कवयन्तीति । किन्तु तादृगीश्वरानुग्रहाभावेऽपि ये किल समग्रमप्यध्ययनोचितं कालमस्मिन्नेव व्यवसाये यापितवन्तस्तेषामप्यंशतः कविताशक्त्या उत्पत्तव्यमेव । उक्तं हि कविताया आकरग्रन्थेषु—

'न विद्यते यद्यपि पूर्ववासना—
गुणानुबन्धि प्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता
तदा करोत्येव कमप्यनुग्रहम् ॥' ध्रुवं

किन्तु वर्तमानकालिकेनानेनाध्यनेन न जन्यते सा कवित्वशक्तिरिति प्रत्यक्षमीक्ष्यते । मार्मिकैरनुभूतम्, अनुभूयते च । तत्तत्संस्कृतविश्वविद्यालयानां परीक्षापरिणामविवरणेषु (रिपोर्ट) अधिकारिभिस्तदिदं प्रकाश्यते च । कविताशक्तिर्नोत्पद्यते एतत्त्वस्त्येव, किन्तु येषां स्वाभाविकी सा शक्तिरस्ति तेषां सा अंशतः प्रतिरुध्यतेऽपि । संरम्भं विमुच्य, मम निवेदनोपरि मर्मस्पर्शितया विचारयितव्यं स्यात् । सर्वमहं विज्ञापयेयम्—

अवच्छेदकतायुगेत्युपनामधारिणा वाद(शास्त्रार्थ) युगेन संस्कृतवाङ्मयस्य का परिस्थितिर्निष्पादितेति स्थानान्तरे ममोपसंहारलेखे द्रष्टुं स्याच्छ्रेमद्भिः । साहित्यशास्त्राया-

पि तेन युगेन पूर्णः प्रसादो दत्तः । अलंकारशास्त्रस्य ह्यावश्यका विषया रीतिगुणालंकारादयो वामनादिभिः सरलसुबोधेषु निबन्धेषु संदृब्धा एव पूर्वम् । परं वादयुगस्य चण्डिमा यथा यथा पण्डितेष्वजृम्भत तथा तथा साहित्यशास्त्रेपि 'क्षोदक्षेम'पूर्णा भाषा संमानं लेभे । यस्य हृदये भगवता कविताबीजमुत्पादितं तस्य कृते 'काव्ये के दोषास्त्याज्याः, गुणालंकारादयः के शोभासंपादनाय संनिवेश्याः, कथाख्यायिकादीनि गद्यकाव्यानि—दृश्य-श्रव्यादीन्यन्यानि च काव्यानि किंस्वरूपाणि, कथं वा तानि निर्मेयाणीति' सर्वोप्यावश्यको विषयो दण्डि-भामह-वामनादीनां ग्रन्थेषु निरूपित एव तावत् । न हि कवितां गुम्फयतोऽधिकारिणः कृते प्राचीनग्रन्थेषु कवितानिर्माणोपयुक्तः कश्चन विषयो न्यूनोऽभवत् । किन्त्वस्माकं शास्त्रस्य 'साहित्यशास्त्रम्' इति नामधेयम् । अत एव अन्यान्यशास्त्राणां संमुखे एतस्य ईदृशी निरोजस्कता स्यादिति न सोढुमशक्यत शास्त्रार्थयुगे मानितया ।

तत एव ओजोऽवतारभूतेन शास्त्रार्थयुगेन ध्वन्यालोक-काव्यप्रकाश-चन्द्रालोक-साहित्यदर्पण-चित्रमीमांसा-कुवलयानन्दादयो ग्रन्था यथाक्रमं रङ्गस्थलेऽवतारिताः, यैः खण्डनमण्डनात्मको वादयुगीयोऽभिनयः सम्यकृतया निर्वाहितः । वादयुगस्य घोरमध्याह्ने तु—साक्षाद् गङ्गाधर इव श्रीमान् रसगङ्गाधर एव जन्म लेभे, येन सर्वस्मिन्नपि तस्मिन्युगे स्वस्याऽधृष्यता परितः साधु समघोष्यत । उक्तं हि मया—

> 'पुरा प्रविश्याऽत्र १ निजप्रसङ्गा- २
> दन्ये व्यजृम्भन्त बुधाः कदाचित् ।
> अद्याऽनया पण्डितराजशक्त्या
> स्वसाधि साहित्यमभेद्यदुर्गम् ॥'

अस्य फलमिदमभूत्—यथा शास्त्रार्थयुगे वास्तवतत्त्वविचारापेक्षयापि खण्डनमण्डनात्मकं 'क्षोदक्षेम'—पाण्डित्यमेव विदुषां ख्यातिकरमभूत्, अञ्जसा तत्त्वबोधनक्षमायाः सरलशब्दशय्यायाः स्थाने क्लिष्टाऽस्पष्टदीर्घफक्किकयैव वैदुष्यशक्तिरज्ञायत, तथैवालंकारशास्त्रे विचारणीयविषयाऽपेक्षयापि आनुषङ्गिकाः खण्डनमण्डनादिनीरन्ध्रिता अभिधालक्षणादिविचारा एव दीर्घाऽऽयाममविन्दन्त । सुदृढपण्डितानामपि मस्तिष्कं घूर्णयन्त्यो वृश्चिकायिताः पङ्क्तय एव साहित्यग्रन्थेष्वपि प्रतिष्ठामलभन्त । तर्कशास्त्रादिपरिष्कारेण ग्रन्थं तुन्दिलयन्त एव च साहित्याशयज्ञाः प्रासिध्यन् । अन्यथा तै रस-गुणालंकारादिविषयिणी का वा क्लिष्टसमस्या सरलीकृता ? पुराकालस्य तु परमेश्वरो विजानीयात् किन्त्वधुना तु परिणामः प्रत्यक्षमयं दृष्टो यद् वराकाः साहित्यशास्त्राध्यायिनोऽध्यापकाश्च परीक्ष्यग्रन्थानां जटिलपङ्क्तिगहने संचरन्तस्तत्तत्त्वमेव अन्यशास्त्रसाहाय्येन यथाकथंचिदासादयन्ति, तत्समन्वयद्वारा कवितायामतिशयप्राप्तेः का कथा ? ग्रन्थग्रन्थिबोधेनैव संनिधीयमाने परीक्षाकाले ततोधिकं समयं वा कतमस्य ब्रह्मणः सकाशादासादयेरन् ?

१ साहित्ये । २ स्व-स्व—शास्त्रीयविषयप्रसङ्गेन ।

रस-रीति-गुण-दोषालंकारादयः प्रकृतविषया गुणीभूताः, तत्प्रतिपादनार्थाः पङ्क्तय एव च प्रधानपाठ्याः समभवन्। यतो हि 'परीक्षक'नामधारिणः पण्डितपुंगवाः साहित्याध्यायिनां पङ्क्तिलापनपाटवमेव परीक्षन्ते, न प्रकृतविषयोपस्थितिम्, नापि च कवितानिर्माणचातुर्यम्। वाराणस्या जयपुरस्य वा साहित्याचार्यपरीक्षायाः साहित्यप्रश्नान् समीक्षन्तां श्रीमन्तः। तेषु 'काव्यस्य निर्माणे हेतुर्न तु हेतवः', 'परमाणवादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्', 'तद्वान् अपोहो वा शब्दार्थः', 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च', 'विशिष्टा एव पदार्था वाक्यार्थः न तु पदार्थानां वैशिष्ट्यम्', एवमादयः पङ्क्तय एव साहित्यपाटवपरिज्ञानाय पृच्छ्यन्ते। 'ग्रन्थस्य सर्वभागेभ्यः प्रश्नाः संकलनीयाः' इत्यधिकारिणां नियमानुरोधादलंकारादीनां लक्षणसमन्वयादयोऽपि पृच्छ्यन्त एव। किन्तु कृती स एव परीक्ष्यः परिगण्यते यो ग्रन्थग्रन्थिभेदनमुत्तरेत्। अपि नेदं सत्यम्? पृच्छ्यतामीश्वरसाक्ष्येण परीक्षकमहोदयस्य हृदयमेव। उच्यतामधुना, काव्यनिर्माणेन सह कियान्वाऽस्य साक्षात्संबन्धः?

काव्यप्रकाशादयः काव्यनिर्माणायैव नाधीयन्ते, अपि तु पाण्डित्यप्राप्तये इति तु न कदाचिद्वक्तुं शक्यते। स्वयं काव्यप्रकाशकारेणैव ग्रन्थमुपसंहृत्य प्रोक्तम्—'इति संपूर्णमिदं काव्यलक्षणम्' [ अर्थात् काव्यं लक्ष्यतेऽनेन इति प्रकृतस्य ग्रन्थस्य स्वरूपं बोधितम् ]

यन्मया पूर्वमावेदितं तत्संमुखमायातम्। दुर्गाणीव दुर्गमा अमी साहित्यग्रन्थाः स्वाभाविककविताबीजशालिभ्यो दूरतरा अभवन्। काठिन्यभयाद्धिनैव साहित्यशिक्षाम्, प्राचीनैः साधारणग्रन्थैर्वा, ते कवितां कर्तुं विवशा अभवन्। अधुनापि सफलतया कुर्वन्त्यपि कविताम्। ते 'सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते' इत्यादिकाव्यप्रकाशपङ्क्तिम्, 'तत्तत्पदलक्षणाज्ञानस्य तत्तत्पदशक्यतावच्छेदकप्रकारकलक्ष्यान्वयबोधत्वावच्छिन्नं प्रति हेतुतायाः' इत्यादिरसगङ्गाधरपङ्क्तिं वा जातु न योजयन्ति किन्तु रसमयीं कवितां तथा कुर्वन्ति यामाकर्ण्य तत्कालं द्रवीभवत्सहृदयहृदयं न केवलं मयैव, सहस्रैरन्यैरपि प्रत्यक्षमीक्षितम्। ये पुनः साहित्यग्रन्थानेतान्पठन्ति ते जन्मसिद्धसंस्कारवशात्, अन्यस्य कस्यचन शिक्षकस्य कृपया वा कवितां कुर्युर्नाम, किं तु ग्रन्थैरमीभिः कवितानिर्माणे आशानुकूलं न फलं निष्पद्यते। प्रत्युत 'नमः प्रामाण्यवादाय मत्कवित्वापहारिणे' इत्याभाणकवत् जटिलग्रन्थग्रन्थयः कवितानिर्माणेऽर्गला एव भवन्ति। ततश्च—नैसर्गिककवीनां कृते एतद्ग्रन्थानां नोपयोगः। एतद्ग्रन्थयोजकानां च कृते कविता न सुकरेति संपन्नः परिणामः!

### वर्तमानकालिकं 'परीक्षायुगम्'

शास्त्रार्थयुगेन वादपाण्डित्यं प्रचारितं

पि तेन युगेन पूर्णः प्रसादो दत्तः । अलंकारशास्त्रस्य ह्यावश्यका विषया रीतिगुणालंकारादयो वामनादिभिः सरलसुबोधेषु निबन्धेषु संदृब्धा एव पूर्वम् । परं वादयुगस्य चण्डिमा यथा यथा पण्डितेष्वजृम्भत तथा तथा साहित्यशास्त्रेपि 'क्षोदक्षेम'पूर्णा भाषा संमानं लेभे । यस्य हृदये भगवता कविताबीजमुत्पादितं तस्य कृते 'काव्ये के दोषास्त्याज्याः, गुणालंकारादयः के शोभासंपादनाय संनिवेश्याः, कथाख्यायिकादीनि गद्यकाव्यानि—दृश्य-श्रव्यादीन्यन्यानि च काव्यानि किंस्वरूपाणि, कथं वा तानि निर्मेयाणीति' सर्वोप्यावश्यको विषयो दण्डि-भामह-वामनादीनां ग्रन्थेषु निरूपित एव तावत् । न हि कवितां गुम्फयतोऽधिकारिणः कृते प्राचीनग्रन्थेषु कवितानिर्माणोपयुक्तः कश्चन विषयो न्यूनोऽभवत । किन्त्वस्माकं शास्त्रस्य 'साहित्यशास्त्रम्' इति नामधेयम् । अत एव अन्यान्यशास्त्राणां संमुखे एतस्य ईदृशी निरोजस्कता स्यादिति न सोढुमशक्यत शास्त्रार्थयुगे मानितया ।

तत एव ओजोऽवतारभूतेन शास्त्रार्थयुगेन ध्वन्यालोक-काव्यप्रकाश-चन्द्रालोक-साहित्यदर्पण- चित्रमीमांसा-कुवलयानन्दादयो ग्रन्था यथाक्रमं रङ्गस्थलेऽवतारिताः, यैः खण्डनमण्डनात्मको वादयुगीयोऽभिनयः सम्यकृतया निर्वाहितः । वादयुगस्य घोरमध्याह्ने तु—साक्षाद् गङ्गाधर इव श्रीमान् रसगङ्गाधर एव जन्म लेभे, येन सर्वस्मिन्नपि तस्मिन्युगे स्वस्याऽधृष्यता परितः साधु समघोष्यत । उक्तं हि मया—

'पुरा प्रविश्याऽत्र [1] निजप्रसङ्गा- [2]
दन्ये व्यजृम्भन्त बुधाः कदाचित् ।
अद्याऽनया पण्डितराजशक्त्या
स्वसाधि साहित्यमभेद्यदुर्गम् ॥'

अस्य फलमिदमभूत्—यथा शास्त्रार्थयुगे वास्तवतत्त्वविचारापेक्षयापि खण्डनमण्डनात्मकं 'क्षोदक्षेम'—पाण्डित्यमेव विदुषां ख्यातिकरमभूत्, अञ्जसा तत्त्वबोधनक्षमायाः सरलशब्दशय्यायाः स्थाने क्लिष्टाऽस्पष्टदीर्घफक्किकयैव वैदुष्यशक्तिरज्ञायत, तथैवालंकारशास्त्रे विचारणीयविषयाऽपेक्षयापि आनुषङ्गिकाः खण्डनमण्डनादिनीरन्ध्रिता अभिधालक्षणादिविचारा एव दीर्घाऽऽयाममविन्दन्त । सुदृढपण्डितानामपि मस्तिष्कं घूर्णयन्त्यो वृश्चिकायिताः पङ्क्तय एव साहित्यग्रन्थेष्वपि प्रतिष्ठामलभन्त । तर्कशास्त्रादिपरिष्कारेण ग्रन्थं तुन्दिलयन्त एव च साहित्याशयज्ञाः प्रासिध्यन् । अन्यथा तै रस-गुणालंकारादिविषयिणी का वा क्लिष्टसमस्या सरलीकृता ? पुराकालस्य तु परमेश्वरो विजानीयात् किन्त्वधुना तु परिणामः प्रत्यक्षमयं दृष्टो यद् वराकाः साहित्यशास्त्राध्यायिनोऽध्यापकाश्च परीक्ष्यग्रन्थानां जटिलपङ्क्तिगहने संचरन्तस्तत्तत्त्वमेव अन्यशास्त्रसाहाय्येन यथाकथंचिदासादयन्ति, तत्समन्वयद्वारा कवितायामतिशयप्राप्तेः का कथा ? ग्रन्थग्रन्थिबोधेनैव संनिधीयमाने परीक्षाकाले ततोधिकं समयं वा कतमस्य ब्रह्मणः सकाशादासादयेरन् ?

[1] साहित्ये । [2] स्व-स्व—शास्त्रीयविषयप्रसङ्गेन ।

रस-रीति-गुण-दोषालंकारादयः प्रकृतविषया गुणीभूताः, तत्प्रतिपादनार्थाः पङ्क्तय एव च प्रधानपाठ्याः समभवन्। यतो हि 'परीक्षक'नामधारिणः पण्डितपुंगवाः साहित्याध्यायिनां पङ्क्तिलापनपाटवमेव परीक्षन्ते, न प्रकृतविषयोपस्थितिम्, नापि च कवितानिर्माणचातुर्यम्। वाराणस्या जयपुरस्य वा साहित्याचार्यपरीक्षायाः साहित्यप्रश्नान् समीक्षन्तां श्रीमन्तः। तेषु 'काव्यस्य निर्माणे हेतुर्न तु हेतवः', 'परमाण्वादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्', 'तद्वान् अपोहो वा शब्दार्थः', 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च', 'विशिष्टा एव पदार्था वाक्यार्थः न तु पदार्थानां वैशिष्ट्यम्', एवमादयः पङ्क्तय एव साहित्यपाटवपरिज्ञानाय पृच्छ्यन्ते। 'ग्रन्थस्य सर्वभागेभ्यः प्रश्नाः संकलनीयाः' इत्यधिकारिणां नियमानुरोधादलंकारादीनां लक्षणसमन्वयादयोऽपि पृच्छ्यन्त एव। किन्तु कृती स एव परीक्ष्यः परिगण्यते यो ग्रन्थग्रन्थिभेदनमुत्तरेत्। अपि नेदं सत्यम्? पृच्छ्यतामीश्वरसाक्ष्येण परीक्षकमहोदयस्य हृदयमेव। उच्यतामधुना, काव्यनिर्माणेन सह कियान्वाऽस्य साक्षात्संबन्धः?

काव्यप्रकाशादयः काव्यनिर्माणायैव नाधीयन्ते, अपि तु पाण्डित्यप्राप्तये इति तु न कदाचिद्वक्तुं शक्यते। स्वयं काव्यप्रकाशकारेणैव ग्रन्थमुपसंहृत्य प्रोक्तम्—'इति संपूर्णमिदं काव्यलक्षणम्' [ अर्थात् काव्यं लक्ष्यतेऽनेन इति प्रकृतस्य ग्रन्थस्य स्वरूपं बोधितम् ]

यन्मया पूर्वमावेदितं तत्संमुखमायातम्। दुर्गाणीव दुर्गमा अमी साहित्यग्रन्थाः स्वाभाविककविताबीजशालिभ्यो दूरतरा अभवन्। काठिन्यभयाद्धिनैव साहित्यशिक्षाम्, प्राचीनैः साधारणग्रन्थैर्वा, ते कवितां कर्तुं विवशा अभवन्। अधुनापि सफलतया कुर्वन्त्यपि कविताम्। ते 'सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते' इत्यादिकाव्यप्रकाशपङ्क्तिम्, 'तत्तत्पदलक्षणाज्ञानस्य तत्तत्पदशक्यतावच्छेदकप्रकारकलद्यान्वयबोधत्वावच्छिन्नं प्रति हेतुतायाः' इत्यादिरसगङ्गाधरपङ्क्तिं वा जातु न योजयन्ति किन्तु रसमयीं कवितां तथा कुर्वन्ति यामाकर्ण्य तत्कालं द्रवीभवत्सहृदयहृदयं न केवलं मयैव, सहस्रैरन्यैरपि प्रत्यक्षमीक्षितम्। ये पुनः साहित्यग्रन्थानेतान्पठन्ति ते जन्मसिद्धसंस्कारवशात्, अन्यस्य कस्यचन शिक्षकस्य कृपया वा कवितां कुर्युर्नाम, किं तु ग्रन्थैरमीभिः कवितानिर्माणे आशानुकूलं न फलं निष्पद्यते। प्रत्युत 'नमः प्रामाण्यवादाय मत्कवित्वापहारिणे' इत्याभाणकवत् जटिलग्रन्थग्रन्थयः कवितानिर्माणेऽर्गला एव भवन्ति। ततश्च—नैसर्गिककवीनां कृते एतद्ग्रन्थानां नोपयोगः। एतद्ग्रन्थयोजकानां च कृते कविता न सुकरेति संपन्नः परिणामः!

## वर्तमानकालिकं 'परीक्षायुगम्'

शास्त्रार्थयुगेन वादपाण्डित्यं प्रचारितं

देशे। वर्तमानेनानेन परीक्षायुगेन तु किं प्रचारयितुमिष्यते इति न किञ्चिन्निश्चेतुं शक्यते। यतो हि ग्रन्थव्युत्पत्तिः, तत्प्रमेयलाभो वा विद्यार्थिनां जातो वा न वेति न भवत्यध्यापकानां समीक्षा। व्याख्यादिकम्, स्वलिखितप्रश्नोत्तरादिकं वा कण्ठस्थीकृत्य, यावल्लब्धान् गतवर्षीयान्परीक्षाप्रश्नान् सर्वतः समीकुर्वन्तो येनकेनापि प्रकारेण ते परीक्षामुत्तरेयुरित्येव तेषां चरमं लक्ष्यं भवति। जयपुरराज्यस्य यावत्संस्कृतपाठशालानाम् [यासु हि वाराणसेयपरीक्षाः प्रचलिता आसन्] निरीक्षकपदमधितिष्ठता मया यत्किञ्चिदस्मिन्विषयेऽनुभूतं तन्मया 'संस्कृतरत्नाकरस्य' द्वितीये वर्षे 'संस्कृतशिक्षा च परीक्षायुगं च' इति शीर्षकनिबन्धे प्रकटितम्, तत एव द्रष्टुं शक्यते।

समयोपयोगिनी साहित्यशिक्षा चेत्काम्यते तर्हि पण्डितमहाभागैः स्वयं परिश्रमः सोढव्यः स्यात्। समयोपयुक्ता नवीनग्रन्थाः सज्जीकरणीयाः स्युः। 'माभूदस्माकं पाण्डित्यापकर्षः' इति चेत्प्राचीनानां शास्त्रार्थग्रन्थानां मोहो न सर्वथा शिथिलीकर्तुं शक्यते तर्हि तैः सह कवितानिर्माणोपयुक्ताः साहित्यसिद्धान्तप्रतिपादकाः सरलरीतिनिबद्धा अन्ये ग्रन्थाः संग्राह्याः। अलंकारशास्त्रस्य, आरम्भतोऽद्ययावत्सर्वापि प्रगतिर्मार्मिकदृष्ट्या समीक्षिता ते जानीयुः—उत्तरोत्तरभाविभिः साहित्यनिबन्धकारैः स्वसमये यो य उपयोगी विचारो निर्धारितः स हि संगृहीतः साहित्यशास्त्रे।

### समये समये साहित्ये परिष्कारः

स्थूलतयैव विचार्यताम्—भामहोद्भटभट्टादीनां समये अलंकारा एव काव्यसर्वस्वभूता अभवन् [अत एवास्य शास्त्रस्य 'अलंकार'शास्त्रमिति व्यपदेशः]। वामनादीनां समये ध्वन्यमानस्यार्थस्य किञ्चित्प्रतिभासोऽभूत्, परं सोऽप्यलंकाराणामुपस्करणायैवाऽभूत्। तत्रभवद्भिरानन्दवर्द्धनाचार्यैस्तु वाच्य-लक्ष्यादिभ्यो विलक्षणो ध्वन्यमानोऽर्थो महता शास्त्रार्थसंघर्षेण न केवलं साधित एव, अपि तु स एव काव्ये प्रधानम् (आत्मा) इति स्थिरीकृतम्। श्रीमता मम्मटभट्टेन तु 'व्यक्तिविवेक'कारादीनां 'व्यञ्जना' खण्डनपराणि मतानि समूलं निरस्य ध्वनिमार्गो निष्कण्टकीकृतः। गुणा अलंकाराश्च पृथक् पृथक् स्वीकृताः। दश गुणान्निरस्य त्रय एव गुणाः साधिताः। अलंकारेषु बहवो नवीनतया वर्द्धिताः, केषांचिच्च भेदप्रभेदा उपबृंहिताः। तत्तद्रसानुकूलरचनार्थं तास्ता वृत्तयः; अक्षरबन्धाश्च पृथक् पृथङ् नियमिताः। माधुर्यादयो गुणा रसधर्मा असाध्यन्त। पीयूषवर्षस्य (चन्द्रालोककारस्य) दृष्टौ काव्ये चमत्काराय 'शोभा'दीनि लक्षणान्यपि(निर्दोषा लक्षणवती०)प्रतिभातानि। अलंकारेष्वपि काचिद्वृद्धिरभूत्। साहित्यदर्पणकारसमये पुनरलंकारेषु काचिद्वृद्धिरासीत्।

मम्मटसमये रसानुकूलरचनार्थं मधुरपरुषादयो वर्णाः परिगणिता अवश्यमभूवन् परं तस्य निर्वाहो यथाशक्यमेवाऽभूत्।

शृङ्गारादिष्वपि [1] झयूघटितसंयोगपरह्रस्वादेः टवर्गादेश्च प्रयोगः प्राचरदेव । अत एव 'शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्' इत्यादीनि पद्यानि शृङ्गारे स्थानमलभन्त । एतत्सर्वमनुभूयैव प्राकृतभाषापक्षपातिनः प्राकृताऽपेक्षया संस्कृतस्य कर्कश[2]तामसाधयन् । किन्तु दर्पणकारसमये–वर्णसंघटनायां स्फीतिमा प्रारभ्यत । शृङ्गारादिषु त्याज्यवर्णानां परिहाणे दृढमवधानमदीयत । अत एव दर्पणे उदाहृतानि पद्यानि काव्यप्रकाशोदाहरणापेक्षया मधुरवर्णघटितान्यालोक्येरन् । अप्पयदीक्षितसमये तु अलंकारेषु भूयसी वृद्धिरभूत् । अलंकाराणां स्वरूपनिर्वचनादिकं समीक्षापूर्वकं सुस्थिरमक्रियत ।

## वर्णसंघटना

प्रतिभावतां मूर्द्धन्यस्य जगन्नाथपण्डितराजस्य तु समये–संस्कृतसाहित्यस्य गौरवमेवान्यादृशमभूत् । एतस्मिन् हि समये संस्कृतसाहित्यात्सुन्दरसुन्दरमंशमादाय समृद्धयन्ती सेयं व्रजभाषा (हिन्दी) पूर्णमुत्कर्षमविन्दत् । सूरदास-तुलसीदासाभ्यां व्रजभाषासाहित्यस्य यद् गौरवमाविष्कृतम्, 'सतसई' निर्मात्रा विहारीलालेन तद्भूयस्तरां संवर्द्धितम् । अनेन हि दोहासदृशे लघुकाये छन्दसि वर्ण्यार्थविस्तारः, व्यङ्ग्यचमत्कारः, तत्तदलंकारझंकारः, वर्णगुम्फपरिष्कारश्च स दर्शितो यमास्वाद्य राजानमारभ्य रङ्कपर्यन्तः सर्वोपि सहृदयसमाजोऽस्य वशीभूतोऽभवत् । व्रजभाषायामपभ्रंशद्वारा वर्णानां लघुगुरूकरणादिविषये वहुतरं स्वातन्त्र्यमासीद्येन हि रचनायां विहारिणा महत्सौकर्यमुपलब्धम् । विहारिणः प्रायः प्रत्येकमेव पद्यमस्योदाहरणमिति केवलमेकेनैवोदाहरणेन परीक्षेरन्प्रामाणिकाः ।

आह विहारी–

'दीठि न परत समानद्युति कनक, कनकसे गात ।
भूषण कर करकस लगत परस पिछाने जात' ॥
'दृशमुपैति कनकं न वपुर्गम्य कनकसमकान्ति ।
भूषणानि करकर्कशस्पर्शतया प्रतिभान्ति ॥'

[ 'साहित्यवैभवे' विहारिणोनुवादः ]

अत्र हि दृष्टि,द्युति,गात्र,कर्कश, स्पर्शशब्दा यदि साक्षात्संस्कृतरूपेणैव प्रयुज्येरंस्तर्हि माधुर्यमवश्यं हीयेतेति को वा मार्मिको न मन्येत । अस्तु एवं किल हिन्दीसाहित्यस्य, तेन सहैव च कवेर्विहारिलालस्यापि महती प्रतिष्ठा सर्वस्मिन्नपि सहृदयसमाजे देशमात्रव्याप्ताऽभूत्तस्मिन् समये । जयपुरराजधान्याम्, देहलीनगरे चेत्युत्तरभारते एव स्वकविताप्रसारं कुर्वन् पण्डितराजसदृशः सर्वतोमुखः कविर्व्रजभाषायास्तादृशं प्र-

१–झभघढध, जबगडद, खफछठथ, चटतकप, एतेषां परस्परं संयोगः, उ'स्था'य इत्यादिः ।

२–'परुसा सक्कअबन्धा पाउअबन्धो वि होइ सुउमारो ।
पुरुसमहिलाणँ जेत्तिअमिहंतरं तेत्तिअमिमाणम् ॥'
'ललिए महुरक्खरए जुवईजणवल्लहे ससिंगारे ।
संते पाइअकव्वे को सक्कइ सक्कअ पढिउम् ॥'

भावं नाऽवेदीदिति को वा मन्येत ? विशेषतः किल विहारिमहाकवेर्भागिनेयः कुलपतिमिश्रः श्रीमतः पण्डितराजस्य साहित्ये शिष्य १ एवासीत्। अत एव पूर्वं यथा प्राकृतस्य सहयोगेन संस्कृतपदरचनायामधिकावधानं प्रारभ्यत तथा पण्डितराजस्य समये हिन्दीसाहित्यस्यापि भूयान्प्रभावः संस्कृत–पदरचनायामपतदिति वक्तव्यं भवेत्। यदा हि व्रजभाषाकवयः शृङ्गार–करुणादिरसेषु तदनुकूलां वर्णसंघटनां यथावन्निर्वाहयन्ति, तद्द्वारा च रसपरिपोषं परितः प्रसारयन्ति तदा देवभाषायामेवाऽयं नियमः शिथिलः स्यात ? (केवलं साहित्यपुस्तकेष्वेव निबद्धः स्यात्) इति नाभवत्सह्यं मानिनः पण्डितराजस्य।

अत एव संस्कृतसाहित्यस्य पुरातनं सर्वमपि विषयजातं विमर्शनिकषेण प्रस्फुटं परिष्कुर्वता पण्डितराजेन रसगङ्गाधरे पदरचनाविषये बहवो नियमा दृढीकृताः। शृङ्गारादिषु संयुक्तवर्णविषयका बहवश्च नवीना योजिताः (टवर्गवर्जितानां वर्गाणां प्रथमतृतीयैः शर्भिरन्तस्थैश्च घटिता, ० इत्यादि। नवीन सं० पृ ७९)। पण्डितराजो हि प्रतिभावतां चूडामणिरासीत्। अत एव पदरचनाविषये संस्कृतसाहित्ये तादृशो मार्मिकविचारः प्रवर्तितो यस्याऽग्रे व्रजभाषापक्षपोषका अपि (ये हि मधुररचनायां संस्कृतात् स्वस्य गौरवमघोषयन्) निष्प्रभा अभवन्। वर्णानां स्वानन्तर्यविषये (विततरस्तरुरेष भाति० इत्यादि, पृ० ८२) तादृशो मार्मिकविचारः प्रास्तूयत यो हि नासीत्कस्याश्चिदपि भाषायाः साहित्ये।

न केवलं नियमनिर्माणमेव, प्रत्युत तेषामनुवर्तनमपि पण्डितराजेन प्रत्यक्षतो दर्शितम्। वाग्देवताऽवतारभूता अपि स्वग्रन्थेषु मधुररचनायां केवलं नियममात्रमलिखन्, स्वयं तादृशोदाहरणनिर्माणस्य का कथा, परकीयोदाहरणान्यपि मधुरसंघटनायामविकलमनुकूलानि नालभन्त। किन्तु पण्डितराजेन मधुरसंघटनाया उदाहरणानि तादृशान्यदीयन्त येषु प्रतिपक्षी न कथंचिदपि दोषमाविष्कर्तुं प्रभवेत्। यथा हि–

'लोलालकावलिवलन्नयनारविन्द–
लीलावशंवदितलोकविलोचनायाः।
सायाह्नि प्रणयिनो भवनं व्रजन्त्या–
श्चेतो न कस्य हरते गतिरङ्गनायाः॥'

इत्यादि (पृ०८१)

## अनुप्रासः (पदान्तानुप्रासः)

अनुप्रास-यमकादयः शब्दालंकारा अनुशिष्टा एव संस्कृतसाहित्यकारैः। प्रयुक्ताश्चापि तैस्तैः संस्कृतकविभिरिति को वा न जानाति। किन्तु जगन्नाथपण्डितराजस्य समयपर्यन्तं व्रजभाषाकविभिः प्रयुक्तः पदान्तानुप्रासः स्थानविशेषमहिम्ना तथा माधुर्यमलभत येन समग्रस्यापि तस्य पद्यस्य शोभैवाऽन्यादृशी समभवत्। विशेषतो 'घनाक्षरी' छन्दस्सु। यथा–'तुलसी विलोकि अकुलानि जातुधानी कहैं, चित्रहू के कपिसों

१–'हिन्दीरसगङ्गाधरस्य' भूमिका द्रष्टव्या। विस्तरभयान्नात्रोद्ध्रियते।

निसाचर न लागि हैं'। 'वीती औधि आवनकी लाल मनभावनकी डग भई बाँवनकी सावनकी रतियाँ' (सेनापति)। विहारिणो दोहाछन्दस्सु यथा—

१ 'टटकी धोई धोवती चटकीली मुखजोति।
लसति रसोई के बगर जगर मगर दुति होति॥'
'नभ लाली चाली निसा चटकाली धुनि कीन।
रति पाली आली अनत आये बनमाली न॥'

परस्ताद्भाविनां पद्माकरादीनां तु सुप्रसिद्धा एव पदान्तानुप्रासाः। यथा—'कढिगो अबीर पै अहीर को कढै नहीं'। 'इन्दीवरनैनी तू कलिन्दीतीर जैयो ना'। इत्यादि। 'बाने परतापके सुहाने जग जाने आज, जयके निसाने फहराने माधवेसके'। 'स्यामसुखसाधे राधे तेरे हैं अगाधे रूप जाकें मुख आगें लागै चन्द्रमा मसालची।' [अस्मद्वंशजाः सरस्वत्युपनामकाः श्रीद्वारकानाथकवयः]।

अयं किलाऽन्तानुप्रासः प्राचीनसंस्कृतकविभिर्नोपात्त इति न। बहुत्रोपात्तः, सफलतया चोपात्तः। किन्तु पण्डितराजपद्येषु पदान्तानुप्रासस्यापूर्वैव च्छटा, विशेषतश्च मालभारिणीछन्दस्सु। सेयं व्रजभाषाकवीनां तामिमां सरणिमाश्रित्य प्ररूढापि पण्डितराजस्य प्रतिभापाटवेन ततोऽप्यतिशयं लेभे इति मार्मिका एव परिचिनुयुः। यथा—

'नितरां हितयाऽद्य निद्रया मे
बत यामे चरमे निवेदितायाः।
सुदृशो वचनं शृणोमि याव-
न्मयि तावत्प्रचुकोप वारिवाहः॥' (पृ० १०६)
'प्रणिपत्य विधे भवन्तमद्धा
विनिबद्धाञ्जलिरेकमेव याचे।
जनुरस्तु कुले कृषीवलाना-
मपि गोविन्दपदारविन्दभाजाम्॥'' (पृ० ६८६)
कुसुमानि शरा मृणालजाला-
न्यपि कालायसकर्कशान्यभूवन्।
सुदृशो दहनायते स्म राका
भवनाकाशमथाऽभवत्पयोधिः॥' (पृ० १७१)

शिखरिण्यां सोयमनुप्रासः श्रीशंकराचार्य—भवभूतिप्रभृतिभिरपि प्रायुज्यतैव। यथा-

'तवोत्सङ्गे गङ्गे यदि पतति कायस्तनुभृतां
तदा मातः शातक्रतवपदलाभोऽप्यतिलघुः॥'
(शंकरा०)
'तथाऽप्येषा तन्वी रमयति च संतापयति च'।
(भवभूतिः)।

किन्तु पण्डितराजस्य शिखरिणीष्वपूर्वैवाऽनुप्रासच्छटा। यथा-

'यदन्तः खेलन्तो बहुलतरसंतोषभरिता
न काका नाकाधीश्वरनगरसाकाङ्क्षमनसः।'
'ममान्तःसंतापं त्रिविधमपि पापं च हरताम्।'
'नमस्यामो दामोदरगृहिणि दारिद्र्यदलिताः।'
इत्यादि।

१—'रुचिरा मुखरुचिरालसति विशदा शाटी भाति।
महाकान्तिराभाऽऽवहा महानसे प्रतिभाति॥'
'खमरुणमालीना निशा चटकालीध्वनिरेति।
रतिपाली परया समं वनमाली न समेति॥' (साहित्यवैभवे)

सोयं परिपाको व्रजभाषाकवीनामपि पद्यान्तानुप्रासान्बहुधा विभावयता श्रीमता पण्डितराजेन परिनिष्ठापित इति मार्मिका जानीयुः। अश्वधाटी१च्छन्दसोऽनुप्रासं बहुधा भाषाकवयः अमृतध्वनि२च्छन्दस्सु घनाक्षरी-(कवित्त)चतुर्थचरणेषु चोपजीव्य शनैः शनैस्तस्मिन् भूयसीमुन्नतिमदर्शयन्। किन्तु स्थाने स्थाने स एव परिपाकः प्रदर्शितः पण्डितराजेन। यथा—

'वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत्'॥
(पृ० २८९)

मार्मिकाः पण्डितराजकवितां सूक्ष्मेक्षिकया विविच्य निश्चिनुयुर्यत्तस्य पदरचनायां कश्चन चमत्कारकोऽनुप्रासः अन्यो वा कश्चन शब्दकृतो विशेषो वाऽवश्यं प्राप्येत। तच्छून्यं प्रायो नैकमपि पद्यं भवेत्। व्यङ्ग्यादिकृतचमत्कारसत्तायामपि शब्दकृतः कश्चिदतिशयः कवितायामवश्यं स्यात्। यतो हि तद्द्वारैव विनेयानां प्रथममाकर्षणम्। शब्द एव प्रतिभायाः प्रधानत आधारभूतः। अत एव हि काव्यलक्षणेऽपि 'शब्दः काव्यम्' इत्यस्योपरि पण्डितराजस्य भूयानाग्रहः। ये त्वालोचकंमन्याः शब्दकृतातिशयेन कञ्चित्कविं 'शब्दकवि' नाम्ना व्यपदेष्टुं धाष्टर्यमाचरन्ति ते स्खलन्ति। अर्थचातुर्येण सह शब्दकृतोऽतिशयोपि यस्य कवेः, स एव प्रशंसनीयः।

## सामयिकः प्रभावः

लोकरुचिमनुरुन्धन्तः साहित्यकाराः समये समये लोकप्ररूढां विचारशैलीमपि बहुधाऽन्ववर्तिषत। अत एव पण्डितराजस्य विचारशैली तत्सामयिकैरन्यभाषासेविभिः सह भूयस्तरां संवदते। यथा—

'कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याऽऽज्ञया।
आस्ये पूर्णशशाङ्कता नयनयोस्ताद्रूप्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः॥
(पृ० ३२१)

इति वयःसन्धिः—

'छुटी न सिसुताकी झलक झलक्यो जोबन अङ्ग।
दीपति देह दुहून मिलि दिपत ताफ़तारङ्ग॥'

---

१—'किं गाढरागपरिषङ्गादनारतमनङ्गाकुलोऽभिरमसे
शृङ्गारवीथिनवभृङ्गायितो रतितरङ्गान्तरापतसि किम्।
गङ्गामवाप्य भृशमङ्गान्युदस्य हृदि रङ्गान्तराहिततमं
त्वं गाय भूरिभव भङ्गाय तोषिततुरङ्गाननाङ्किकमलम्॥' (साहित्यवैभवे मम)

'भास्वत्कुलधरधरणिपतिमण्डन मानमहीप।
जय जयपुरपालनचतुर उद्यद्दिनमणिरूप॥
उद्यद्दिनमनुयुध्यद्रिपुदलबुध्यद्दलभर।
तिर्यग्भ्रुकुटिविनिर्यद्दिशिखविजीर्यद्रिपुहर॥
आजद्भिभवविराजज्जयपुरराजद्युतिकर।
शश्वद्गुचिरविवस्वद्गुचिकरभास्वत्कुलधर॥' (जयपुरवैभवे)

'अपने अँगके जानिकै जोबन-नृपति प्रबीन ।
स्तनमननैननितम्बको बडो इजाफा कीन ॥'
'नवनागरितन-मुलक लहि जोबन आमिल जोर ।
घटि बढितैं बढि घटि रकम करी औरकी १और ॥

इत्यादीनि विहारिपद्यानि स्मारयति ।

'श्यामं सितं च सुदृशो न दृशोः स्वरूपं
किं तु स्फुटं गरलमेतदथाऽमृतं च ।
नो चेत्कथं निपतनादनयोस्तदैव
मोहं मुदं च नितरां दधते युवानः ॥'

(पृ० ३६५) इति पद्यम्

'अमी हलाहलमदभरे स्वेत स्याम रतनार ।
जियत मरत झुकि झुकि परत जिहिं चितवत इकबार ॥'

इति प्राचीनतमं भाषापद्यमुपजीवति ।

'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥'

इति पद्यम्—

'२छिप्यो छबीलो मुँह लसै नीले आँचर चीर ।
मनों कलानिधि झलमलै कालिन्दी के नीर ॥'

इति विहारिपद्येनाऽविकलं संवदते । समसामयिकयोरनयोः केन क उपजीवित इत्यत्र तु गवेषकमहोदया एव हस्तलाघवं दर्शयेयुः ।

स्वसमये निरूढा नानाविधविलासा अपि कविभिरावर्णिताः । मोगलराजधान्या विलासिचेष्टा पण्डितराजाचारैरेव प्रत्यक्षीक्रियताम्—

'कुतश्चिदागच्छन्त्याः पथि तदीयरूपयौवनगृहीतमानसैर्युवभिरनुगम्यमानायाः कस्याश्चिद्भवनप्रवेशसमये निजसेवासार्थक्यविज्ञानाय गमनाज्ञापनरूपलाभलालसेषु तेषु परमपरिश्रमसंजातकरुणाया गमनाज्ञादाननिवेदकस्य विलोचनाम्बुजमालापरिक्षेपस्याऽनुभावस्य वर्णनादभिव्यज्यमाना रतिर्बहुवचनेन बहुविषया गम्यते ।" तथा हि पद्यम्—

'भवनं करुणावती विशन्ती
गमनाज्ञालवलाभलालसेषु ।
तरुणेषु विलोचनाब्जमाला-
मथ बाला पथि पातयांबभूव ॥'

गृहे कपोतमिथुनानां पालनं तत्सामयिकानां मोगलविलासिनां विनोदेषु पर्यगण्यत, यं हि शिष्टाचार इति कृत्वा तत्संप्रदायश्रद्धालवः साम्प्रतमपि निर्वाहयन्त्येव । अस्तु, प्रोक्तं पण्डितराजेन—

१— छुटी न सिसुताकी० इत्यादीनां त्रयाणां विहारिपद्यानामिमानि प्रतिपद्यानि 'साहित्यवैभवे'—
'गता न शिशुताद्युतिरितो यौवनमङ्गमुपैति ।
द्विविधरङ्गकौशेयमिव तनुराभ्यां रुचिमेति ॥'
'निजाऽङ्गानि मत्वाऽभिनवयौवननृपतिवरेण ।
स्तननितम्बदृक्चेतसां रचितोन्नतिरचिरेण ॥'
नवलवनाततुजनपदे यौवनसामन्तेन ।
कृतं वस्तु लघु गुरुतरं, गुरु लघु कृतं बलेन ॥'
२-'राजति नीलपटान्तरितमेतन्मुखमवधेहि ।
ध्रुवं कलानिधिरुल्लसति कालिन्दीसलिले हि ॥'

'निरुध्य यान्तीं तरसा कपोतीं
कूजत्कपोतस्य पुरो दधाने ।
मयि स्मिताद्रं वदनारविन्दं
सा मन्दंमन्दं नमयांबभूव ॥'

## साहित्यशिक्षायां सम्प्रति नवीना विषयाः समावेश्याः

पूर्वोक्तरूपेण सामयिकान्विषयान् समावेश्यावयावत् संवर्द्धितं च परिमार्जितं च साहित्यशास्त्रमिदं प्राक्तनैः। 'यत्पूर्वं जातं तदेव साधु' इति तुन्दपरिमृजता नाऽस्मिन् श्रेयसे । अन्यैर्न मिश्रितव्यम्, समयानुगमनं च धर्मभ्रंशकरम्, एवंविधविचाराः किल विनाशायैवाऽस्मिन्। आदान-प्रदानाभ्यामेव हि साहित्यस्य वृद्धिर्जाता, जायते च । यस्याः किल भाषायाः साहित्य(अलंकार)-शास्त्रं समयमनुरुणद्धि, स्वस्य प्रगतिं च न निरुणद्धि, तस्यामेव भाषायां लोकरुचिसंग्राहकाणि काव्यादीनि जन्म लभन्ते । काव्यादिनिबन्धैरेव च भाषायाः प्रगतिः समृद्धिशालिता चोज्जृम्भते ।

अत एव सांप्रतमपि साहित्ये रूमयोपयुक्ता विषयाः संग्राह्याः स्युः—

१—विमर्श-(आलोचना)विषयः साहित्ये भूयस्तरां संवर्द्धनीयः। आलोचनां विना हि साहित्याध्यायिनां बुद्धिर्न परिमार्जिता भवति । विमर्शविषयकाश्च रसगङ्गाधरसदृशा एव विशिष्टा ग्रन्थाः। किन्तु तेषां शैलीकाठिन्यादविकलं प्रचारो दुःसंभवः। अत एव तेषां सर्वं विषयमादाय नवीनविधया निर्मिताः सरलग्रन्थाः पाठ्यकोटौ निवेशनीयाः ।

साहित्यस्यान्यान्येऽपि विषया रसगङ्गाधरे एव विशिष्य वर्णिताः । 'रसस्य' स्वरूपमत्रैव सम्यक् परिचेतुं शक्यम् । रसविषयका एकादश संप्रदाया अत्रैव स्फुटं प्राप्येरन्। हर्षादिभावानां लक्षणोदाहरणान्यत्रैव विशदीकृतानि । लक्षणायाः स्वरूपं विशदीकृत्य, अलंकारेषु तथा मार्मिकी आलोचना, याऽस्माकं साहित्यस्य जगति गौरवगर्वमामास्थापयितुमलम् । मा भूद्विस्तर इति एतद्विषये विशेषदर्शनार्थम्—'सरला'टीकया सह 'निर्णय-सागरे' मुद्रितस्य रसगङ्गाधरस्य भूमिका द्रष्टव्या ।

नवीनग्रन्थनिर्मातारो नाधुना संभवेयुरिति तु भ्रम एव । आवश्यकता हि सर्वेषां जन्मदात्री । यं कंचिदुपयोगिनमपि निबन्धमादाय प्रचारार्थं प्रसिद्धपण्डितानां सविधमुपसृप्यते तत्रेदमेव श्रूयते—'काश्यादिप्रचारकसंस्थासु प्राचीनपाठ्यक्रमं विहाय नवीनस्य न समादरः।' किमिदम्? आलोचकानामाक्षेपाऽवसरो भवति यत् "अवच्छेदकताछिन्नबुद्धिसाराः पण्डितकर्णधारास्तु नवीनरचनायामीश्वरगृहादेव विवशाः । स्वस्य संमुखे परस्योत्कर्षं तु 'नीति'नामधारिणी निभृता शक्तिः (यां हि दुष्टाः संकीर्णतेति व्यपदिशन्ति) न सहते ।" अत एव संप्रति चक्षुषी उन्मीलनीये स्याताम् ।

२—लोकानामनुरञ्जनपूर्वकं स्वोद्देश्यप्रचाराय पूर्वं नाटकादीनां समावेशोऽभूत् । इदानीमपि लोकरुचिमनुरुध्य 'खण्डकथा'-

('कहानी', 'गल्प')'उपन्यासा'दीनां पाठ्य-विनोदादिषु कुतो नोपयोगः स्यात्? अम्बिकादत्तव्यासमहाभागैः 'गद्यकाव्यमीमांसायाम्' कतिपयवर्षेभ्यः पूर्वमेवाऽस्योपरि दृष्टिराकृष्टाऽप्यभूत्। संस्कृते प्रविष्टमात्रस्य, संस्कृतनाटकादिना विनोदयोग्यता यावन्न स्यात्तावत्संस्कृतसाहित्ये रुचिजननार्थं समयोपयोगि कथासाहित्यमावश्यकमेव शिक्षायै।

३—'निबन्ध'विद्या पुरा सूत्ररूपेण कामं प्रचरिता स्यात्, किन्तु सामयिकशिक्षापद्धतौ तस्याः समुचितः समावेशो नवीनपुस्तकोद्भावनादिना कर्तव्यः स्यात्।

४—साहित्यग्रन्थैः सह 'कवितानिर्माणस्या'पि शिक्षा प्रायोगिकरूपेण विशिष्य नियन्तव्या। सांप्रतं हि गौणरूपेण साऽध्यापकैः प्रचारिता। अमरस्य 'काव्यकल्पलता'वृत्तिमन्तरा समयानुरोधीन्यन्यान्यपि पुस्तकानि निर्मातव्यानि।

५—तुलनात्मकसाहित्यस्य सांप्रतं भूयानुपयोगः समादरश्च। प्राचीनसमये प्राकृतेन सह समभूत्संप्रयोगः संस्कृतस्य। अधुनापि राष्ट्रभाषादिसाहित्येनाऽस्मत्साहित्यस्य बहुषु विषयेषु संप्रयोगः प्रचारणीयः स्यात्। साहित्यान्तरसमादृताः प्रकारा अप्यादरणीयाः स्युः।

६—पण्डितपुंगवानां क्रूरा दृष्टिर्निपतेत किन्तु वक्तव्यमेव भवेत। संगीतशास्त्रं यद्देकमत्युपयोगि, भूमण्डलेऽस्माकं शिरःसमुन्नामकं चाऽऽसीत्तदस्माभिरनवधानादेव हस्ताद् हारितम्। इदं तदार्षं विज्ञानं यद्धि ब्रह्मणः प्रसूतम्। नारद-भरत-हनूमदादयो यस्य प्रवर्तकाः, महच्च गौरवं यद्धिदामभूत्। इदं हि यथा लोकानामावर्जकं तथा परमपदप्राप्तयेऽपि प्रशस्तम्। आसीदिदं शास्त्रविदामादरणीयं पूर्वम्। किन्तु 'अवच्छेदकतायुगे' आच्छिन्नमिदं नो हस्तात्। संप्रति पुनरस्य संस्कृतेन सह संबन्धो योज्यः स्यात्। इदानीं देशेऽस्योपरि शिक्षितानामवधानमाकृष्टम्। स्थाने स्थाने शिक्षाविभागेनाऽस्याऽपि समावेशः कृतोऽस्ति। संस्कृतज्ञैरपि तदिदमस्मिन् समये न विस्मर्तव्यम्। वैद्यकं ज्यौतिषं च यथाव्यावहारिकं तथेदमपि बहोः कालात्। प्रत्युत—'सद्यः फलति गान्धर्वी' इति तावत्ख्यातिः।

७—इतिहास-भूगोलादिविषये वयं पुराणान्येव निर्दिश्य कृतिनो भवामः। किन्त्वधुना समयानुसारमेतद्विषयकं साहित्यं प्रामाणिकरूपेणाऽस्माभिः संकलनीयं स्यात्। पौराणिकसमयमारभ्याऽद्यावधिजातमितिवृत्तं तु नवीनतयाऽस्माभिरेवोपबृंहणीयं स्यात्। अन्यथा वैदेशिका अन्ये चास्माकं प्रतीपा यथाऽस्माकमितिहासं वैरूप्येण प्रचारयेयुस्स एव लोके प्रचरितः स्यात्। केवलं वागाडम्बरेण तस्य प्रतिरोधो न संप्रति सुकरः। एवमादयो विषया नवीनतया संग्राह्याः स्युः।

भट्टश्रीमथुरानाथशास्त्री

—❋❋❋❋—

## ❀ जागर्तिः ❀

( प्रणेता-शाब्दिक-उत्सवलालपाण्डेयः साहित्यतीर्थः, स्व खोडन )

प्रावल्यं कलि-भूपतेस्समुदितं, दुष्टास्त्रियः सँव्वृताः
दृश्यन्ते, परितोऽद्य धर्म्म-विपिनं दंदह्यते नास्तिकैः ।
संसारो नव एव भाति सततं, वार्त्ताऽपि शास्त्रस्य नो,
एतस्मि समयेऽपि कौतुकमिदं "वीराः कथं शेरते" ॥१॥

रे रे हिन्दव एष वीर-समयो जीवातवे संस्कृते-
र्नो चेद् धर्म्म-जिघृक्षया प्रतिपलञ्जागर्त्यसौ वै कलिः ।
सर्व्वस्वे परिहापिते गदत किं ? प्राणैर्नु साध्यं भुवि
गीतोक्तिं परिभाव्य धर्म्म-समरे "वीराः कथं शेरते" ॥२॥

हिन्दूजाति-कृते सुधारक-बकैस्संशोध्यतेऽहर्निशं-
न्नाना-नूतन-धर्म-कर्म्म-निचयो वेदादि-निन्दापरः ।
वैचित्र्यं किल कालिकं हि निरतं हिन्दुत्व-रक्षा-व्रताः
पीत्वा मोहमयीं प्रमाद-मदिरां "वीराः कथं शेरते" ॥३॥

भारत्याः परिवर्तनं बत कृतं, सम्प्रार्थ्यते नूतनैः
काश्यां पाठन-पद्धतिं स्मृति-पथं ह्यापादितुं यत्यते ।
या पूर्व्वं विबुधैस्सुलालित-पदा सञ्जीविनी नः कृते
ग्रस्तान्ताव्विँपदा निरीक्ष्य सुतरां "वीराः कथं शेरते" ॥४॥

गान्धी-नेहरु-पन्त-बोस-दनुजैः कांग्रेसनेतृ-ब्रुवै-
र्मुन्सी-मालविया-पटेल--बटुभिस्संवर्द्धितो यत्नतः ।
एषोऽधर्म्म-तरुर्मनाकूस्थिति-परः सञ्जात-नून्नाङ्कुरो
दृष्ट्वा पुष्प-फलान्वितन्तमपि हा "वीराः कथं शेरते" ॥५॥

---

## ❀ कीदृशी शिक्षापद्धतिरिदानीमपेक्षिता ❀

(लेखकः — श्रीमान् विद्याधरः शास्त्री एम० ए० महोदयः, बीकानेर)

शिक्षा द्विविधा । व्यावहारिकी पारमार्थिकी च । तत्र प्राचीने भारते तु दृश्यते द्वयोरेव प्रणाल्योः पूर्णः प्रचारः । मध्यमे काले किन्तु यथा यथा विदेशीयानां प्राधान्यं संजातं, यथा यथा च संस्कृतभाषायाः शासनकार्येभ्यो बहिष्कारः प्रवृद्धस्तथातथा व्या-

सं० र० शिक्षाङ्कः



मनस्वी सेठ रामगोपालजी मोहता बीकानेर



P. P. E. Press, Jaipur.




मोहता-धर्मार्थ औषधालयः, छात्रावासश्च ( बीकानेर )
माननीयश्रीमदनमोहनमालवीयमहोदयस्य निरीक्षणावसरे गृहीतं चित्रम्

°कार्यकलापे विनेति वक्तव्यम्



# बीकानेरस्थश्रीमोहतायुर्वैदिकसंस्थायाः संक्षिप्तपरिचयः ।

( ले० पं० शंकरदत्तशर्मा आयुर्वेदाचार्यः, बीकानेर )

मोहता-परिवारे श्रीमान् स्वर्गीयश्रेष्ठी मोतीलालमहोदयो विचारशीलः परोपकारपरायणोऽतिशयदानी चाभवत । तस्य जनसेवाकार्यकलापैः सह चिकित्साकार्येऽपि महती रुचिरासीत् । तत्कालिकप्रख्यातचिकित्सकेषु स सादरं गण्यते स्म । अद्यावधि जनता तस्यारिष्टनाडीज्ञानयोः प्रशंसां करोति । अयं महान् खेदस्य विषयो यत् महतो ग्रन्थराशीनधीत्यापि तावाननुभवो न भवत्यस्माकं यावान्प्राचीनकाले तादृशां भिषजामासीत् ।

तस्य सर्वप्रथमं दयनीयास्पृश्यनिर्धनानां महता स्नेहेनोपगत्य सदनं निरीक्षणम्, अन्नवस्त्रौषधादिभिः साहाय्याचरणञ्च किञ्चिन्न्यूनसाहसस्य कार्यन्नासीत्, यस्मिन्समयेऽस्पृश्यशब्दश्रवणमात्रादेव जनानां मानसेषु स्यात् घृणोद्रेकः । एवन्तु मोहतापरिवारो जनधनविद्यादिषु राज्यप्रजयोरुभयोरपि सम्मानित आसीत्, परं विशेषतया जनतासु प्रियता श्रेष्ठिमोतीलालमोहतामहोदयस्य चिकित्साकार्यस्पृश्यप्रेमासमर्थसाहाय्यदातृत्वादिगुणकदम्बैः सातिशयं वृद्धिमुपगता । १९३९ वैक्रमेऽब्दे कीनाशनिकेतनातिथिमन्यः श्रेष्ठिमहोदयः स्वान् श्रीशिवदास–जगन्नाथदास–लक्ष्मीचन्द्र--गोवर्धनदासप्रभृतीन् सुयोग्यान् पुत्रानाहूयावोचत्, यत् यूयम् व्यवसाये संलग्नाः स्थ, किन्तु इदं चिकित्साकार्यं येन जनतायाः विशेषतो निर्धनजनवाया विशेष उपकारो भवति, अस्योपि नैरन्तर्येण प्रचलेदिति मे वाञ्छा ।

सुयोग्या आत्मजाः पितुराज्ञां शिरसि धृत्वैकस्यौषधालयस्य स्थापनामकुर्वन्, यत्कार्यं सुचारुतया चलितुमारेभे । कियत्कालानन्तरं दिवंगतस्य श्रेष्ठिमहोदयस्य नप्तारो मदनगोपाल-रामगोपाल कन्हैयालालप्रभृतयःशिक्षां सम्पद्यात्मपरिवारस्य स्वभावानुकूलं मोहताधर्मशालामोहता-संस्कृतपाठशाला-मोहताविद्यालय–( हाईस्कूल )मोहतापुस्तकालय-(गुणप्रकाशकसज्जनालय )प्रभृतिसंस्थासंस्थापनद्वाराभिर्भिन्नभिन्नपद्धतिभिर्लाभसहायान्विताः जनताः उपचक्रुः ।

तदारभ्येमाः सर्वाः संस्थाः स्वस्वकलेवरेषूपचितिमिता मोहतापरिवारस्य शोभां यशोराशिञ्चाभिव्यञ्जन्ति । एतासां सर्वासां संचालकोऽस्ति स्वनामधन्यो व्यवहारकुशलः परमकारुणिको वदान्यः श्रेष्ठि-श्रीरामगोपालमोहतामहोदयः ।

श्रीरामगोपालमोहतामहोदयः श्री-सरस्वत्योः प्रियपुत्रः । कराचीकलिकातेन्द्रप्रस्थलवपुरेषु व्यवसायकार्यमेतस्य चलति, यत्र सहस्राधिकाः कार्यकर्तारः सन्ति । गीतासदृशप्रमाणितग्रन्थरत्नानामध्ययनं कृतवानस्ति सः, गीताप्रतिपादितसिद्धान्तान् व्यवहारयानेतुं "व्यवहारदर्शन"नामकं हिन्दीभाषात्मकं गीताया उपरि भाष्यं लिखितमेतेन, यस्य प्रशंसा महद्भिर्विद्वद्भिरपि कृतास्ति । एतदतिरिक्तं "दैवीसम्पत्" "सात्विकजीव-

सं० र० शिक्षाङ्कः




मोहता-धर्मार्थ औषधालयः, छात्रावासश्च ( बीकानेर )
माननीयश्रीमदनमोहनमालवीयमहोदयस्य निरीक्षणावसरे गृहीतं चित्रम्

°कार्यकलापे स्विनेति वक्तव्यम् ।



## बीकानेरस्थश्रीमोहतायुर्वैदिकसंस्थायाः संक्षिप्तपरिचयः ।

( ले० पं० शंकरदत्तशर्मा आयुर्वेदाचार्यः, बीकानेर )

मोहता-परिवारे श्रीमान् स्वर्गीयश्रेष्ठी मोतीलालमहोदयो विचारशीलः परोपकारपरायणोऽतिशयदानी चाभवत् । तस्य जनसेवाकार्यकलापैः सह चिकित्साकार्येऽपि महती रुचिरासीत् । तत्कालिकप्रख्यातचिकित्सकेषु स सादरं गण्यते स्म । अद्यावधि जनता तस्यारिष्टनाडीज्ञानयोः प्रशंसां करोति । अयं महान् खेदस्य विषयो यत् महतो ग्रन्थराशीनधीत्यापि तावाननुभवो न भवत्यस्माकं यावान्प्राचीनकाले तादृशां भिषजामासीत् ।

तस्य सर्वप्रथमं दयनीयास्पृश्यनिर्धनानां महता स्नेहेनोपगत्य सदनं निरीक्षणम्, अन्नवस्त्रौषधादिभिः साहाय्याचरणञ्च किञ्चिन्न्यूनसाहसस्य कार्यन्नासीत्, यस्मिन्समयेऽस्पृश्यशब्दश्रवणमात्रादेव जनानां मानसेषु स्यात् घृणोद्रेकः । एवन्तु मोहतापरिवारो जनधनविद्यादिषु राज्यप्रजयोरुभयोरपि सम्मानित आसीत्, परं विशेषतया जनतासु प्रियता श्रेष्ठिमोतीलालमोहतामहोदयस्य चिकित्साकार्यास्पृश्यप्रेमासमर्थसाहाय्यदातृत्वादिगुणकदम्बैः सातिशयं वृद्धिमुपगता । १९३९ वैक्रमेऽब्दे कीनाशनिकेतनातिथिमन्यः श्रेष्ठिमहोदयः स्वान् श्रीशिवदास–जगन्नाथदास–लक्ष्मीचन्द्र–गोवर्धनदासप्रभृतीन् सुयोग्यान् पुत्रानाहूयावोचत्, यत् यूयम् व्यवसाये संलग्नाः स्थ, किन्तु इदं चिकित्साकार्यं येन जनतायाः विशेषतो निर्धनजनतायाः विशेष उपकारो भवति, अग्रेऽपि नैरन्तर्येण प्रचलेदिति मे वाञ्छा ।

सुयोग्या आत्मजाः पितुराज्ञां शिरसि धृत्वैकस्यौषधालयस्य स्थापनामकुर्वन्, यत्कार्यं सुचारुतया चलितुमारेभे । कियत्कालानन्तरं दिवंगतस्य श्रेष्ठिमहोदयस्य नप्तारो मदनगोपाल-रामगोपाल कन्हैयालालप्रभृतयःशिक्षां सम्पद्यात्मपरिवारस्य स्वभावानुकूलं मोहताधर्मशालामोहता -संस्कृतपाठशाला-मोहताविद्यालय–( हाईस्कूल )मोहतापुस्तकालय-(गुणप्रकाशकसज्जनालय )प्रभृतिसंस्थासंस्थापनद्वाराभिभिन्नभिन्नपद्धतिभिर्लाभसहायान्विताः जनताः उपचक्रुः ।

तदारभ्येमाः सर्वाः संस्थाः स्वस्वकलेवरेषूपचितिमिता मोहतापरिवारस्य शोभां यशोराशिञ्चाभिव्यञ्जन्ति । एतासां सर्वासां संचालकोऽस्ति स्वनामधन्यो व्यवहारकुशलः परमकारुणिको वदान्यः श्रेष्ठि-श्रीरामगोपालमोहतामहोदयः ।

श्रीरामगोपालमोहतामहोदयः श्री-सरस्वत्योः प्रियपुत्रः । कराचीकलिकाचेन्द्रप्रस्थलवपुरेषु व्यवसायकार्यमेतस्य चलति, यत्र सहस्राधिकाः कार्यकर्तारः सन्ति । गीतासदृशप्रमाणितग्रन्थरत्नानामध्ययनं कृतवानस्ति सः, गीताप्रतिपादितसिद्धान्तान् व्यवहारयानेतुं "व्यवहारदर्शन" नामकं हिन्दीभाषात्मकं गीताया उपरि भाष्यं लिखितमेतेन, यस्य प्रशंसा महद्भिर्विद्वद्भिरपि कृतास्ति । एतद्वतिरिक्तं "दैवीसम्पत्" "सात्विकजीव-

वहारिक्याः शिक्षाया अपि ह्रास एव जात इति न स्यादयं विवादविषय इति निश्चितमिव मन्ये ।

साम्प्रतिकोऽयं समयश्च वर्तते सर्वथा व्यवहारप्रधानः समयः । समयेस्मिन् पुनरप्यस्माभिः समुद्धार्यैव सा प्राचीना व्यावहारिकी शिक्षाप्रणाली । व्यवहारज्ञानमन्तरा परमार्थावाप्तिरपि वस्तुतो न सिध्यति—इत्यपि प्रत्यक्षं शास्त्रसम्मतं च । साम्प्रतिकैः कैश्चन पूज्यैः पण्डितप्रवरैः "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" समुपदिशद्भिर्योऽसौ शिक्षासुधारनिरोधः क्रियते स तु न देशकालोपयोगी इति सादरं निवेदनीयमेवास्तेऽस्माभिः । पुरा तु तैः "षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" इत्यत्र षडङ्गपदविषय एव न विधीयते पूर्णो विचारः । प्रचलिता या पाठ्यप्रणाली यथा च तत्र केषांचित् परःशतेभ्यो वर्षेभ्यो निर्धारितानां ग्रन्थानामध्ययनमेव मुख्यतया प्रचलति, तावन्मात्र एव न भवति षडङ्गस्य समाप्तिरिति सर्वैः समालोचकैः स्वीकार्यमेव वरीवर्ति ।

ये च कथयन्ति यद् वयं वर्तामह एव सर्वथा व्यवहारनिपुणास्तेषामग्रेऽपि निवेदनमेतदेव यत्तैर्व्यवहारशब्दो न प्रयोज्यः केवलं केषुचित्साधारणेष्वेव दैनिकेषु कार्येषु । व्यवहारो हि नाम वर्तते राज्यशासनप्रणाली, समाजशास्त्रज्ञानम्, सैनिकविधिनिरूपणम्, तेषां तेषां वैज्ञानिकानां, भौगोलिकानामैतिहासिकादीनां च विषयाणां पूर्णं ज्ञानम् । भवन्तु नाम केचन पण्डितप्रवराः प्राज्ञा विषयेष्वेतेष्वपि परं किं तैरिदमपि कथयितुं शक्यते यद् वर्तत एव सर्वेषामेतेषां विषयाणां सन्निवेशोऽस्माकं शिक्षाशालासु ।

यदि नहि तर्हि न केवलं स्वजीविकानिर्वाहार्थमेवापि तु भारतीयसंस्कृतिसंरक्षणाय प्रचलितविकृतनीतिज्ञानपरिशोधनाय सकलजनहितकारिविज्ञानप्रचाराय एवं च जगतः कल्याणाय संस्कृतज्ञैरपि सद्य एव परिचालनीयैव काचन व्यावहारिकी शिक्षा इति साधु सिद्धम् ।

कुत इमे ग्रन्थाः प्राप्तुं शक्यन्ते कथं च संस्कृत-पाठशालासु विषयाणामेतेषां भवेत्सन्निवेशः ? प्रचलिता प्रणाली वा किं सर्वथैव परित्याज्या ? इत्यादीनां प्रश्नानां यद्यपि लेखेऽस्मिन् न कर्तुं शक्यते पूर्णो विचारस्तथापि ग्रन्था यदि गवेष्यन्ते समालोच्यन्ते वा तर्हि संस्कृतसाहित्येऽवश्यं प्राप्स्यन्त इति वर्तते मे दृढो विश्वासः । तत्कृते हि सर्वेषां वेदानां ब्राह्मणानां तदुपवेदानां स्मृतीनां च पर्यालोचनं समालोडनं च परमावश्यकमस्ति । न सन्ति चेत्तर्हि पण्डितैर्यथाऽन्यैर्लिख्यन्ते तथा तैरपि ते ते ग्रन्था लेख्या एव । शुद्धबुद्धिभिः संस्कृतपण्डितैर्यद् विचार्य विचार्य प्रकाशयिष्यते यादृशं च भवेत्तेषां वैज्ञानिकं ज्ञानं तत्स्यादेव प्रचलितात् सर्वजनसंहारकारिणो विज्ञानात् किमपि विलक्षणं सकलसंसृतिसुख साधकं चेति तैः सोल्लासेदृढप्रतिज्ञैश्च भाव्यम् ।

प्रचलिता प्रणाली सर्वथैव सदोषेति न केनापि कथयितुं शक्यते । सन्ति तत्रापि ते

गुणा यैरद्यापि भारतीया संस्कृतिः, धार्मिकी व्यवस्था, शास्त्रसमालोचना परमपुरुषार्थप्राप्तिप्रगतिश्च सुतरामक्षुण्णा रक्ष्यते। तेषां तेषां शास्त्राणां विद्वांसश्च यथा तथा समुत्पाद्यन्ते न तथा व्यावहारिक्या शिक्षया स्वप्नेऽपि कदाचन प्रादुर्भावयितुं शक्यन्ते। एवं सति सा समादरणीया संरक्षणीया चैव सर्वैरिति न तत्र कापि विप्रतिपत्तिः। निवेदनं तु केवलमेतदेव यत् सर्वेऽपि विद्यार्थिनः केवलं षट्शास्त्रिणः, वेदान्तिनः, वैय्याकरणाः पौराणिका एव वा देशे कदापि नापेक्ष्यन्ते न च तैरेव जीवने यद्यदावश्यकं विशेषतश्च समयेऽस्मिन्, यस्मिन् प्रतिक्षणं तेषां तेषां नवानां सिद्धान्तानां विकासो भवति; तत्सर्वं संसाधयितुं शक्यते। यदि सन्ति केचन शास्त्रपारंगतास्तर्हि केचन तत्तत्कार्यसंचालनाय सामान्या व्यवहारशास्त्रिणोऽपि सर्वत्र परमावश्यका एवेति प्राचीनैर्न विस्मरणीयम्।

अतो ह्यस्माभिः सम्प्रति सा शिक्षा परिचालनीया यस्यां भवेत् ऐहिकस्य पारलौकिकस्य चेति द्वयोरेव पुरुषार्थयोः पूर्णः सन्निवेशः। संस्कृतज्ञाश्च न भवेयुः केवलमध्यापकाः कथावाचका एव वा, अपि तु स्युः केचन प्रसिद्धा नेतारो देशजातिसंरक्षका जगतपरिस्थितिपरिशोधका नवजीवनसंचारकाश्चेत्यलं बहुना विज्ञेषु।

---

## ❁ पुस्तक-शिक्षा ❁

( कवीन्द्र—श्रीरवीन्द्रनाथटैगोरमहाशयानाम् अनुवक्ता-श्रीलक्ष्मीकान्तत्रिपाठी, लखनऊ )

चिराय मानवीयं ज्ञानं मानवीयांश्च भावानेकत्र सञ्चेतुं यत् किञ्चनोपयोगितमद्भाजनमुपलभ्यते लोके तत् पुस्तकमेवेत्यत्र के नाम विचिकित्सन्तु ? यत्तु संवत्सरसाहस्रीभ्यः प्राक्त्वि मानवजातेर्ज्ञानवृन्दानि सर्वैरद्ययावद् बुद्धिगम्यतां नीयन्तेरूपं तत्र केवलं पुस्तकानामनुकम्पा परमा। एतर्हि यन्त्रयुगेऽतित्वरया पुस्तकात् पुस्तकान्तराणि प्रसूयन्तेतमां नक्तन्दिवम्। एवं कृत्वा मानवजीवस्य प्रतिदिशं पुस्तकारण्यान्या निविडीभूयते। एतेन साम्प्रतिकमानवानां चेतसि पुस्तकसृष्टा एव भावा उद्यन्ति सर्वदा। निर्जीवपुस्तकानां माध्यमेनैव ते साध्यन्तं विश्वं पर्यालोकन्ते, न तु चेतनचेतसः साह्युज्येन। नेदिष्ठतत्त्वान्यपि परिचेतुं पुस्तकप्रामाण्यान्वेषिणो बोभुवति ते। बाल्यादेव पुस्तकावरणपिहितचेतोवृत्तिभिस्तैः पुस्तकस्थादतिरिच्यमानं किमपि सत्यं विपुलप्रकृतिसाम्राज्येऽन्वेष्टुं न पार्यते। अविरतपुस्तकाक्रमणैः परिह्रसति स्वाधीनसमीक्षाशक्तिर्विलुम्पति स्वतन्त्रमनःप्रसारश्च तेषाम्! अहो वैषम्यम्, यदेवञ्जातीयपुस्तकपारतन्त्र्यदोषेण विदलितमनोवृत्तिस्वातन्त्र्या अमुया दुर्दशया प्रवप्सत्येव न मनागपि जिह्रियति।

न खलु पुस्तकाध्ययनमेव शिक्षा; अपि तु शिक्षाविधेः सौविध्यपूर्णं साधनं तत्।

तस्मात् पुस्तकपाठसामर्थ्योत्पत्तिरेव शिक्षापरिधिरित्यन्धसंस्कारो जातुचनापि मा प्रवापि शिक्षकैर्बालानां स्वान्तेषु । यो यः सञ्चितो ज्ञाननिधिः पुस्तकेषु स खलु मूलतः प्रकृतिदेवताया अनश्वरभाण्डागारादेव समाहृत इति तत्त्वं प्रतिपदं ते बोद्धव्याः । नूनं यद् अवबुध्यते मानवः साक्षात्सम्पर्केण प्रकृतेस्तदेव समुल्लिखति पुस्तकेषु । एतर्हि पुस्तकपाठनोपद्रवेणाऽतिवेलेन भूयते तस्मात् पूर्वत्र निर्दिष्टं शाश्वतिकं सत्यं सम्यग्बुद्धिस्थं कार्यं बालानाम् । समुच्छ्रितस्वरूपेऽपि लिपिविज्ञाने न किल पुस्तकानि व्यवाहारिषत महर्षिभिरध्यापनार्थं तपोवनेषु सुप्राक्तनकाले । तदानीमाचार्या मौखिकीमेव शिक्षामदुः, शिष्याश्च तामङ्कयामासुः स्वे स्वे नितान्तशान्तस्वान्ते, न वै साम्प्रतिकपरिपाटिरिव नोटबुके वा पाकेटबुके वा । इत्थङ्कारमेकया ज्ञानदीपशिखयाऽपरासां ज्ञानदीपशिखानां प्रज्वालनकार्मणमविच्छिन्नं प्रववृते ।

अथेदानीं सर्वांशेषु तादृक्शिक्षणक्रमः प्रयोक्तुं न सुशको यद्यपि, तथापि घातुकेभ्यः पुस्तकव्यूहाक्रमणेभ्यस्त्राणीया अध्येतारो यावच्छक्यम् । सम्भवेच्चेत कदाचनापि परकृतरचनां छात्रा न पाठ्यन्ताम्, वरं च गुरुजनसमक्षं विश्वप्रकृतिपर्यवेक्षणेन यदधिगच्छेयुस्ते तत् स्वयमेव लिपिबद्धं कुर्युः । अर्थात् प्रकृतिदेवतासाम्राज्ये यद्दृतं तत्त्वं हृदयस्थितां समानीतं तैस्तदेव लिपिबद्धं कारयित्वा तें पाठनीयाः । एवं कृते तेषामपराधीनसमीक्षाशक्तिरुद्भोत्स्यते । तदा ते सम्यग् ज्ञातुं शक्ष्यन्ति यदस्माभिः स्वीयविचारसन्ततिर्लिपिबद्धा कृता यथा तथैव प्राक्तनग्रन्थप्रणेतृभिरपि पुस्तकेष्वात्मविचारा उट्टङ्क्यन्ते स्म; अस्माभिरिव तैरपि कदाचिदयथार्थोल्लेखः सम्भाव्यते; तेन पुस्तकं न परमं प्रमाणं परं च प्राकृतिकसत्यमेव प्रमाणम् ।

'भारतस्याऽऽदिमवास्तव्या अनार्या आसन्, आर्यास्तु देशान्तरादागतवन्तः; तस्माद् भारतवर्षं नास्माकमार्याणां मातृभूः ।"—"ख्रिष्टाब्दीतः संवत्सराणां सहस्रद्वयात् प्राग् वेदा निरमीयन्त ।"—एवञ्जातीयानि पुस्तकनलिकया पाय्यमानानि साम्प्रतिकविपाकतत्त्वानि स्वयमपरीक्ष्योररीकर्त्तुं ते नोत्सहेरन् तदानीम् ।

वस्तुत एव प्रथमे वयसि पाठ्यमानानि पुस्तकानि सम्मोहयन्ति विचारस्फूर्तिक्षमतां बालानाम् । ततः प्राप्तवयःप्रौढीनामपि तेषां पुरस्तात् पुस्तकस्थविचारा आकाशवागिव सर्वथा निःसंशयत्वमयन्ते । अस्मन्मतेऽदः सत्यमेव पुरा पिपठिषून् बोद्धव्यं यत् पुस्तकीयविमर्शा बह्वंशेषु आनुमानिका एव—स्तोकतर्कपृष्ठभूमय एव । स्यान्न सम्भवस्तदा पुस्तकनिर्धारितार्थेषु समीचीनविश्लेषणपथेन शिक्षकैश्छात्राणां स्वानुमानप्रौढिरुत्तेजनीया । एवं स्वान्तरेऽवबुध्यमानपुस्तकनिर्माणकापटानुमानप्रणाल्यस्ते विमोचयन्त्यात्मनः परान्धानुशासनात् पुस्तकानाम् । सतीदंप्रकारे स्वतन्त्रप्रतिभोद्यमे या ज्ञानाधिगन्त्री मानस-

+अत्र द्वितीया दुर्लभा

शाक्तिः : संस्कृतेकं इति विदुषां न विदितम् तेन सदोष एव न्यास:।

शक्तिस्तेषां सा पुस्तकपृथुलभरेण न वाऽवरोत्स्यति न वा मूर्च्छिष्यति। तदेवमनुशास्यन्तां पुस्तकानि छात्रमनोभिर्न पुनश्छात्रमनांसि पुस्तकैः।

सर्वे समीक्षितारस्तथोक्तास्माकविचाराणां सहस्रकृत्वोऽनुमोदने न चिरयिष्यन्ति परन्तु तेषामनुष्ठानविधौ सर्वथैव शमिष्यन्तीत्युभयत्रापि न सन्दिह्महे वयम्। प्रयोगकाले विचारयिष्यन्ति ते—'यदित्थं शिक्षयितुं न शक्यते बालकान्, सर्वथाऽसंभवोऽसौ विधिः'। नूनमेवाऽऽधुनिकलोकाः शिक्षाशब्देन यमर्थमवबुध्यन्ते स खलूक्तचरप्रकारेण साधयितुं न शक्यते। कतिपयपुस्तकानि पाठयरूपेण निर्धार्य नियतसमयावधौ नियतप्रणाल्या परीक्षाग्रहणमेव सम्प्रति विद्याभ्यास इत्यभिधीयते। पाठ्यपुस्तकानां पत्राणि, पत्राणां चाक्षराणि परिगणय्य वर्त्तमानशिक्षकैर्बालानां विद्याया गौरवलाघवे परिमाप्येते। अमूदृशेन विद्याभ्यासेन स्वैरं खिलीभवन्तु पिपठिषूणां मनांसि, कामं दासायन्तां पुस्तकनिचये विद्यार्थिनः, यथेच्छं विमूर्च्छतु स्वाभिकी प्रतिभा तेषाम्, परन्तु जडविधेः शिक्षापदवाच्यता न परिह्रसत्यंशतोऽपि सम्प्रति। अमुष्याः प्रचलन्निर्जीवशिक्षाया दोषपरम्परामधिकांशतस्तु नैव परिचिन्वन्ति जनाः, ये च कतिपये परिचेतारस्ते खलु इदमप्रियसत्यं शिक्षणशुभंयुसमाजसमक्षम् अङ्गीकर्त्तुं नोत्सहन्ते, अथापि ये परिचेतारोऽङ्गीकर्त्तारश्च ते कार्यकाले समुत्पन्ने प्रचलितपूर्वप्रकारेष्वेव बद्धदृढाभक्तयो बोभूयन्ते हन्त !

---

# संस्कृतशिक्षापद्धतौ दोषाः तदपनयोपायाश्च

( लेखकः—म० म० श्रीगिरिधरशर्मा चतुर्वेदः )

## ( शिक्षा—स्वरूपम् )

सर्वं किलेदं जगदनन्तानां शक्तीनां विजृम्भणमात्रम्। यत्किञ्चिदल्पं वा महद्वा वस्तु पश्यामः, तत्र साधारण्योऽसाधारण्यश्च वर्तन्ते बहुविधाः शक्तयः, ता एवानवरत क्रियारूपेण परिणमन्ति तासामेव च शक्तिपरिणतीनां क्रियाणां कलापोऽयं जगदित्युच्यते। यत्किमपि न करोति, नैव वा किञ्चित्कर्तुं यत्र शक्तिरस्ति, तद्वस्तुपदेन, पदार्थपदेन, सत्पदेनापि वा नाभिलपितुं शक्यते। अत एव 'अर्थक्रियाकारित्वम्' एव सत्त्वत्वमास्थितं कैश्चन तैर्थिकैः। आसां शक्तीनां वैलक्षण्यादेव जगदिदं जडचेतनरूपतया द्विविधतां गतम्। उभयत्रापि दृश्यन्ते द्विप्रकाराः शक्तयः—स्वत आविर्भवन्त्य एकाः, अन्यसाहाय्येनाविर्भाव्यमानाश्चान्याः। इक्षुरसादौ स्वमाधुर्येणाप्यायकत्वं स्वत आविर्भवति, मादकता तु गुडादिरूपेण परिणमय्य पदार्थान्तरेण संमिश्र्य चाविर्भाव्यते। तूलादावुष्णतोपजननं स्वाभाविकम्, प्रावरकत्वं तु संस्कारैस्तत्तद्विशेषोत्पादनेनाविर्भाव्यते।

प्रश्नवान् इत्येव साधु।



साधारणेष्वपि वनस्पत्यादिषु तत्तद्योगेन, उपयोगवैलक्षण्येन च विचित्राः शक्तीराविर्भावयन्ति भिषजां वरिष्ठाः। तथैव चेतनेष्वपि शुकसारिकादौ वाङ्माधुर्यं जन्मतः सिद्धम्, प्रस्फुटवाक्त्वं तत्तन्मनोग्राहिपदकदम्बभाषित्वं चाभ्यासादिनाविर्भाव्यते। वृषभादौ बलं स्वाभाविकम्, शकट्यादिपरिचालनपाटवं क्षेत्रादिकर्षणपाटवं वा विनीयाभ्यासवशतस्तत्राविर्भाव्यते। तत्र जडेषु प्रस्फुटज्ञानविरहितत्वेन शक्त्याविर्भावनेच्छा स्वतो नोदेति, चेतनैरेव तत्र यथेच्छं परिवर्तनानि विधीयन्ते। चेतनेषु तु ज्ञानवत्तया अनुद्भूतशक्तिप्रादुर्भावनेच्छा, परतस्तथाविधशक्तिसंग्रहणेच्छापि च प्रवर्तते, तद्वशगाश्चैते स्वतोऽपि शक्तिसंचयाय प्रयतन्त इति तेषां पक्षे शक्त्युद्भावनप्रयोगोऽयं 'शिक्षा'पदेनाभिलप्यते। वैयाकरणैः सन्नन्ताच्छकधातोर्व्युत्पाद्यमानमिदं शिक्षापदं शक्तिविकासेच्छामेव प्रवृत्तिनिमित्तीकरोति। 'धनुषि शिक्षते-धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः' इत्युक्तं वैयाकरणशिरोमणिना तत्रभवता श्रीमता भट्टोजिदीक्षितेन। तादृशेच्छाजन्या गुरूपसत्त्याद्यास्तच्छुश्रूषाद्याः परानुकरणाद्याः प्रयत्नाश्चापि कार्यकारणयोरैक्याभिमानेन शिक्षापदेनैवाभिधीयन्ते, रूढ्या च स्वेच्छामन्तरेण परेच्छया क्रियमाणा बलात्कार्यमाणाश्चापि तादृशाः प्रयत्नाः शिक्षापदाभिधेयतां गताः। अत एव स्वयमनिच्छत्यपि बलाच्छकटीवाहनादिकमभ्यास्यमाने बलीवर्दादावपि 'शिक्ष्यते' इति प्रवर्तते व्यवहारः। अथ चेतनेष्वपि मनुष्याणामतिप्रवृद्धास्ति ज्ञानशक्तिः। तदनुसारिण्येव चेच्छाशक्तिरप्येषामतिविस्तीर्णा, कार्यक्षेत्रमपि चातिविशालम्। 'विविधाद्भुतशक्तिसम्पन्नाः सर्वानन्यानतियामः' इतीच्छा स्वयमेवैषां मानसारामे दोलायते। परोपसदनेन, परानुकरणेन परवञ्चनेन वा येन केनाभ्युपायेन शक्तिसंग्रहणेच्छा तद्विकासनेच्छा वातितमामेषु जागर्ति। तत एवैषां पक्षे शिक्षापदं विशेषेणार्थवत्, शिक्षा विशेषेण प्रयोजनवती, शिक्षाक्षेत्रं चातिविस्तीर्णतमम्। मनुष्योऽयं सामाजिकः प्राणीति प्रातिस्विकोन्नत्या सह समाज-संघटनम्, समाज-संरक्षणम्, समाजोन्नमनम्—इत्यादिकमपि सविशेषमनेनापेक्ष्यमाणं शिक्षायामेवायतते। मतिवैचित्र्याच्च नानाभेदमश्नुवति समाजे पृथक्पृथक्संस्कृतीनां प्रादुर्भाव इति स्वस्वसंस्कृतिपक्षपातिता तत्संरक्षणप्रवणता चाप्यस्य श्लाघनीयं शिक्षाप्रयोजनम्। किं च ज्ञानस्यातितमां विकासे स्वरूपाधिगतौ, अर्थाच्छरीरातिरिक्तात्मपदार्थावगतौ जातायामात्मनः परिणतेः परिष्करणेच्छा, परलोकसुधारणेच्छा, सर्वविधबन्धनविमोचनेच्छापि चैषां जागर्तीति धर्मार्थकाममोक्षेति पुरुषार्थचतुष्टयाधिगमोपायतया स्वस्वपूर्वजैराविर्भाव्य सञ्चितो विज्ञानकोशश्चाप्येषां संरक्षणीय इति कियद्द्रामोऽत्र शिक्षाक्षेत्रविस्तृतिम्।

## संस्कृतशिक्षा

तत्र भारतमिदं वर्षं सर्वस्यापि भूम-

एडलस्य शिक्षागुरुपदं कदाचिदध्यतिष्ठदिति बहुभिः प्रमाणैः प्रसिध्यति, पक्षपातविधुराश्च बहवो वैदेशिका अप्येतदभ्युपगच्छन्ति। भारते च चिरादेव शिक्षा संस्कृतभाषाधारेण प्रचलति स्म। संस्कृतमेव जगति सर्वादिभूता भाषेति निष्पक्षमालोचयद्भिर्बहुभिरेव सिद्धान्तितम्। भारतस्येयमादिभूता भाषेत्यत्र तु न कस्यापि सुधियो विवाद उदयेत। भारतप्रचलिताः सर्वा अपि भाषाः संस्कृतादेव लब्धजन्मानः। उद्भूतास्वपि च कालक्रमेण विविधभाषासु शिक्षाया भाषा संस्कृतमेवात्र प्रतिष्ठिताभूदिति विवेचितं मयान्यत्र। तदित्थमतिपुरातने काले शिक्षापदं संस्कृतशिक्षापदं च न विभिन्नार्थतां व्यगाहतामित्युक्तिर्नात्युक्तिकोटिमवगाहते। तत एव यावत्यः सन्ति शक्तयो मनुष्ये विकाससापेक्षाः, तासां सर्वासामेव विकासनोपायाः सुरभारत्यां प्रतिष्ठिताः। चतुर्विधपुरुषार्थसाधनीयं संस्कृता वाक् सुरेन्द्रादिपदतृणीकारदक्षं परं वैराग्यं यथा स्वीये क्रोड आदर्शयति, तथा साम्राज्यपरिचालनप्रवणान् राजधर्मान्, विलासैकलक्ष्याणि कामशास्त्राण्यपि च रक्षति। प्रतिपदं विशुद्धान् सदाचारान् प्रतिदिशं प्रवाहयन्त्यपि तत्तत्कालविशेषोपयोगिनीं कणिकनीतिमपि न न पुष्णाति। मनोवाक्कर्मणामैकरूप्यं माहात्म्यमभिमन्यमानापि वाराङ्गनामिवानेकरूपां नृपनीतिमनुमोदत एव। अहिंसाप्रतिष्ठां शिरसि स्थापयन्त्यपि युद्धकौशलं ख्यापयन्ती न पश्चात्पदतामालम्बते। विद्याप्रवणापि कलाविस्तारमक्षुण्णं रक्षति। राजभक्तिपारायणपरापि प्रजानामधिकारमुच्चैर्जोघुष्यते। किंवा विस्तरेण-देशकालपात्रादिभेदेन यस्या यस्याः शक्तेरुपयोग आवश्यकस्तस्याः सर्वस्या अपि यथोचितं विकाससामग्री संस्कृतभारत्यां परिपूर्णं परिदृश्यमाना अस्या एव शिक्षाधूर्वहत्वं स्फुटमभिव्यञ्जयति। तत्संस्कृतशिक्षापद्धतिविवेचनमेव मानुषशिक्षापद्धतिविवेचनं भवेदिति नात्र संशयावसरः।

## शिक्षा पद्धतिः

सैव ननु शिक्षापद्धतिर्भवेदभ्युदयाय मानवसमाजस्य, या ज्ञानशक्तिं विकासयन्ती, क्रियाप्रवणतामपि चाराधयन्ती द्वयोर्ज्ञानक्रिययोः सामञ्जस्यमक्षुण्णं रक्षेत्, ज्ञानं यत्र क्रियायामुपयुज्येत, क्रिया च ज्ञानानुकूलतां न जह्यात्-सैव खलु शिक्षा शिक्षा नाम। ये नाम केवलमुदरदरीपरिपोषणमात्रं शिक्षालक्ष्यं प्रतिष्ठापयितुमीहन्ते, ते मानुषानपि पशुभ्योऽनतिविशिष्टान् सम्पादयितुमभिलषन्तः शिक्षामपि गौरवाद् ध्वंसयन्ति। ये चापि लोकातिगत्वसम्पादनाय शिक्षामाद्रियन्ते, तेऽपि मनुष्याणां सामाजिकत्वमाच्छिन्दन्तः पुरग्रामादीनरण्यतां नेतुमुत्सुका इति न समाजस्य हितचिन्तकाः। अस्माकं प्राक्तनी खलु शिक्षापद्धतिर्ज्ञानकर्मणोः सामञ्जस्यमेव लक्ष्यीचकार। 'शिक्षिता अप्याचारहीनाः' इति योग्यताविरहितमिदं वाक्यं नार्थप्रत्यायकमभूजनपदेऽस्मिन्। 'कोटधीशा धनकुबेरा अप्यक्षरशून्याः' इत्यपि च नासीत्कल्पना पुरातनेषु। 'जग-

तः शुभम्, समुच्छेदो वानेन संभवेत्' इत्यविचार्यैव नवनवयन्त्राद्याविष्कारप्रवणता न शिक्षितास्मत्पूर्वजैः। अधिगततत्त्वैश्चापि तैर्नारण्यमेवाश्रीयते स्म, अपि तु त एव जगद्विजयिन 'अष्टादशद्वीपनिखातयूपाः' दिगन्तप्रापितपण्या वा आसन्निति नैतत् परोक्षं भारतेतिहासविदाम्।

इयं तु संस्कृतशिक्षणपद्धतिर्यदवधि मानवसमाजहस्तादाच्छिन्ना, ततः प्रभृत्येव शिक्षापदार्थदुरवस्था सर्वतोमुखी जगति प्रवृत्ता, तस्यैव च क्रमिकः परिणामोऽद्य दृग्गोचरीभवति। कियतः कालात् कैः कैर्वा हेतुभिः कथं कथं परिवर्तनानि शिक्षायामभूवन्निति नायमर्थः सुविवेचः, न चैतावतो विस्तारस्येह स्थानमस्ति। दुर्दैवादापतितया परतन्त्रतया तु देशेऽस्मिन् शिक्षाया महती दुरवस्था कृतेति सुस्पष्टं शक्यते वक्तुम्। न खलु विजेतारो विजितान् विशिष्टशक्तिसम्पन्नान् द्रष्टुं क्षमन्ते, तत एव च ते शक्तिग्रहोपायांस्तेषां विध्वंसयन्तीति स्वाभाविकोऽयमर्थः। अनेनैव व्यतिकरेण स्वभाषानुरागोऽप्येषां विनाशितः, स्वीया शिक्षापद्धतिरपि चैषां हस्तादाच्छिन्ना। स्वसभ्यतां भारतीयेषु प्रवर्तयितुं स्वोपयोगिनश्चैतान् विधातुं स्वस्वभाषा विजेतृभिः शिक्षाक्षेत्रे प्राधान्यं लम्भिताः। स्वोपयोगमात्रकृते चैते शिक्षितास्तैः, न तु वस्तुतो हितमेषामनुध्याय। तत एवाद्येयं प्रचलति भारते शिक्षा, न सा शिक्षापदाभिलप्या कथमपि सम्भवतीति सर्व एव विचारका अभ्युपगच्छन्ति। विद्वांसो महारस्तामेतां पद्धतिं परिवर्तयितुमपीहन्ते, परं चिराच्छिक्षापथपरिभ्रष्टानां भारतीयानामद्य शिक्षापदार्थव्यामोह इव तथा सम्पन्नो यथा शिक्षालक्ष्यमप्येतैर्विस्मृतमिव। इदानीं 'वर्धास्कीम' नाम्ना यदिदं प्रवर्तते शिक्षापरिष्कारान्दोलनम्, तद्दर्शनेन पूर्वोक्तं प्रस्फुटीभवति विवेचकानाम्। अत्र हि परिष्कारे न स्वसंस्कृतिरक्षा लक्ष्यीक्रियते, न स्वभाषायाः स्वसाहित्यस्य वा गौरवं विचारपथमानीयते, धर्मस्य तु कथैव दूरापास्ता, सामाजिकविज्ञानानुरोधिनी समाजरक्षणप्रवणा नीतिरपि नाद्रियते, केवलं कथंचिदुदरदरीचिन्ता सर्वतोमुखी समालोच्यतेऽत्र परिष्कारान्दोलने प्रसरन्ती, सापि तु क्रमेणानेन समाहिता स्यान्न वेति वेदैतद्भगवानेव। यतो हि सर्वेऽपि यदि देशे स्युः शिल्पिनः, तर्हि शिल्पघटितवस्तूनां क्रेता को नाम भवतु? कुतश्च शिल्पिभिरुदरचिन्ताशान्तये द्रविणं लभ्यतामित्याद्या दुःसमाधेयाः प्रश्ना अत्राविर्भवन्तीति। आस्तामिदमरण्यरुदितम्, शिक्षापरिष्कर्तृभिर्देशनेतृभिरेकान्ततः समुपेक्ष्यमाणेयमिदानीन्तनी संस्कृतशिक्षा तु शिक्षितानां संस्कृतपण्डितानामेव मुखान्यवलोकयति। एतैरेवेयं संशोध्यताम्, परिष्क्रियताम्, देशकालविरोधिनीं गतिमाश्रित्य सांप्रतमिवाधो गच्छन्ती पातालं वा प्रवेश्यतामिति त एव सर्वात्मनात्र प्रभवः, राजतन्त्रस्य राष्ट्रतन्त्रस्य चैतद्विमुखत्वात्। ततश्च संस्कृतपण्डितानामेव ध्यानं विषयेऽत्र समाक्रष्टुं ममायं क्षुद्रः प्रयासः। न च निदानमविवि-

एडलस्य शिक्षागुरुपदं कदाचिदध्यतिष्ठदिति बहुभिः प्रमाणैः प्रसिध्यति, पक्षपातविधुराश्च बहवो वैदेशिका अप्येतदभ्युपगच्छन्ति। भारते च चिरादेव शिक्षा संस्कृतभाषाधारेण प्रचलति स्म। संस्कृतमेव जगति सर्वादिभूता भाषेति निष्पक्षमालोचयद्भिर्बहुभिरेव सिद्धान्तितम्। भारतस्येयमादिभूता भाषेत्यत्र तु न कस्यापि सुधियो विवाद उदयेत। भारतप्रचलिताः सर्वा अपि भाषाः संस्कृतादेव लब्धजन्मानः। उद्भूतास्वपि च कालक्रमेण विविधभाषासु शिक्षाया भाषा संस्कृतमेवात्र प्रतिष्ठिताभूदिति विवेचितं मयान्यत्र। तदित्थमतिपुरातने काले शिक्षापदं संस्कृतशिक्षापदं च न विभिन्नार्थतां व्यगाहतामित्युक्तिर्नात्युक्तिकोटिमवगाहते। तत एव यावत्यः सन्ति शक्तयो मनुष्ये विकाससापेक्षाः, तासां सर्वासामेव विकासनोपायाः सुरभारत्यां प्रतिष्ठिताः। चतुर्विधपुरुषार्थसाधनीयं संस्कृता वाक् सुरेन्द्रादिपदतृणीकारदक्षं परं वैराग्यं यथा स्वीये क्रोड आदर्शयति, तथा साम्राज्यपरिचालनप्रवणान् राजधर्मान्, विलासैकलक्ष्याणि कामशास्त्राण्यपि च रक्षति। प्रतिपदं विशुद्धान् सदाचारान् प्रतिदिशं प्रवाहयन्त्यपि तत्तत्कालविशेषोपयोगिनीं कणिकनीतिमपि न न पुष्णाति। मनोवाक्कर्मणामैकरूप्यं माहात्म्यमभिमन्यमानापि वाराङ्गनामिवानेकरूपां नृपनीतिमनुमोदत एव। अहिंसाप्रतिष्ठां शिरसि स्थापयन्त्यपि युद्धकौशलं ख्यापयन्ती न पश्चात्पदतामालम्बते। विद्याप्रवणापि कलाविस्तारमक्षुण्णं रक्षति। राजभक्तिपारायणपरापि प्रजानामधिकारमुच्चैर्जोघुष्यते। किंवा विस्तरेण-देशकालपात्रादिभेदेन यस्या यस्याः शक्तेरुपयोग आवश्यकस्तस्याः सर्वस्या अपि यथोचितं विकाससामग्री संस्कृतभारत्यां परिपूर्णा परिदृश्यमाना अस्या एव शिक्षाधूर्वहत्वं स्फुटमभिव्यञ्जयति। तत्संस्कृतशिक्षापद्धतिविवेचनमेव मानुषशिक्षापद्धतिविवेचनं भवेदिति नात्र संशयावसरः।

## शिक्षा पद्धतिः

सैव ननु शिक्षापद्धतिर्भवेदभ्युदयाय मानवसमाजस्य, या ज्ञानशक्तिं विकासयन्ती, क्रियाप्रवणतामपि चाराधयन्ती द्वयोर्ज्ञानक्रिययोः सामञ्जस्यमक्षुण्णं रक्षेत्, ज्ञानं यत्र क्रियायामुपयुज्येत, क्रिया च ज्ञानानुकूलतां न जह्यात्-सैव खलु शिक्षा शिक्षा नाम। ये नाम केवलमुदरदरीपरिपोषणमात्रं शिक्षालक्ष्यं प्रतिष्ठापयितुमीहन्ते, ते मानुषानपि पशुभ्योऽनतिविशिष्टान् सम्पादयितुमभिलषन्तः शिक्षामपि गौरवाद् ध्वंसयन्ति। ये चापि लोकातिगत्वसम्पादनाय शिक्षामाद्रियन्ते, तेऽपि मनुष्याणां सामाजिकत्वमाच्छिन्दन्तः पुरग्रामादीनरण्यतां नेतुमुत्सुका इति न समाजस्य हितचिन्तकाः। अस्माकं प्राक्तनी खलु शिक्षापद्धतिर्ज्ञानकर्मणोः सामञ्जस्यमेव लक्ष्यीचकार। 'शिक्षिता अप्याचारहीनाः' इति योग्यताविरहितमिदं वाक्यं नार्थप्रत्यायकमभूज्जनपदेऽस्मिन्। 'कोटधीशा धनकुबेरा अप्यक्षरशून्याः' इत्यपि च नासीत्कल्पना पुरातनेषु। 'जग-

तः शुभम्, समुच्छेदो वानेन संभवेत् इत्यविचार्यैव नवनवयन्त्राद्याविष्कारप्रवणता न शिक्षितास्मत्पूर्वजैः। अधिगततत्त्वैश्चापि तैर्नारण्यमेवाश्रीयते स्म, अपि तु त एव जगद्विजयिन 'अष्टादशद्वीपनिखातयूपाः' दिगन्तप्रापितपण्या वा आसन्निति नैतत् परोक्षं भारतेतिहासविदाम्।

इयं तु संस्कृतशिक्षणपद्धतिर्यदवधि मानवसमाजहस्तादाच्छिन्ना, ततः प्रभृत्येव शिक्षापदार्थदुरवस्था सर्वतोमुखी जगति प्रवृत्ता, तस्यैव च क्रमिकः परिणामोऽद्य दृग्गोचरीभवति। कियतः कालात् कैः कैर्वा हेतुभिः कथं कथं परिवर्तनानि शिक्षायामभूवन्निति नायमर्थः सुविवेचः, न चैतावतो विस्तारस्येह स्थानमस्ति। दुर्दैवादापतितया परतन्त्रतया तु देशेऽस्मिन् शिक्षाया महती दुरवस्था कृतेति सुस्पष्टं शक्यते वक्तुम्। न खलु विजेतारो विजितान् विशिष्टशक्तिसम्पन्नान् द्रष्टुं क्षमन्ते, तत एव च ते शक्तिग्रहोपायांस्तेषां विध्वंसयन्तीति स्वाभाविकोऽयमर्थः। अनेनैव व्यतिकरेण स्वभाषानुरागोऽप्येषां विनाशितः, स्वीया शिक्षापद्धतिरपि चैषां हस्तादाच्छिन्ना। स्वसभ्यतां भारतीयेषु प्रवर्तयितुं स्वोपयोगिनश्चैतान् विधातुं स्वस्वभाषा विजेतृभिः शिक्षाक्षेत्रे प्राधान्यं लम्भिताः। स्वोपयोगमात्रकृते चैते शिक्षितास्तैः, न तु वस्तुतो हितमेषामनुध्याय। तत एवाद्येयं प्रचलति भारते शिक्षा, न सा शिक्षापदाभिलप्या कथमपि सम्भवतीति सर्वे एव विचारका अभ्युपगच्छन्ति। विद्वांसो नेतारस्तामेतां पद्धतिं परिवर्तयितुमपीहन्ते, परं चिराच्छिक्षापथपरिभ्रष्टानां भारतीयानामद्य शिक्षापदार्थव्यामोह इव तथा सम्पन्नो यथा शिक्षालक्ष्यमप्येतैर्विस्मृतमित्र। इदानीं 'वर्धास्कीम' नाम्ना यदिदं प्रवर्तते शिक्षापरिष्कारान्दोलनम्, तद्दर्शनेन पूर्वोक्तं प्रस्फुटीभवति विवेचकानाम्। अत्र हि परिष्कारे न स्वसंस्कृतिरक्षा लक्ष्यीक्रियते, न स्वभाषायाः स्वसाहित्यस्य वा गौरवं विचारपथमानीयते, धर्मस्य तु कथैव दूरापास्ता, सामाजिकविज्ञानानुरोधिनी समाजरक्षणप्रवणा नीतिरपि नाद्रियते, केवलं कथंचिदुदरदरीचिन्ता सर्वतोमुखी समालोच्यतेऽत्र परिष्कारान्दोलने प्रसरन्ती, सापि तु क्रमेणानेन समाहिता स्यान्न वेति वेदैतद्भगवानेव। यतो हि सर्वेऽपि यदि देशे स्युः शिल्पिनः, तर्हि शिल्पघटितवस्तूनां क्रेता को नाम भवतु? कुतश्च शिल्पिभिरुदरचिन्ताशान्तये द्रविणं लभ्यतामित्याद्या दुःसमाधेयाः प्रश्ना अत्राविर्भवन्तीति। आस्तामिदमरण्यरुदितम्, शिक्षापरिष्कर्तृभिर्देशनेतृभिरेकान्ततः समुपेक्ष्यमाणेयमिदानीन्तनी संस्कृतशिक्षा तु शिक्षितानां संस्कृतपण्डितानामेव मुखान्यवलोकयति। एतैरेवेयं संशोध्यताम्, परिष्क्रियताम्, देशकालविरोधिनीं गतिमाश्रित्य सांप्रतमिवाधो गच्छन्ती पातालं वा प्रवेश्यतामिति त एव सर्वात्मनात्र प्रभवः, राजतन्त्रस्य राष्ट्रतन्त्रस्य चैतद्विमुखत्वात्। ततश्च संस्कृतपण्डितानामेव ध्यानं विषयेऽत्र समाक्रष्टुं ममायं क्षुद्रः प्रयासः। न च निदानमविवि-

च्य चिकित्सा हितकरी भवतीति सांप्रतिकशिक्षादुरवस्थितेर्मूलमेवाहं स्वमत्या मनागन्वेषयामि ।

मद्विचारे सांप्रतिकशिक्षापद्धतेर्निरुद्देश्यतैव सर्वानर्थमूलं प्रतीयते । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति संस्कृतशिक्षैवास्मान् शिक्षयति । परमद्यत्वे किं प्रयोजनमुद्दिश्य शिक्षार्थिनां संस्कृतशिक्षायां प्रवृत्तिरिति विचार्यमाणे विषये न किमपि प्रतिभासते । 'या लोकद्वयसाधनी .....सा चातुरी चातुरी' इत्युक्तमभियुक्तैः, आस्तां द्वयम्, इह त्वेकोऽपि लोकः साध्यमानो न प्रतीयते । 'संस्कृतपण्डिता लौकिकज्ञानशून्या भवन्ति' इत्येषामैहलौकिकसिद्धिविरहे सर्वतोमुखो जनानां घण्टाघोषः । नाप्यद्यत्वे संस्कृतच्छात्रास्तपस्विनो निःस्पृहा धर्मैकान्ता वाभिलक्ष्यन्त इति पारलौकिकी सिद्धिरपि कथमनुमीयताम् । यश्च शक्तिसंग्रहेच्छारूपः शिक्षापदार्थ इह प्रतिपादितः, तदनुकूलं का वा शक्तिरद्यतन्या संस्कृतशिक्षापद्धत्या विकासं नीयते-इत्यपि दुरुत्तर एव प्रश्नः । 'नास्ति राजाश्रयः, तत एव न प्राप्यन्ते संस्कृतपण्डितैरुन्नतिसाधनानि' इति पराधीनेयं कथा तावत्तिष्ठतु, अनया शिक्षाप्रणाल्या का शक्तिः कार्योपयोगिन्यस्मास्वाविर्भवति, कीदृशं च ज्ञानं वयं संचिनुमहे, तच्च कियदुपयोगीत्येव तावद्विचार्यतां समुत्सृज्य पक्षपातम् । व्याकरणं न्यायश्चेत्यद्यत्वे प्राधान्येनोच्चशिक्षाविषयौ प्रथेते । तत्र व्याकरणेन साध्यं प्रथमं भाषाज्ञानम्, तत्त्वावश्यकमेव, कथंविधं तत्सम्पद्यते-इति नात्रेदानीं विवदामहे, यादृशं तादृशं वा मध्यमशिक्षापर्यन्तं तत्समाप्यते ।

अग्रे तु यदधीयते, तस्यैतावानेव सारः- यत्पाणिनिप्रणीतानि सूत्राणि न मनागपि परिवर्तयितुं शक्यन्ते । तानि यथा निबद्धानि तथैव समुचितानि । सर्वानपि टीकाग्रन्थानधीत्य इतोऽन्यत्किमपि विज्ञायते चेत्, बोधयन्तु मां महान्तो विद्वांसः । मान्याः ! नाहं ब्रवीमि, मिथ्यैतदस्माभिः शिक्षितमिति. सुसत्यम्, दृढसत्यम्, सहस्रकृत्वो लक्षकृत्वः सत्यमिदमास्ताम्, परमेतेन विज्ञातेन किमस्माकं सिद्धम् ? किं वा षड् वर्षाण्यष्टौ वर्षाणि द्वादश वर्षाणि परिश्रम्यास्माभिर्लब्धम् ? कं वा लोकस्योपयोगमनेन ज्ञानेन साधयिष्यामः ? कस्य वा विज्ञानस्य कृते लोकोऽस्मास्वादरं दर्शयतु ? यस्मिन् हि काले ऐन्द्रादीनि व्याकरणानि दृढं प्रतिष्ठितान्यासन् देशे, पाणिनीयं च नूतनमिति न लोकस्य श्रद्धास्पदमभूत्, तदा पूज्यपादैराचार्यैः श्रीपतञ्जलिप्रभृतिभिरस्यानर्घ्यस्य प्रतिष्ठां द्रढयितुमियं पद्धतिः प्रवर्तिता, स्थूणानिखननन्यायेन प्रत्येकं पदं सूत्राणां परीक्षितं विवेचितं च । विविच्य च सिद्धान्तितम्-'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म, तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण' इति । तैः साफल्यमपि लब्धम् । पूर्वाणि व्याकरणानि निष्प्रभाणि भूत्वा विलोपं गतानि, पाणिनीयस्य च प्रतिष्ठा न केवलं भारते, सर्वस्मिन्नपि भूमण्डले सुदृढं

प्रासरत्। तदेवं तस्मिन् काले विषयोऽयमुपयुक्त आसीत्। परमद्यत्वे तु न कोऽपि पाणिनीयप्रतिद्वन्द्वी, अन्यभाषासाहित्यविदोऽपि 'न बभूव पाणिनिसदृशः कोऽपि व्याकरणनिर्माता भूमण्डले' इति शिरसैतत्स्वीकुर्वन्ति। तदिदानीं सूत्रेऽस्मिन्निदं पदमस्तु-इदं मास्तु-यथान्यासमेवास्तु-इत्येवंविधेषु विचारेषु जीवनयापनस्य किं प्रयोजनमिति नास्मद्बुद्धौ समारोहति। तथैव न्यायेऽपि 'घटत्वेन पटो नास्ति' 'पूर्वक्षणवृत्तित्वविशिष्टघटाभाव इदानीं नास्ति' इत्याद्या उत्थाप्य-शङ्काः (याः स्वप्नेऽपि एतद्ग्रन्थाध्ययनरहितस्य बलवत्प्रतिभस्यापि मनसि कदापि नोदयमासादयेयुः) बलात्समुत्थाप्य तन्निराकरणाय स्वशास्त्रपरिभाषामात्रसिद्धानामप्रसिद्धानां कल्पनामात्रसाराणां पदानां लक्षणेषु सन्निवेशेन तदपनयननाटनमित्येतावन्मात्रे शिक्षासमाप्तिः। एतेनापि स्वशास्त्रपरिभाषाज्ञानातिरिक्तं किं प्रयोजनं सिद्ध्यति? कल्पितपरिभाषामात्रज्ञानाय चामूल्यस्य मानुषजीवनस्य समर्पणं कियदुचितं भवतीत्यपि विद्वद्भिर्दरमुकुलितनेत्रं निध्यातव्यम्। लक्षणानामुपयोगः खलु पदार्थपरिचये। तत्र चाव्याप्त्यतिव्याप्त्यादिशङ्का सैव समाधेया भवति या स्वयं विवेचकस्य मनसि समुपतिष्ठेत्। एवंविधा एव शङ्काः समाधातुं प्राचीनन्यायग्रन्थेषु कृतः प्रयत्नः। परमद्यत्वे यदर्थं लक्षणानि, स वस्तुपरिचयो मनागपि न भवति, लक्षणेषु च बलादाकाङ्क्षाः समुत्पाद्यन्त इति किं तत्समाधानेन सिद्धं स्यात्। विवेचनस-

राजपण्डितेन श्रद्धाभाजनेन प्रियसुहृदा सुप्रसिद्धेन विदुषा म. म. त. गणपतिशास्त्रिमहाभागेनैकदा शिक्षाया दुरवस्थां वर्णयतोक्तम्-'षट्सु दर्शनेष्वन्यतमं न्यायशास्त्रम्, तत्र प्रतिपाद्यमानेषु षोडशसु पदार्थेष्वन्यतमः प्रमाणपदार्थः। तस्य चतसृषु विधास्वन्यतममनुमानम्, तस्यापि द्वैविध्ये एकस्य पञ्चावयवाः, तत्रैकतमो हेतुः, स एव दुष्टः सन् हेत्वाभास उच्यते। तस्य हेत्वाभासस्य लक्षणमात्रं ये परिष्कर्तुं जानन्ति त एवात्र महान्तो विद्वांस उच्यन्ते।' महाभागाः! किं नेदं सत्यम्? अप्युपयोगिनी उद्देश्यसाधिका च शिक्षापद्धतिरियम्? तथैव काव्यसाहित्याद्यध्ययनेनापि भाषाज्ञानातिरिक्ता कार्योपयोगिनी कापि शक्तिर्विकासमापद्यमाना न लक्ष्यते। वाक्पाटवमेताभिः शिक्षाभिः सिद्ध्यतीति चेत्, तद्विषये ओमिति ब्रूमः। इदानीमपि विवेचनवाक्पाटवं यावत्संस्कृशिक्षितैरवाप्यते, न तावद्भाषान्तरविद्भिः। विवेचनरूपायां शास्त्रार्थपद्धतावद्यापि भाषान्तरपण्डिताः संस्कृतपण्डितेभ्यो बिभ्यति, परं केवलं वाक्पाटवसम्पादनं शिक्षाया नोद्देश्यं भवितुमर्हति, न च तावता स्वोन्नतिः, समाजोन्नतिः, देशोन्नतिर्वा साधयितुं शक्यते। प्रज्ञापरिष्कारोऽप्येवंविधेन विचारेण सिद्ध्यतीतिचेत्, सम्यगुक्तं भवद्भिः। किन्तु यादृशा अर्थाश्चिन्त्यन्ते, तादृशेष्वेव प्रज्ञा पाटवं लभते। तद्ये विषयाः स्वभावेनैवानुपयोगिनः, तेषु पाटवमासाद्यापि प्रज्ञया किं क्रियताम्? तद्दूरं सा उपयो-

X इमे नातीव ... सन्दर्भोद्धाराः । अप्रयोजका इति स्वल्पं वचः।

गिष्वेव विषयेषु पाटवं लम्भनीया, न केवलं वाक्शूरतापादकेषु । अर्थविषयिणी कापि शक्तिर्यदि प्रज्ञायां नारूढा, तर्हि केवला शब्दविन्यासशक्तिः किं वा करोतु ? अस्माकं पूर्वजैः सुबहु परिश्रम्य यज् ज्ञानमर्जितम्, तस्य संरक्षणमेव संस्कृतशिक्षाया उद्देश्यं केचन विद्वांसो मन्यन्ते । अवश्यं सुश्लाघ्यमिदम्, कृतज्ञताया लेशमपि वहन् क एतन्नानुमन्यताम्। परतन्त्रतामाप्ते भारते विजेतृभिः स्वीयभाषासु बलादत्र प्रवर्तितासु, राजकार्यव्यापारादिकार्येषु च तास्वेव प्राधान्यं गतासु स्वसंस्कृतिपक्षपातिभिर्ब्राह्मणैरनेनैवोद्देश्येन संस्कृतशिक्षा परिचालिता, परिचाल्यते चेति सत्यम् । परं नेदमुद्देश्यं सुस्थिरं चिरकालावस्थायि वा भवितुं शक्नोति । यावद्धि ज्ञानस्य क्रियया संबन्धो न भवेत, तावद्दुष्करं तस्य संरक्षणम्। तज् ज्ञानं किमपि कर्तुं यदि शक्तिं ददाति, तर्हि अवश्यं सुरक्षितं भविष्यति । न चेद्ददाति, अस्माकं जीवनसमर्पणेनापि न सम्भवति चिराय तद्रक्षेति भूयो भूयः सम्यक् समालोच्यताम् । न ममायमभिप्रायो यदस्मत्पूर्वजानां ज्ञानं क्रियानुपयोग्येव, तत्तु सर्वथा सर्वक्रियोपयोगि, किन्तु दैवप्रातिकूल्येन शिक्षादोषेण च तस्य क्रियोपयोगः कदर्थित इत्येव ममाभिप्रायः। स्फुटीभविष्यति चायमुपरिष्टात् । अलमतिमात्रमिहेदं प्रपञ्च्य, संक्षेपेण सारोऽयं वक्तव्यस्य, यत् प्रचलितसंस्कृतशिक्षाया उद्देश्यं किमपि व्यवस्थितं नोपलक्ष्यते-इतीयं महती दुरवस्था । निरुद्देश्यं च कार्यं न व्यवस्थितं प्रचलति, बहवस्तत्र दोषाः पदं लभन्ते । तदस्माकं संस्कृतशिक्षापद्धतावपि बहुभिर्दोषैः स्थितिर्लब्धा । तेऽन्ये दोषा अपि च संक्षेपेणेह विविच्यन्ते । दोषनिरूपणेन सहैव च स्वमत्या प्रतिभासमानस्तदपनयोपायोऽपि संक्षेपेण विवरिष्यते विदुषां विचारधाराप्रवृत्तये 'पूर्वरङ्गः प्रसङ्गाय नाटकीयस्य वस्तुनः' इति न्यायमवलम्ब्यैव ।

## प्रथमो दोषः

अर्थदृष्टेः सर्वथैवाभावः केवलशब्दप्रवणत्वमेवास्माकं वर्तमानायां शिक्षापद्धतौ प्रथमः प्रबलो दोषः। पुराऽस्मिन् भारते अर्थदृष्टेः प्राधान्यं परित्यज्य शब्दमात्रप्रवणता शिक्षाया महान् दोषः परिगण्यते स्म ।

X 'स्थाणुरयं भारहारः किलाभूद-
धीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ।"

"ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा
अधिविश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति ",

इति सर्वप्राथम्यं भजन्त्यां भगवत्यामृग्वेदसंहितायामेव शब्दप्रवणता सुनिपुणमधिक्षिप्ता । उपनिषत्स्वपि-"सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् । सोहं भगवः शोचामि ।" इति भगवन्तं सनत्कुमारं प्रति सर्वविद्यानिधानत्वमात्मनः प्रख्यापयन्नपि भगवान् नारदः शिक्षायाः शब्दप्रवणतां भृशं निनिन्द । 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति, अविज्ञातं विज्ञातं भवति ।' इत्यादि श्वेतकेतुं प्रति पृच्छँस्तत्पिता महर्षि-

रुद्दालकोऽपि चार्थप्रवणया दृष्ट्या मननं प्रशंसति, शब्दमात्रप्रवणां च दृष्टिमपूर्णां प्रख्यापयति। मनसोऽन्नमयत्वादिकं चोद्दालक उपवासैः श्वेतकेतुं प्रबोधयति, तदेतदर्थप्रवणताद्दृष्टेर्मूर्धाभिषिक्तमुदाहरणं विज्ञेयम्। 'पण्डितो मेधावी गन्धारानेवोपसम्पद्येत-एवमेवेहाचार्यवान् पुरुषो वेद।' इत्यादिषु प्रकरणेषु चार्थदृष्टिः सम्यक् प्रस्तूयते, अनुभवावसानाया एव च विद्याया अविद्यानिवर्तकत्वं सर्वत्र प्रख्याप्यते। एवं विदुषां विवादप्रसङ्गे विचारप्रसङ्गे कथोपकथनप्रसङ्गेपि वा अर्थप्राधान्यमेव शिक्षायाः स्फुटमनुमीयते। छान्दोग्ये 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, तां चेदविद्वान् प्रस्तोष्यसि, मूर्धा ते विपतिष्यति' इत्याद्युषस्तेश्चाक्रायणस्येभ्यग्रामराजयज्ञे विचारः, बृहदारण्यके जनकयज्ञसभायां भगवता याज्ञवल्क्येन सहाश्वलादीनाम् 'यदिदमन्तरिक्षमनारम्भणमिव; केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते' इत्यादिः प्रश्नोत्तररूपो विवादः;

'कः स्विदेकाकी चरति क उ स्विज्जायते पुनः।
किं स्विद्धिमस्य भेषजं किं वा वपनं महत्'
'सूर्य एकाकी चरति चन्द्रमा जायते पुनः।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत्'.

'पृच्छामि त्वा परमन्तं पृथिव्याः
पृच्छामि यत्र भुवनस्य नाभिः।
पृच्छामि त्वा वृष्णो अश्वस्य
रेतः पृच्छामि वाचः परमं व्योम।

इत्यादीनि यजुःसंहितायाः कथोपकथनादीनि चैतदुदाहरणार्थं सावधानमालोच्यानि। पुराणादिष्वपि च यत्र कुत्रापि शिक्षाप्रसङ्गः विदुषां परस्परं कथोपकथनप्रसङ्गो वा, तत्र सर्वत्रार्थप्रवणतैव दृश्यते। तथा हि श्रीमन्महाभारते वनपर्वणि अनेकमहीपतिविराजितायां महाराजजनकसभायामष्टावक्रवन्दिनोः शास्त्रार्थः प्रसह्य चित्तावर्जकः सञ्जातः। तत्र वादे जितं प्रतिवादिनं जले निमज्जयति बन्दीति श्रुत्वा जातकौतूहलो ब्रह्मनिष्ठो भगवानष्टावक्रस्तज्जिगीषया, सभां गच्छन् अत्यल्पवयस्कतया दौवारिकैः सभां प्रवेष्टुं प्रत्यादिष्टोऽपि अविरलचमत्कारोद्गिरा गिरा महाराजं जनकं प्रसाद्य तेन प्रतिपूजितो दर्शकैर्हर्षोत्फुल्ललोचनैर्निरीक्षितः सभां प्रविवेश। प्रविष्टमेव च शास्त्रार्थाय वारं वारं निर्भीकमाह्वयन्तमपि अल्पवयसं बालचापल्यादुपेतं मत्वा मृत्युमुखात्प्रमोचयितुं विभीषयन्नाह वन्दी–

व्याघ्रं शयानं प्रति मा प्रबोध
आशीविषं सृक्किणी संलिहानम्।
पदाहतस्येह शिरोभिहस्य
नादष्टो वै मोक्ष्यसे तन्निबोध।

परमेताभिर्विभीषिकाभिर्यदा स नाबिभ्यत्तदा-
'उक्ते वाक्ये चोत्तरं मे ब्रवीहि,
वाक्यस्य चाप्युत्तरं ते ब्रवीमि'

इति सञ्जातसंविदोस्तयोरधोनिर्दिष्टक्रमेणोत्तरादुत्तरं वाक्यं यथा प्रववृते तत्पाठकानां मनोविनोदाय इहोद्ध्रियते–

बन्द्युवाच,–
एक एवाग्निर्बहुधा समिध्यते
एकः सूर्यः सर्वमिदं विभाति।
एको वीरो देवराजोऽरिहन्ता
यमः पितृणामीश्वरश्चैक एव॥

+ अत्र द्वितीयैव युक्ता, प्रवततेः सकर्मकत्वात् ।

अष्टावक्र उवाच—

द्वाविन्द्राग्नी चरतो वै सखायौ
द्वौ देवर्षी नारदपर्वतौ च ।
द्वावश्विनौ द्वे रथस्यापि चक्रे
भार्यापती द्वौ विहितौ विधात्रा ॥

बन्द्युवाच—

त्रिः सूयते कर्मणा वै प्रजेयं
त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिसवनानि तन्वते
त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥

अष्टावक्र उवाच—

चतुष्टयं ब्राह्मणानां निकेतं
चत्वारो वर्णा यज्ञमिमं वहन्ति ।
दिशश्चतस्रो वर्णचतुष्टयं च
चतुष्पदा गौरपि शश्वदुक्ता ॥

एवमेव प्रतिश्लोकं सङ्ख्यावृद्धिक्रमेण पदार्थगणनाप्रधाने प्रतिहतवाक्यबन्धप्रवाहेऽनयोरुत्तरप्रत्युत्तरप्रचारे त्रयोदशीं संङ्ख्यामुपेते वन्दिनः पराजयो विजयश्चाष्टावक्रस्य करगतो बभूव । तद्यथा—

बन्द्युवाच—

त्रयोदशी तिथिरुक्ता महोग्रा त्रयोदशद्वीपवती मही च

लोमश उवाच—

एतावदुक्त्वा विरराम बन्दी
श्लोकस्यार्द्धं व्याजहाराष्टवक्रः ।

अष्टावक्र उवाच—

त्रयोदशाहानि ससार केशी
त्रयोदशादीन्यतिच्छन्दांसि चाहुः ।

लोमश उवाच

ततो महानुदतिष्ठन्निनादस्तूष्णींभूतं सूतपुत्रं निशम्य ।
अधोमुखं ध्यानपरं तदानीमष्टावक्रं चाप्युदीर्यन्तमेव ।

इत्यादिशास्त्रार्थशैलीयं पर्यालोच्या विद्वद्भिः ।

शब्दशास्त्रनाम्ना ख्यातस्य व्याकरणस्यापि महाभाष्यकारो भगवान् पतञ्जलिः "शब्दैरेव शब्दानाचष्टे भवान्" इत्यनेकत्र पर्यायमात्रेणार्थं व्याचिख्यासन्तं प्रतिवादिनमुपहसति । भगवतो जैमिनेश्चायं सुप्रसिद्धो घण्टाघोषः—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' मी० सू० १-२-१ सर्वं ज्ञानं क्रियार्थमेव भवतीति तद्वचःसारः । स्मृतिकृन्मूर्द्धन्येन भगवता मनुनाप्युक्तम्—

फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादनम् ।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥

नीतिमुपदिशता च केनचिद्विशिष्टप्रज्ञेनोपदिष्टम्—'शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान् पुरुषः स विद्वान् ।' आस्तां विस्तरः—शब्दमात्रशिक्षाऽस्माकं पूर्वजैर्न कदाप्याहृतेति निदर्शनैरेभिः स्फुटीभवति । परमस्माकं दौर्भाग्याच्चिरादेवास्मिन् देशे शब्दप्राधान्यं शिक्षापद्धतौ स्वावासं चकार । न जानीमः कीदृशः स आसीद्देशसौभाग्यापकर्षको दुरदृष्टसमयः यदा शिक्षापद्धतिरस्माकं शब्द+प्रवणतापथे अवततार । अद्य तु परीक्षायुगे आरम्भादेव शब्दमात्रमेव शिक्षायां प्रधानम्, अर्थदृष्टिस्तु दूरापास्तैव । संस्कृतभाषां परिचेतुं प्रवृत्त एव च्छात्रो यदा 'अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः ।' इतिवाक्यमधीते, स केयं शाल्मलीति यदि जातकौतुकः गुरुं पृच्छति, तदा 'वृक्षविशेषः' इत्येवोत्तरं लभते, न त्वितोऽधिकं शाल्मल्याः परिचयं प्रायेणासादयति । 'कर्णिकार'शब्दस्याभिधेयं जिज्ञास-

मानश्च 'पुष्पविशेषः' इत्येवोत्तरं लभते। किं-यद् वदामः, कोषमपि योऽधीते सोऽपि धान्यविशेषः, फलविशेषः, पशुविशेषः, पक्षिविशेषः इत्यादीनेव शब्दान् शृणोति, न तु वस्तुतस्तत्तदभिधेयान् पदार्थान् परिचिनोति। जगति च यानि वस्तून्यवलोकयति तद्वाचकान् संस्कृतशब्दान् न जानाति। 'लोमड़ी' इति प्रसिद्धो जन्तुः संस्कृतभाषायां केन शब्देनाभिधीयते हंसकारण्डवादिपदाभिधेयाश्च के सन्ति पक्षिणः ? इति भाग्यवन्तः केचन परिचिता भवेयुरेव। भाषान्तरविद्यालयेषु वस्तुपाठविधिश्चिरादाद्रियमाणोऽवलोक्यते। प्राथमिकशिक्षायां प्रवृत्तमात्रस्य कृते तत्र शतशश्चित्राणि पुरतः स्थाप्यन्ते, यदा कस्यचित् शब्दार्थ-जिज्ञासा स्यात् सा तदभिधेयचित्रदर्शनेनापनीयते, न तु 'उष्ट्रः कश्चित्पक्षिविशेषः' इति स्वप्नावस्थाप्रलापमात्रेण। तत एव ताः सन्ति जीविता भाषाः। 'संस्कृतं मृतभाषा' इति पाश्चात्यानां शब्दोऽस्माकं श्रवणविवरेषु सत्यं शूलायते, परं यदा वयं संस्कृतेन व्यवहर्तुं प्रवृत्ता भवामस्तदा, 'इदं ढकोलापदवाच्यमतिविशालम्' सुष्ठुतरं 'जलेबीपदवाच्यं' मया भक्षितम्, इत्यादीनि शब्ददारिद्र्यख्यापकानि वाक्यान्येव प्रयोक्तुं विवशीभवामः। किमन्यत, 'अद्य तु अस्माकं पेटे दरदो वर्तते' इत्यादिवाक्यानि संस्कृतसमाचारपत्राण्यपि प्रकाशयन्ति। हन्त !!! अनयैवापरिचयविशृङ्खलया आयुर्वेदे तथाविधो विप्लवः प्रवृत्तो यदेकस्मिन् देशे रास्नादिपदैर्यदौषधं गृह्यते, ततोऽतिविलक्षणं किमप्यन्यदेवान्यस्मिन् देशे। धर्मशास्त्रेऽपि च 'गृञ्जनं लोहितं लशुनानुकारि कन्दविशेषः' इति प्रामाणिकीं व्याख्यामवलम्ब्य केषुचिद्देशेषु शिष्टा 'गाजराख्यं' कन्दं भक्षयन्ति, अपरेषु तु देशेषु कैश्चिन्निबन्धकृद्भिः 'गृञ्जन' पदव्याख्यायाम् 'गाजर' इति प्रसिद्धमिति लिखितं विलोक्य गाजराख्यं कन्दमभक्ष्यं शिष्टा आकलयन्ति। धर्मनिबन्धेषु व्रते वर्जनीयतया ये क्षारा उक्ताः, तेषां सम्यक् परिचयं बहवो विद्वांसः पृष्टाः परमाधिक्येन निराशैव तत्राजायत। पञ्चनदप्रदेशं पञ्चालपदेन, मद्रासप्रान्तं च मद्रपदेन व्यवहरन्तो बहवो विद्वांसोऽवलोकिताः, यद्विचारदृष्ट्योपहासास्पदं लज्जास्पदं वा। मान्याः ! विचार्यतां मनाक् या शब्दार्थमपि न सम्यक् परिचाययेत्, सापि किमु शिक्षा ? अशिक्षा नाम तर्हि का भवतु जगति ?

इयं प्राथमिक्याः शिक्षाया दशा। अथ सौभाग्यादग्रे चलितोऽपि छात्रो मध्यमायामुत्तमायां वापि शिक्षायां प्रकृतिसात्म्यमाप्तमिदं शब्दप्राधान्यं न जहात्येव। केवलं परीक्षोत्तरणसमुत्सुका ये सहस्रशश्छात्राः काव्यपाठे पर्यायशब्दान् केवलं रटन्ति, अभिप्रायन्त्वेकस्यापि पदस्य नोद्घाटयितुं प्रभवन्ति तेषां कथा तु त्यज्यताम्, परं व्युत्पन्नतया परिगण्यमानेष्वपि छात्रेषु रघुवंशे रघोर्दिग्विजययात्रायां वर्णिता देशाः के ? इन्दुमतीस्वयंवरे इदानीं कैर्नामभिः परिचितेभ्यो देशेभ्यो राजानः समागताः ? इति

+ अत्र द्वितीय मुद्रा, अवततरते: स्वकर्मकत्वात् ।



अष्टावक्र उवाच—

द्वाविन्द्राग्नी चरतो वै सखायौ
द्वौ देवर्षी नारदपर्वतौ च ।
द्वावश्विनौ द्वे रथस्यापि चक्रे
भार्यापती द्वौ विहितौ विधात्रा ॥

बन्दुवाच—

त्रिः सूयते कर्मणा वै प्रजेयं
त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिसवनानि तन्वते
त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥

अष्टावक्र उवाच—

चतुष्टयं ब्राह्मणानां निकेतं
चत्वारो वर्णा यज्ञमिमं वहन्ति ।
दिशश्चतस्रो वर्णचतुष्टयं च
चतुष्पदा गौरपि शश्वदुक्ता ॥

एवमेव प्रतिश्लोकं सङ्ख्यावृद्धिक्रमेण पदार्थगणनाप्रधाने प्रतिहतवाक्यबन्धप्रवाहेऽनयोरुत्तरप्रत्युत्तरप्रचारे त्रयोदशीं संङ्ख्यामुपेते वन्दिनः पराजयो विजयश्चाष्टावक्रस्य करगतो बभूव । तद्यथा—

बन्दुवाच—

त्रयोदशी तिथिरुक्ता महोग्रा त्रयोदशद्वीपवती मही च

लोमश उवाच—

एतावदुक्त्वा विरराम बन्दी
श्लोकस्यार्द्धं व्याजहाराष्टवक्रः ।

अष्टावक्र उवाच—

त्रयोदशाहानि ससार केशी
त्रयोदशादीन्यतिच्छन्दांसि चाहुः ।

लोमश उवाच

ततो महानुदतिष्ठन्निनादस्तूष्णींभूतं सूतपुत्रं निशम्य ।
अधोमुखं ध्यानपरं तदानीमष्टावक्रं चाप्युदीरयत्तमेव ।

इत्यादिशास्त्रार्थशैलीयं पर्यालोच्या विद्वद्भिः ।

शब्दशास्त्रनाम्ना ख्यातस्य व्याकरणस्यापि महाभाष्यकारो भगवान् पतञ्जलिः "शब्दैरेव शब्दानाचष्टे भवान्" इत्यनेकत्र पर्यायमात्रेणार्थं व्याचिख्यासन्तं प्रतिवादिनमुपहसति । भगवतो जैमिनेश्चायं सुप्रसिद्धो घण्टाघोषः—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' मी० सू० १-२-१ सर्वं ज्ञानं क्रियार्थमेव भवतीति तद्वचःसारः । स्मृतिकृन्मूर्द्धन्येन भगवता मनुनाप्युक्तम्—

फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादनम् ।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥

नीतिमुपदिशता च केनचिद्विशिष्टप्रज्ञेनोपदिष्टम्—'शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान् पुरुषः स विद्वान् ।' आस्तां विस्तरः—शब्दमात्रशिक्षाऽस्माकं पूर्वजैर्न कदाप्यादृतेति निदर्शनैरेभिः स्फुटीभवति । परमस्माकं दौर्भाग्याच्चिरादेवास्मिन् देशे शब्दप्राधान्यं शिक्षापद्धतौ स्वावासं चकार । न जानीमः कीदृशः स आसीद्देशसौभाग्यापकर्षको दुरदृष्टसमयः यदा शिक्षापद्धतिरस्माकं शब्दप्रवणतापथे अवततार । अद्य तु परीक्षायुगे आरम्भादेव शब्दमात्रमेव शिक्षायां प्रधानम्, अर्थदृष्टिस्तु दूरापास्तैव । संस्कृतभाषां परिचेतुं प्रवृत्त एव च्छात्रो यदा 'अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः ।' इतिवाक्यमधीते, स केयं शाल्मलीति यदि जातकौतुकः गुरुं पृच्छति, तदा 'वृक्षविशेषः' इत्येवोत्तरं लभते, न त्वितोऽधिकं शाल्मल्याः परिचयं प्रायेणासादयति । 'कर्णिकार'शब्दस्याभिधेयं जिज्ञास-

मानश्च 'पुष्पविशेषः' इत्येवोत्तरं लभते। किंयद् वदामः, कोषमपि योऽधीते सोऽपि धान्यविशेषः, फलविशेषः, पशुविशेषः, पक्षिविशेषः इत्यादीनेव शब्दान् शृणोति, न तु वस्तुतस्तत्तदभिधेयान् पदार्थान् परिचिनोति। जगति च यानि वस्तून्यवलोकयति तद्वाचकान् संस्कृतशब्दान् न जानाति। 'लोमड़ी' इति प्रसिद्धो जन्तुः संस्कृतभाषायां केन शब्देनाभिधीयते हंसकारण्डवादिपदाभिधेयाश्च के सन्ति पक्षिणः? इति भाग्यवन्तः केचन परिचिता भवेयुरेव। भाषान्तरविद्यालयेषु वस्तुपाठविधिश्चिरादाद्रियमाणोऽवलोक्यते। प्राथमिकशिक्षायां प्रवृत्तमात्रस्य कृते तत्र शतशश्चित्राणि पुरतः स्थाप्यन्ते, यदा कस्यचित् शब्दार्थ-जिज्ञासा स्यात् सा तदभिधेयचित्रदर्शनेनापनीयते, न तु 'उष्ट्रः कश्चित्पक्षिविशेषः' इति स्वप्नावस्थाप्रलापमात्रेण। तत एव ताः सन्ति जीविता भाषाः। 'संस्कृतं मृतभाषा' इति पाश्चात्यानां शब्दोऽस्माकं श्रवणविवरेषु सत्यं शूलायते, परं यदा वयं संस्कृतेन व्यवहर्तुं प्रवृत्ता भवामस्तदा, 'इदं ढकोलापदवाच्यमतिवृत्ता भवामस्तदा' ... 'इदं ढकोलापदवाच्यमतिविशालम्' सुष्ठुतरं 'जलेबीपदवाच्यं' मया भक्षितम्, इत्यादीनि शब्ददारिद्र्यख्यापकानि वाक्यान्येव प्रयोक्तुं विवशीभवामः। किमन्यत, 'अद्य तु अस्माकं पेटे दरदो वर्तते' इत्यादिवाक्यानि संस्कृतसमाचारपत्राण्यपि प्रकाशयन्ति। हन्त !!! अनयैवापरिचयविशृङ्खलया आयुर्वेदे तथाविधो विप्लवः प्रवृत्तो यदेकस्मिन् देशे राज्ञादिपदैर्यदौषधं गृह्यते, ततोऽतिविलक्षणं किमप्यन्यदेवान्यस्मिन् देशे। धर्मशास्त्रेऽपि च 'गृञ्जनं लोहितं लशुनानुकारि कन्दविशेषः' इति प्रामाणिकीं व्याख्यामवलम्ब्य केषुचिद्देशेषु शिष्टा 'गाजराख्यं' कन्दं भक्षयन्ति, अपरेषु तु देशेषु कैश्चिन्निबन्धकृद्भिः 'गृञ्जन' पदव्याख्यायाम् 'गाजर' इति प्रसिद्धमिति लिखितं विलोक्य गाजराख्यं कन्दमभक्ष्यं शिष्टा आकलयन्ति। धर्मनिबन्धेषु व्रते वर्जनीयतया ये क्षारा उक्ताः, तेषां सम्यक् परिचयं बहवो विद्वांसः पृष्टाः परमाधिक्येन निराशैव तत्राजायत। पञ्चनदप्रदेशं पञ्चालपदेन, मद्रासप्रान्तं च मद्रपदेन व्यवहरन्तो बहवो विद्वांसोऽवलोकिताः, यद्विचारदृष्टयोपहासास्पदं लज्जास्पदं वा। मान्याः! विचार्यतां मनाक् या शब्दार्थमपि न सम्यक् परिचाययेत्, सापि किमु शिक्षा? अशिक्षा नाम तर्हि का भवतु जगति?

इयं प्राथमिक्याः शिक्षाया दशा। अथ सौभाग्यादग्रे चलितोऽपि छात्रो मध्यमायामुत्तमायां वापि शिक्षायां प्रकृतिसात्म्यमाप्तमिदं शब्दप्राधान्यं न जहात्येव। केवलं परीक्षोत्तरणसमुत्सुका ये सहस्रशश्छात्राः काव्यपाठे पर्यायशब्दान् केवलं रटन्ति, अभिप्रायन्त्वेकस्यापि पदस्य नोद्घाटयितुं प्रभवन्ति तेषां कथा तु त्यज्यताम्, परं व्युत्पन्नतया परिगण्यमानेष्वपि छात्रेषु रघुवंशे रघोर्दिग्विजययात्रायां वर्णिता देशाः के? इन्दुमतीस्वयंवरे इदानीं कैर्नामभिः परिचितेभ्यो देशेभ्यो राजानः समागताः? इति

+ अत्र द्वितीयैव युक्ता, अवतरते: सकर्मकत्वात् ।



अष्टावक्र उवाच—

द्वाविन्द्राग्नी चरतो वै सखायौ
द्वौ देवर्षी नारदपर्वतौ च ।
द्वावश्विनौ द्वे रथस्यापि चक्रे
भार्यापती द्वौ विहितौ विधात्रा ॥

वन्द्युवाच—

त्रिः सूयते कर्मणा वै प्रजेयं
त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिसवनानि तन्वते
त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥

अष्टावक्र उवाच—

चतुष्टयं ब्राह्मणानां निकेतं
चत्वारो वर्णा यज्ञमिमं वहन्ति ।
दिशश्चतस्रो वर्णचतुष्टयं च
चतुष्पदा गौरपि शश्वदुक्ता ॥

एवमेव प्रतिश्लोकं सङ्ख्यावृद्धिक्रमेण पदार्थगणनाप्रधाने प्रतिहतवाक्यबन्धप्रवाहेऽनयोरुत्तरप्रत्युत्तरप्रचारे त्रयोदशीं संङ्ख्यामुपेते वन्दिनः पराजयो विजयश्चाष्टावक्रस्य करगतो बभूव । तद्यथा—

वन्द्युवाच—

त्रयोदशी तिथिरुक्ता महोग्रा त्रयोदशद्वीपवती मही च

लोमश उवाच—

एतावदुक्त्वा विरराम बन्दी
श्लोकस्यार्द्धं व्याजहाराष्टवक्रः ।

अष्टावक्र उवाच—

त्रयोदशाहानि ससार केशी
त्रयोदशादीन्यतिच्छन्दांसि चाहुः ।

लोमश उवाच

ततो महानुदतिष्ठन्निनादस्तूष्णींभूतं सूतपुत्रं निशम्य ।
अधोमुखं ध्यानपरं तदानीमष्टावक्रं चाप्युदीर्यन्तमेव ।

इत्यादिशास्त्रार्थशैलीयं पर्यालोच्या विद्वद्भिः ।

शब्दशास्त्रनाम्ना ख्यातस्य व्याकरणस्यापि महाभाष्यकारो भगवान् पतञ्जलिः "शब्दैरेव शब्दानाचष्टे भवान्" इत्यनेकत्र पर्यायमात्रेणार्थं व्याचिख्यासन्तं प्रतिवादिनमुपहसति । भगवतो जैमिनेश्चायं सुप्रसिद्धो घण्टाघोषः—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' मी० सू० १-२-१ सर्वं ज्ञानं क्रियार्थमेव भवतीति तद्वचःसारः । स्मृतिकृन्मूर्द्धन्येन भगवता मनुनाप्युक्तम्—

फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादनम् ।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥

नीतिमुपदिशता च केनचिद्विशिष्टप्रज्ञेनोपदिष्टम्—'शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान् पुरुषः स विद्वान् ।' आस्तां विस्तरः—शब्दमात्रशिक्षाऽस्माकं पूर्वजैर्न कदाप्यादृतेति निदर्शनैरेभिः स्फुटीभवति । परमस्माकं दौर्भाग्याच्चिरादेवास्मिन् देशे शब्दप्राधान्यं शिक्षापद्धतौ स्वावासं चकार । न जानीमः कीदृशः स आसीद्देशसौभाग्यापकर्षको दुरदृष्टसमयः यदा शिक्षापद्धतिरस्माकं शब्दप्रवणतापथे अवततार । अद्य तु परीक्षायुगे आरम्भादेव शब्दमात्रमेव शिक्षायां प्रधानम्, अर्थदृष्टिस्तु दूरापास्तैव । संस्कृतभाषां परिचेतुं प्रवृत्त एव च्छात्रो यदा 'अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः ।' इतिवाक्यमधीते, स केयं शाल्मलीति यदि जातकौतुकः गुरुं पृच्छति, तदा 'वृक्षविशेषः' इत्येवोत्तरं लभते, न त्वितोऽधिकं शाल्मल्याः परिचयं प्रायेणासादयति । 'कर्णिकार'शब्दस्याभिधेयं जिज्ञास-

मानश्च 'पुष्पविशेषः' इत्येवोत्तरं लभते। कियद् वदामः, कोषमपि योऽधीते सोऽपि धान्यविशेषः, फलविशेषः, पशुविशेषः, पक्षिविशेषः इत्यादीनेव शब्दान् शृणोति, न तु वस्तुतस्तत्तदभिधेयान् पदार्थान् परिचिनोति। जगति च यानि वस्तून्यवलोकयति तद्वाचकान् संस्कृतशब्दान् न जानाति। 'लोमड़ी' इति प्रसिद्धो जन्तुः संस्कृतभाषायां केन शब्देनाभिधीयते हंसकारण्डवादिपदाभिधेयाश्च के सन्ति पक्षिणः ? इति, भाग्यवन्तः केचन परिचिता भवेयुरेव। भाषान्तरविद्यालयेषु वस्तुपाठविधिश्चिरादाद्रियमाणोऽवलोक्यते। प्राथमिकशिक्षायां प्रवृत्तमात्रस्य कृते तत्र शतशश्चित्राणि पुरतः स्थाप्यन्ते, यदा कस्यचित् शब्दार्थ-जिज्ञासा स्यात् सा तदभिधेयचित्रदर्शनेनापनीयते, न तु 'उष्ट्रः कश्चित्पक्षिविशेषः' इति स्वप्नावस्थाप्रलापमात्रेण। तत एव ताः सन्ति जीविता भाषाः। 'संस्कृतं मृतभाषा' इति पाश्चात्यानां शब्दोऽस्माकं श्रवणविवरेषु सत्यं शूलायते, परं यदा वयं संस्कृतेन व्यवहर्तुं प्रवृत्ता भवामस्तदा, 'इदं ढकोलापदवाच्यमतिविशालम्' सुष्ठुतरं 'जलेबीपदवाच्यं' मया भक्षितम्, इत्यादीनि शब्ददारिद्र्यख्यापकानि वाक्यान्येव प्रयोक्तुं विवशीभवामः। किमन्यत, 'अद्य तु अस्माकं पेटे दरदो वर्तते' इत्यादिवाक्यानि संस्कृतसमाचारपत्राण्यपि प्रकाशयन्ति। हन्त !!! अनयैवापरिचयविशृङ्खलया आयुर्वेदे तथाविधो विप्लवः प्रवृत्तो यदेकस्मिन् देशे राज्ञादिपदैर्यदौषधं गृह्यते, ततोऽतिविलक्षणं किमप्यन्यदेवान्यस्मिन् देशे। धर्मशास्त्रेऽपि च 'गृञ्जनं लोहितं लशुनानुकारि कन्दविशेषः' इति प्रामाणिकीं व्याख्यामवलम्ब्य केषुचिद्देशेषु शिष्टा 'गाजराख्यं' कन्दं भक्षयन्ति, अपरेषु तु देशेषु कैश्चिन्निबन्धकृद्भिः 'गृञ्जन' पदव्याख्यायाम् 'गाजर' इति प्रसिद्धमिति लिखितं विलोक्य गाजराख्यं कन्दमभक्ष्यं शिष्टा आकलयन्ति। धर्मनिबन्धेषु व्रते वर्जनीयतया ये क्षारा उक्ताः, तेषां सम्यक् परिचयं बहवो विद्वांसः पृष्टाः परमाधिक्येन निराशैव तत्राजायत। पञ्चनदप्रदेशं पञ्चालपदेन, मद्रासप्रान्तं च मद्रपदेन व्यवहरन्तो बहवो विद्वांसोऽवलोकिताः, यद्विचारदृष्ट्योपहासास्पदं लज्जास्पदं वा। मान्याः ! विचार्यतां मनाक् या शब्दार्थमपि न सम्यक् परिचाययेत्, सापि किमु शिक्षा ? अशिक्षा नाम तर्हि का भवतु जगति ?

इयं प्राथमिक्याः शिक्षाया दशा। अथ सौभाग्यादग्रे चलितोऽपि च्छात्रो मध्यमायामुत्तमायां वापि शिक्षायां प्रकृतिसात्म्यमाप्तमिदं शब्दप्राधान्यं न जहात्येव। केवलं परीक्षोत्तरणसमुत्सुका ये सहस्रशश्छात्राः काव्यपाठे पर्यायशब्दान् केवलं रटन्ति, अभिप्रायन्त्वेकस्यापि पदस्य नोद्घाटयितुं प्रभवन्ति तेषां कथा तु त्यज्यताम्, परं व्युत्पन्नतया परिगण्यमानेष्वपि च्छात्रेषु रघुवंशे रघोर्दिग्विजययात्रायां वर्णिता देशाः के ? इन्दुमतीस्वयंवरे इदानीं कैर्नामभिः परिचितेभ्यो देशेभ्यो राजानः समागताः ? इति

कियन्तश्छात्रा जानन्तीति विद्वद्भिरन्विष्यतां कृपया। महाकविभिर्वर्णितानि गजाश्वादिलक्षणानि किं कश्चिच्छक्नोति परिचेतुम्? कुतो वा परिचिनुयात्, शब्दैरेव तस्य प्रयोजनम्, नार्थपरिचयेन! एकेन व्युत्पन्नेन महाविदुषा प्रियसुहृदोक्तम् आङ्गलविद्यालयेषु संस्कृतकाव्याद्यध्यापनमस्माकं दुष्करम्, तत्र हि छात्रास्तत्तद्देशानां परिचयं तत्तन्महाराजानां कालादिकं च पृच्छन्ति, अस्माभिस्तु न तदभ्यस्तमिति'। पाणिनीये व्याकरणे सुव्युत्पन्नतया गण्यमाना अपि फक्किकाविवादेषु प्राप्तप्रतिष्ठा अपि च छात्राः 'कारनाम्नि च प्राचां हलादौ' इत्यादीनां सूत्राणाम् 'मुकुटे कार्षापणम्' इत्यादीनामुदाहरणानां च विषये कियन्तः परिचयं दधति। 'प्राचाम्' 'उदीचाम्' इत्यादयो भगवतः पाणिनेः स्वभ्यस्तास्तु प्रयोगाः पूजार्था इति महद्भिर्ग्रन्थकृद्भिरेव ख्यापिताः, परं तद्धितप्रकरणे बहूनां वंशानां बहूनां देशानां च नामानि श्रुत्वापि शब्दमात्रग्रहणपटूनां मनसि जिज्ञासैव प्रायेण नोदेति, उदितापि च वराकी नैराश्ये एव लीयेत। सुवर्णस्य द्रवत्वमत्यन्तानलसंयोगेऽपि अनुच्छिद्यमानम्-इति कदापि केनापि परीक्षितं वा? ज्यौतिषाध्यायिनः क्वचिदाकाशे नक्षत्रतारापरिचयाय प्रयतमाना दृग्विषयतां नीताः किमु?। कियद्वा वदामः, मध्यमशिक्षायामपि शब्दमात्रप्रवणतायाः पूर्णं साम्राज्यम्। अथोच्चशिक्षापि मनाङ् निभाल्यताम्-वात्स्यायनादिभिर्महर्षिभिर्न्यायविद्येयमत्युच्चविद्यासु परिगणिता। अत एव चतसृषु क्षत्रियोचितविद्यासु, 'आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिश्च शाश्वती' इति प्रथमं स्थानमस्याः। चतुर्दशसु च विद्यासु-

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।'

इति भगवता याज्ञवल्क्येन द्वितीयं स्थानमस्यै दत्तम्। केयं न्यायविद्येति न्यायभाष्यकृता तत्रभवता वात्स्यायनेन सम्यग् विवृतम्। 'कः पुनरसौ न्यायः?। प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षागमाश्रितमनुमानम्" इत्यादिना। यद्वस्तु यथा दृष्टम्, यथा श्रुतं वा, तदुपर्यनुमानात्मकेन मननेन नवनवविज्ञानसम्पादनं न्यायविद्येति श्रीवात्स्यायनवाक्यैः फलति। एवं च ये अद्यत्वे जगति नवनवा वैज्ञानिका आविष्कारा भवन्ति, तेषां जननीयं न्यायविद्यैव। वाष्पशकट्या (रेलगाडी) आविष्कारेतिहास एवमेवं श्रूयते-यत्सर्वतो निरुद्धवायुनिर्गमा चुल्ह्यामधिश्रिता स्थाली कदाचिद्बलादुत्पपात। एतत् प्रत्यक्षमाधारीकृत्य ततो बाष्पस्य सामर्थ्यातिरेकमनुमाय च स्फाराङ्गदेशीयः कश्चन विद्वान् बाष्पयानमाविश्चकार। शब्दोच्चारणेन सूक्ष्मेषु धातुतन्तुषु प्रकम्पनं दृष्ट्वा च तदाधारेणानुमानं प्रवर्तयता केनचिन्महाविदुषा फोनोग्राफयन्त्रमाविष्कृतम्। परं मान्याः! शब्दमात्रप्रवणानामस्माकं न्यायविद्या तु शब्दप्रधानानि लक्षणान्येव नवनवानि केवलमाविष्करोति, न तु लक्ष्येषु दृष्टिमस्माकं कदाप्याकर्षति। वयं हेतोर्हे-

त्वाभासस्य च लक्षणानि पठामः शास्त्रार्थविजयाय, न तु जगति कस्य कं प्रति हेतुत्वम्, कं प्रति वा कस्य हेत्वाभासत्वम्—इति परीक्षणे कदापि मतिं कुर्मः। आर्षग्रन्थानां सूत्रभाष्यादीनां लक्ष्यतेऽर्थपरीक्षणप्रवणता, शास्त्रार्थयुगे तु वादप्रधाना एव ग्रन्थाः सर्वत्र समादृताः, विषयप्रधानास्तु विलुप्तप्रायाः। अधुना समुत्कृष्टविद्यात्वेन परिगण्यमानानाम्, विकासवाद-मनोविज्ञान-भूगर्भविद्यादीनां सूत्ररूपेण निर्देशः स्फुटमुपलभ्यते पुराणादिषु, परमर्थदृष्ट्या न तेषां विचारः कदापि प्रवर्तते। मीमांसाधर्मशास्त्रादिष्वपि विवादमात्रमेवाभ्यस्यते, कर्तव्यतांशस्य तु परिज्ञानमपि दूरतस्त्यज्यते। मिताक्षरादिषु सर्वसुबोधैः शब्दैः प्रत्यायितानि तत्त्वानि विवादप्रधानैर्न्यायशब्दैर्बोधयितुमेव मित्रमिश्र—केशवमिश्रादीनां वीरमित्रोदये द्वैतपरिशिष्टे च प्रवृत्तिः, नत्वभिनवं किमप्याख्यातुम्। त एव च वादप्रधाना ग्रन्था अद्यत्वे विद्वद्भिरुच्चशिक्षासु यत्नेन निवेश्यन्ते। तदित्थमादित उत्तमशिक्षापर्यन्तं यत्केवलं शब्दप्राधान्यं संस्कृतशिक्षायां साम्राज्यमलभत, तदेवास्माकमकर्मण्यतायै, वृत्तिदौर्लभ्याय, शिक्षितोचितसम्मानस्यापि च विरहाय समपद्यत। सोयं दोषः सुविचार्य विद्वद्भिर्निराकरणीयः। आदित एव चोक्तरीत्या अर्थप्रवणा दृष्टिर्विनेयेष्वाधेया, ईदृशस्तेषामभ्यासः प्रवर्तनीयो यदज्ञात्वा ते न किमपि पठेयुः। प्राथमिक्यां शिक्षायां वस्तुपाठविधिश्चित्रप्रतिकृत्यादिसाहाय्येनावश्यं प्रवर्तनीयः। माध्यमिकशिक्षायां पूर्वं विद्वद्भिरेव परिश्रम्य त त ऐतिहासिकाद्या विषयाः सरलीकरणीयाश्छात्राश्च तथैव प्रतिबोधनीयाः। उच्चशिक्षायां च संस्कृतग्रन्थाध्यापनेऽपि वैज्ञानिकी पद्धतिराधुनिकग्रन्थसाहाय्येनाश्रयणीया, वैज्ञानिकप्रयोगशालाश्च यथाकथञ्चित् संस्कृतमहाविद्यालयेष्वपि स्थापनीयाः। तत एव दोषोऽयं समूलमुन्मूल्येत। विषयप्रधानाश्च ग्रन्थाः शिक्षापद्धतौ नियमनीयाः, न तु वादप्रधानाः। अर्थपरीक्षणे स्वबुद्धिर्विद्वद्भिर्नियोज्या, न तु शब्दमात्रेण परेषां मुखमुद्रणे। तदैव संस्कृतशिक्षा जगत्युपयोगिनीति समादरं लभेत, नेतरथा।

## २ समयोपयोगिविषयाणामप्रवेशो द्वितीयो दोषः

अथ संस्कृतशिक्षायां समयोपयोगिविषयाणामप्रवेशो द्वितीयो दोषः। देशकालानुकूल्येन जनानामभिरुचिर्भिन्ना भिन्ना भवतीति मन्ये नात्र कस्यापि विवादो भवेत्। यादृशी लोकस्याभिरुचिः, तादृशविषयाणां ज्ञानेन जनो लोके प्रतिष्ठां जीविकाञ्च लभते, लोकसेवामपि च स एव कर्तुं समर्थो भविष्यतीति एतदपि निर्विवादम्। पुराप्यस्माकं शिक्षापद्धतिर्लोकाभिरुचिभेदेन भिन्ना प्रवर्ततेति मनाग् अवधायानुमातव्यम्। अतिपुरातने काले अस्मद्देशे धर्मप्रधाना वेदवेदाङ्गादिशिक्षा सुप्रचरिताऽऽसीत्, तदानीन्तनानां जनानां धर्माभिनिवेशित्वात्। अथ वेदपरिपन्थिनां बौद्धादीनामाक्रमणे प्रवृत्ते वैदिकमार्गसंरक्षणाय वादात्मिका दर्शनशि-

क्षा प्राचलत्। तदनु कालक्रमेण दुर्वहगर्वतया स्तुतिश्रवणोत्सुका विलासितया कामिनीवर्णनादिषु लग्नचित्ता वा यदा किल काव्यप्रिया आसन् लोकनेतारो राजप्रभृतयस्तदा काव्यशास्त्रप्रधानैव देशे शिक्षा प्रावर्तत, कवय एव च बाहुल्येन भारते प्रादुरभूवन्। तत एव तदात्वे गणनातीताः काव्यग्रन्था देशे निर्मिता इति प्रत्यक्षं पश्यामः। वैदिकाश्च 'छान्दसाः श्लोकशत्रवः' इत्यादिभिर्मर्मवाक्यैरुपहसिता आसन्। अथ यदा विदुषां पारस्परिकशास्त्रार्थश्रवणे आसीदभिरुचिर्महताम्, तदा परिष्कारप्रधाना प्रावर्तत शिक्षापद्धतिः। काव्यानि च 'रण्डागीतानि काव्यानि' इति विगीतानि। इदानीं तु तस्मिन् कवित्वयुगे तस्मिँश्चावच्छेदकतायुगे व्यतीते निरुद्देश्येवास्माकं शिक्षापरिपाटी वर्तते। केवलं परीक्षोत्तरणार्थमिदानीमध्ययनम्। शिक्षाक्रमश्चाद्यास्माभिरुपजीव्यमानो अवच्छेदकतायुगापरपर्यायस्य शास्त्रार्थयुगस्य भग्नावशेष(खण्डहर)मात्रम्। शास्त्रार्थयुगपरिपाटीमवलम्ब्य परीक्षोत्तीर्णताफलमद्य साध्यते।

उत्तीर्य च परीक्षाम्, पथिभ्रष्टा इव विचरन्तो विद्वांसोऽन्येषामपि संस्कृताध्ययनपरित्यागे निदर्शनानि भवन्ति। नहि लोके शिक्षिता इति मन्यन्ते। लोको हि सम्प्रति साधारणज्ञाने रुचिमान्। गणितम्, भूगोलविद्या, इतिहासः, विज्ञानम्, भाषाशास्त्रम्, प्राणिशास्त्रमित्येवंप्रभृतिविषयाणामपरिचितो नेदानीं लोके शिक्षित इति मन्यते, उच्चशिक्षितपदस्य तु कथैव का? न चैते विषया अस्माभिः शिक्षायां नियतत्वेन परिगृहीताः। तत एव समयोपयोगिविज्ञानविरहिताः संस्कृतज्ञा न शिक्षितत्वेन समाजे समाद्रियन्ते, नापि लोकेषु प्रभावं स्वीयं प्रतिष्ठापयितुं प्रगल्भन्ते। किमन्यत्—यत्संस्कृतज्ञानामेव प्रधानं कर्तव्यम्, येन तेषां विद्यायाः प्रभावो भवेत्, तदपि संसाधयितुं नैव पाटवं संस्कृतशिक्षितानाम्। अद्यत्वे किल यूरोपीयास्तदनुयायिन आङ्गलभाषापण्डिता भारतीयाश्च भारतस्य देशस्य पुरावृत्तविषये, संस्कृतवाङ्मयस्य पुरावृत्तविषये, आर्यसभ्यताया इतिहासविषये च यत्किमपि प्रकल्पन्ते, स्वीयवैज्ञानिकपरिपाटीसमर्थितं च तदेव सर्वत्राप्रतिहतं प्रचारयन्ति तेन बहुषु विषयेषु गौरवमस्माकमस्तमयते, परं संस्कृतज्ञा ऐतिहासिकपद्धतिविज्ञानविवर्जिता न किमपि तत्र प्रतिविधातुं प्रभवन्ति। केवलं तेषां मुखमवलोकयन्ति, गालीर्वा तेभ्यो ददति, दैवं समयं वा निन्दन्ति। न तु तावता किमपि सिद्धं सेत्स्यति वा। नहि खलु संस्कृतज्ञा बुद्धिदरिद्रा भवन्ति। यदि ते पद्धतिं तां व्यज्ञास्यन्, अवश्यं तर्हि भारतगौरवापकर्षकाणि यथेष्टं प्रकल्पनानि युक्तिभिः प्रतिव्यधास्यन्। यदद्यावधि प्रतिविहितं तदाङ्गलभाषापण्डितैरेव देशभक्तैः प्रतिविहितम्। केवलसंस्कृतज्ञाः स्वकार्येऽस्मिन्नुदासीना इति कलङ्कभाज एव। कियत् वा वक्तव्यम् संस्कृतसाहित्येतिहाससम्बन्धेऽपि आङ्गलपण्डितानामेव वचोऽद्य प्रमाणं भवति न तु संस्कृतज्ञानाम्, तेषां सामयिकरीत्या पुरावृ-

त्तप्रतिपादनयोग्यताविरहात् । आङ्गलपण्डितानां संस्कृतमर्मज्ञताया अभावाद् यदिदानीन्तनेऽन्वेषणे संस्कृतसाहित्येतिहासविषये भारतेतिहासविषये चोच्छृङ्खलाः प्रकल्पना विजृम्भन्ते, आन्ध्यं वा बहुत्र दृश्यते सोऽयं कस्य दोषः ? विचार्यमाणे संस्कृतपण्डितानामेव । यदेते समर्था अपि सामयिककार्यपद्धतिविज्ञानाभावादकर्मण्या इव संवृत्ताः । तथैवाधुनिकानां विज्ञानमस्माकं वेदे दर्शने आयुर्वेदज्यौतिषादौ च सर्वत्र प्रहरति, युक्तियुक्तं च तद्वचो न केवलं 'शेषं कोपेन पूरयेत्' इति रीत्या शक्यं निराकर्तुम् । यदि तु तस्याधुनिकस्य विज्ञानस्य रीतिः संस्कृतपण्डितैर्विज्ञायेत, तदा स्वीयशास्त्रेष्वन्तर्निहितं विज्ञानमप्येषां बुद्धौ भासेत । तत्परिष्करणप्रवणाश्च सामयिकानाक्षेपान् दूरीकृत्य स्वदेशस्य, स्वभाषायाः, स्वसभ्यतायाश्चापि गौरवं प्रतिष्ठापयेयुः, स्वशास्त्रान्तर्निहितपद्धतिबोधनेन च वर्तमानकालिकं विज्ञानमप्युन्नमय्य जगतोऽप्युपकारमादध्युः । न खलु आधुनिकविज्ञानमद्यावधि सर्वथा पूर्णतां गतम् । अस्माकं शास्त्रेषु नास्त्येवोन्नतमं विज्ञानम्, उन्मत्तप्रलपितमेव वा तदित्येतदपि च न श्रद्धास्पदम् । तस्मादस्माकं विज्ञानप्रकाशनेनाधुनिकस्य विज्ञानस्योन्नतिः सम्भाव्यत एव । आस्तामप्रकृतमिदम् ।

तादृशविषयाणामज्ञानेन तु संस्कृतज्ञानां सुमहानपकर्ष एव । अतीवलज्जास्पदमिदम्—यत् संस्कृतपण्डिता आङ्गलपाठालयेषु अध्यापकत्वेन नियुक्तास्तत्र पाठ्यमानान् हिन्दीभाषाग्रन्थानपि अध्यापयितुं न प्रभवन्ति, हिन्दीभाषाज्ञानाभावात् । संस्कृतपण्डितानां सामयिकज्ञानविरहादेव च संस्कृतपाठनार्थमपि राजकीयविद्यालयेषु आङ्गलभाषाविद एव गृह्यन्ते—इति केवलसंस्कृतज्ञानां वृत्तिदौर्लभ्यमधिकायते । तद्विरोधार्थं संघटनशक्तिरपि सामयिककर्तव्यज्ञानाभावादेव नास्मासु प्रवृत्ताद्यावधि । तस्मात्संस्कृतशिक्षायां पूर्वोक्तानां गणितेतिहासभूगोलविज्ञानादिसामयिकविषयाणां सन्निवेशोऽतीवावश्यकः । हिन्दीभाषया तत्तद्देशभाषया वा ते विषयाः पाठनीयाः, सरलसंस्कृतेन वा नवीनपद्धत्या सङ्ग्रथनीयाः । प्रौढं हिन्दीभाषासाहित्यज्ञानमाङ्गलभाषाज्ञानमपि च व्यवहारोपयोगि संस्कृज्ञानां यथा भवेत्, तथावश्यं प्रयतनीयम् । ये च व्याकरणादिविषया अध्याप्यन्ते— तैः सार्द्धमपि नवीनरीतिबोधका ग्रन्था अध्याप्याः—यथा व्याकरणेन सह भाषाशास्त्रमाधुनिकम्, न्यायेन सहाधुनिकी पदार्थविद्या, सांख्यवेदान्तादिभिः सह विकासवादादि, साहित्येन सह तुलनात्मकाध्ययनादि । तेन संस्कृतच्छात्राणामभिरुचिराधुनिकगवेषणायां प्रवर्तिष्यते-समयोपयोगिता च तेषां सेत्स्यति । आधुनिकशास्त्राणां त्रुटिपूरणमपि च स्यादिति। लोकवृत्तज्ञानाय समाचारपत्रपठनादिप्रवृत्तिरपि च च्छात्रेष्वाधेया, न तु निरोद्धव्या । न हि 'लौकिकज्ञानशून्यत्वं संस्कृतपण्डितत्वम्' इति लक्षणं रक्षणीयम्-अपि त्वसम्भवदोषेण तत्कलङ्कनीयम् । निबन्धलेखा-

× ... प्रेतेऽर्थवादे विवक्षा नास्ति। अन्यथा स्तुतिनिन्दार्थफलकमित्येवं कुतो लिखिष्यात्।



दिपाटवमप्यारम्भादेवैषु विकासं प्रापणीयम् । तत एवेयं शिक्षा संप्रति लोके पदं लभेतेति ।

## अथ—एकदेशिता तृतीयो दोषः

संस्कृत-शिक्षायां शिक्षणीयतया गृह्यमाणेष्वपि विषयेषु कस्यचिदेकस्य विषयस्याध्ययने छात्राणां प्रवर्तनम्, तेन च विषयान्तरस्यैकान्ततो ज्ञानविरहस्तृतीयो दोषः। कियतश्चित् कालात् प्रायेण शास्त्रार्थयुगे एकतमस्यैव व्याकरणस्य, न्यायस्य, ज्यौतिषादेर्वा शिक्षा ग्रहीतव्येति नियमः संस्कृत-शिक्षायां प्राचरत्। तेन चादितोऽन्तपर्यन्तमेकमेव विषयमधीत्य पण्डितमानिनोऽपि संस्कृतज्ञा इतरविषये श्वेतं कृष्णं वा किमपि न जानन्ति । न चानेकविषयज्ञानमन्तरेण व्युत्पन्नः कोपि भवेत् । प्राचीनानां ग्रन्थकृतां सर्वतोमुखं पाण्डित्यं तद्ग्रन्थपर्यालोचनयानुमीयते । तेन तदात्वे शिक्षा-क्षेत्रस्य विस्तीर्णता सुस्फुटं प्रतीयते । शास्त्रार्थयुगे तु विशेषेणैकदेशिता पदं लेभे। तस्मिन् युगे तु तथाऽभवदस्याः पद्धतेः साम्राज्यम्, यन्न्यायमधिजिगांसूनां वर्णपरिचयोत्तरं पाठारम्भ एव 'ननु केयं व्याप्तिः' इत्यनेनैवाभवत्, न तु कोषस्य व्याकरणस्य वा नामापि तैरगृह्यत । इदानीं कथञ्चित् तत्परिवर्तने जातेपि मध्यमशिक्षायामुच्चशिक्षायां चैकदेशिता न जहात्येव संस्कृतच्छात्रान् । यद्यपि पद्धत्यानया एकस्मिन् विषये प्रौढिः समासाद्यते परं विषयान्तराणां सामान्यस्यापि ज्ञानस्याभावे सा प्रौढिरकिञ्चित्करप्रायैव । सर्वेषामपि शास्त्राणां सुदृढः पारस्परिकः संबन्ध इत्येकशास्त्र-

नाभावेऽपरत्रापि व्युत्पत्तिर्दुर्लभा । लोके च पाण्डित्यख्यापनाय सर्वतः प्रसृत्वरी व्युत्पत्तिरेवापेक्ष्यते । सा तु नैवाद्यत्वे दृश्यते ।

नैयायिका व्याकरणमुपेक्षन्ते, वैय्याकरणा अलङ्कारशास्त्रं न जानन्ति, इत्येवं सर्वत्र व्युत्पत्तेरभावः प्रतिभासते। शास्त्रान्तरसामान्यज्ञानोपबृंहिता एकस्य शास्त्रस्य प्रौढिः शोभते, इतराज्ञानसहकृता तु अपकर्षायैव भवेत्। शास्त्रान्तरापरिचये कीदृशानामनर्थानां प्रसारो भवति, कथं चोपहासास्पदानि लज्जास्पदानि वा कार्याणि जायन्ते इत्यत्र द्वित्राणि निदर्शनानि समुपाह्रियन्ते । कस्यापि मान्यस्य ग्रन्थकर्तुर्विषये कटाक्षनिक्षेपे न मनागप्यत्र तात्पर्यम्, केवलं शिक्षापद्धतिगतो दोष एव विवरणीय इति क्षम्यतां विद्वन्महाभागैः।

× "कृत्यैरधिकार्थवचने" इति पाणिनीयं सूत्रं व्याचक्षाणेन श्रीमता भट्टोजिदीक्षितेन स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनमिति सूत्रपदं विवृतम् । परिचितमीमांसाशास्त्रा जानन्ति, यदर्थवादस्य तात्पर्यं कचित्स्तुतौ कचिच्च निन्दायां भवति । विधिशेषोऽर्थवादो विधेयं केनापि रूपेण स्तौति, निषेधशेषस्तु निषेध्यं कथञ्चिन्निन्दति । अत्र तु तत्त्वबोधिन्यादिव्याख्याकृद्भिः 'वातच्छेद्यं तृणम्' 'काकपेया नदी' इति क्रमेणोदाहृतं द्वयमपि स्तुतिनिन्दोभयपरत्वेन व्याख्यातमिति विशुद्धवैय्याकरणाः स्तुतिर्निन्दा चेत्युभयं यत्र प्रतीयेत, तदेवाधिकार्थवचनं भवतीति जानन्ति, तथैवाध्यापयन्ति च । शास्त्रान्तरपरिभाषाया अपरिचयेन द-

न्त ! दीक्षितमहाशयस्याशय एवमुद्धूल्यते. 'काकपेया नदी' इत्युदाहरणस्यापि च प्रशंसापरत्वमभिनयद्भिर्विवेकशीलानुपहासयद्भिरलौकिकी व्युत्पत्तिराविष्क्रियते । निदर्शनमात्रमिदम्, मीमांसाया अपरिचयेन धर्मनिबन्धानां बहुत्र दुर्गतिः संपादिता विद्वद्भिः, संपाद्यते च । एवं निरुक्ते प्रथमाध्याय एवास्त्येकमाख्यानम् 'अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः संप्रदित्साञ्चकार' इत्यादि । पञ्चनदप्रान्ते निरुक्तस्यास्ति पठनपाठनप्रचारः, शास्त्रिपरीक्षानियतत्वात् । तत्र बहुभिराधुनिकटीकाकृद्भिर्महाभागैः 'निरुप्य' इत्यस्य स्थाने 'निरूप्य' इत्यभिनवः पाठ एव प्रकल्प्य व्याख्यातः, कर्मकाण्डप्रसिद्धस्य हविर्निर्वापस्यापरिचितत्वेन 'निरुप्य' इति पदस्यार्थास्फुरणात् । 'कुं खुं गुं घुं यमाः' इति भगवतः कात्यायनस्य परिभाषामनालोच्य च शुक्लयजुर्वेदिभिर्यमप्रयोगस्थाने 'गुं' शब्दोच्चारणमेवाचिरात्प्रवर्तितमिति श्रीगुरुचरणैः प्रतिपादितं वर्णसमीक्षायाम् । काव्यकुलगुरोः श्रीकालिदासस्य सर्वतोमुखं वैदुष्यं न कस्याप्यपरिचितम् । तस्य खण्डकाव्यं 'मेघदूतम्' आलोच्य भूगोलविज्ञानवैदुष्यं बहुभिर्विद्वद्भिरभिष्टुतम् । 'सारस्वतसारविज्ञानमानिना' 'गुरुकुलक्लिष्टेन' श्रीमुरारिकविना तु अनर्घ्यराघवस्य सप्तमेऽङ्के पुष्पकेण भगवतो रामस्य लङ्काया अयोध्यागमनं वर्णयता पूर्वं पञ्चवटी, तदनु महाराष्ट्रदेशः, तत आन्ध्रविषयः, ततश्च द्रविडेषु काञ्ची—तदनुपदमेव चोज्जयिनीति विचित्रं क्रममाविष्कुर्वता परिचितभूगोलविद्या अद्याप्युपहास्यन्ते । भगवान् रामो दक्षिणस्या उत्तरां दिशं गच्छति, उत्तराया दक्षिणां वेति मन्ये विसस्मार स महाभागः । वस्तुतस्तु शिक्षाया एकदेशितैवात्रापराध्यति । बहून्यत्र निदर्शनानि संभवन्ति, दिग्दर्शनमात्रप्रयोजनैस्त्वस्माभिर्विस्तराद् विरम्यते । न चेयमेकदेशिता शास्त्रार्थादन्यत्र कमप्युपयोगमावहति, शास्त्रार्थयुगं चातिक्रान्तमिति पुर एव प्रत्यपीपदम् । इदानीं बहुज्ञा व्युत्पन्ना एव विद्वांसः समाजे समपेक्ष्यन्ते । तस्मादस्माभिः संस्कृतशिक्षागतेयमेकदेशिता परित्यक्तव्यैव ।

प्राथमिकी शिक्षा प्रायेणैकविधा सर्वत्रेदानीं प्रचलिता । तथैव मध्यमशिक्षाप्येकविधैव नियमनीया । अपेक्षितं सामान्यज्ञानं सर्वशास्त्राणामेव तत्र संपाद्यम्, न तु तत्र व्याकरणमध्यमा, न्यायमध्यमेत्यादिभेदा रक्षणीयाः । सत्यावश्यकत्वे केषांचिच्छास्त्राणाम् (ज्यौतिषायुर्वेदादीनाम्) विकल्परूपेणांशिकस्तत्र समावेशोऽस्तु, भाषाज्ञानौपयिकं व्याकरणकाव्यादि तु मध्यमशिक्षायां नियततयैव संग्रहणीयम् । अथोच्चशिक्षायामन्ते विशिष्टं पाण्डित्यं काममेकस्य विषयस्य रक्ष्यताम्, परं सहकारिभूतानां शास्त्राणां सामान्यं ज्ञानं न कदापि परित्यज्यताम् । यस्य च शास्त्रस्य प्रौढं पाण्डित्यं योऽभिवाञ्छेत्, स द्वितीयदोषनिराकरणप्रकरणोक्तरीत्या तद्विषय आधुनिकानां सिद्धान्तानपि सम्यक् परिचिनुयात्, तदालोचनां च कर्तुं यथा शक्नुयात् तथा व्युत्पादनीयः । यथा वैयाकरण

आधुनिकं भाषाशास्त्रमालोचयेत्, नैयायिक-आधुनिक पदार्थविज्ञानमित्याद्युक्तमधस्तात्। तत एवेदानीं परेषामग्रे स्वशास्त्रगौरवप्रख्यापनशक्तिरस्मासूदयेत, उपयोगिता चास्मच्छास्त्राध्ययनस्य लोकेत्र प्रज्ञायेत।

अथ सर्वविषयसङ्कुले गम्भीरतमेऽपि संस्कृतसाहित्यवारांनिधौ पुरः स्फुरति त्रिचतुरा एव विषया अद्यत्वे शिक्षायां गृहीताः, अन्ये तूपेक्षिता इति शिक्षाविषयसंकोच-

श्चतुर्थः प्रबलो दोषः।

अनेन किल व्यतिकरेण संस्कृतसाहित्यमेव हन्त दरिद्रतामिवानुभवति। उपेक्ष्यमाणाः संस्कृतवाङ्मयस्य गौरवख्यापका विषया विलुप्ताश्च विलुप्यन्ते च। किं केवलं पारस्परिकशुष्ककलहसारमेव संस्कृतवाङ्मयमिति बहूनां संशय उदेत्यद्यत्वे। किञ्चैवं बहव आवश्यका अपि विषयाः पण्डितैरपि न ज्ञायन्ते इति महती हानिरापतिता। धर्मज्ञानं खलु संस्कृतज्ञानस्य मुख्यं प्रयोजनम्, ततोपि प्रायेण वञ्चिता भवन्ति अद्यत्वे संस्कृत-विद्वांसः। आवश्यकं स्वानुष्ठेयमपि बहवो न जानन्ति, दूरे तु परोपदेशप्रत्याशा। जिह्रीमो वक्तुम्, यत् संस्कृतसाहित्यस्य वर्णमालास्थानीया ये शिक्षा-ग्रन्थास्तेषां विज्ञातारोप्यद्यत्वेऽतिविरलाः।

चिरादेव विविधकलाग्रन्था अस्तं गताः। प्राचीनेषु पुस्तकालयेषु प्रासाद-मन्दिर-निर्माणोपवनारोपण-धनुर्विद्या-गान्धर्वशास्त्रादिग्रन्थाः केचिदुपलभ्यन्ते परं न केनाप्यवलोक्यन्त इति कथं तेषां रक्षा भवतु? कौटिलीयार्थशास्त्रप्रभृतीन् राजनीतिग्रन्थान् दृष्ट्वा चकिताः सन्ति युरोपीया राजनैतिकाः, परमस्मद्देशे कति सन्ति विद्वांसो यैस्ते ग्रन्था एकवारमवलोकनेनापि कृतार्थिताः? चतसृषु विद्यासु परिगणितमपि वार्ताशास्त्रम्—( एकॅानामिक्स् ) विलुप्तम्। यस्य रक्षार्थमेव व्याकरणाध्ययनं प्रयोजनवदभूत्, विलीनप्रायः स भगवान् वेदः। कति सन्ति ननु साम्प्रतं वेदार्थज्ञा विद्वांसः? अतिगौरवास्पदस्य विविधचमत्कृतिनिधानस्य भारतीयानां सर्वस्वभूतस्य आगमशास्त्रस्य (तन्त्रशास्त्रस्य) वार्तापि क्वचिन्न श्रूयते। क्व सन्तीदानीमष्टाङ्गयोगस्य अभ्यासशीला वेत्तारः? क्व वोपलभ्यन्ते तदीया अभ्यासग्रन्थाः? मीमांसाशास्त्रमुच्छिन्नप्रायम्। दर्शनज्ञानं तिमिरावृतमेव। यत् संस्कृतज्ञानामाजीवनसाधनं तदपि संस्कृत-पण्डितैः स्वयं परित्यक्तम्। बहुषु विद्यालयेषु बह्वीषु संस्थासु चाद्यापि धर्मोपदेशका विद्वांसः संग्रहीतुमिष्यन्ते, न चैते विशिष्टयापि वृत्त्या योग्या उपलभ्यन्ते। बहवः श्रद्धालवः कर्मकाण्डाभिज्ञान् काले काले मृगयन्ते, न च लभ्यन्ते। अतिविरलाः खलु कर्मकाण्डाभिज्ञाः। रुचिरकथावाचका अपि समये समये बहुषु स्थानेष्वन्विष्यन्ते, किन्त्वस्या अपि भारतप्रसिद्धायाः पद्धतेरभाव एव क्रमेण जायते। उच्छ्वसन्ति च कथञ्चित पुराणानि। तदित्थं परित्यक्तेषु लोकोपयोगिषु जीवनोपायेषु, विलुप्तेषु च संस्कृत-साहित्य-गौरवख्यापकेषु गभीरशास्त्रेषु, यत्र तत्र प्र-

त्यक्त्वं सहस्राधिकानां व्याकरण-साहित्याद्याचार्यपरीक्षोत्तरणमात्रेण कथं संस्कृत-साहित्यरक्षा तदुन्नतिर्वा भविष्यतीति विचार्यं मनाक्। तस्मात् विलुप्तप्रायान् ग्रन्थानन्विष्यान्विष्य, उपलभ्यमानाँश्च प्रकाश्यमानीय, भाषान्तरग्रन्थसाहाय्येन च पूर्णतां संपाद्य सर्वेऽप्युपयोगिनो विषया यथास्वं शिक्षायां सन्निवेश्याः। प्रथमायां मध्यमायां च शिक्षायां बहूनां विषयाणां परिज्ञाने रुचिश्छात्राणां संपाद्या। किञ्चोत्तमशिक्षायां विकल्परूपेण सर्वे एव तथाविधा विषयाः सन्निवेश्याः, येन संस्कृत-साहित्याङ्गानां विलोपो न भवेत्। लोकोपयोगिता गौरवं च संस्कृतस्य सुरक्षिते भवेताम्।

## अभिनवग्रन्थानामनादरः शिक्षापद्धतौ पञ्चमो दोषः।

समये समये लोकानां मतिवैचित्र्याद् विभिन्नपद्धतिकानां ग्रन्थानामावश्यकता सर्वत्र जायते। संस्कृतसाहित्येऽपि तथैव दृष्टचरम्, विभिन्नकालिकानां ग्रन्थानां विभिन्नपद्धत्यवलोकनात्। सर्वेष्वपि विषयेषु कालभेदेन विभिन्नसरणिमनुसृत्य विद्वद्भिः पूर्वं ग्रन्था विरच्यन्ते स्म, बहुशश्चैतेषां प्रचारस्तत्तत्समये जायते स्म। इदानीं तु प्रायेण ग्रन्था न विरच्यन्त एव, ये चापि कैश्चिद् विपश्चिद्भिर्विरच्यन्ते, तेषामपि शिक्षापद्धतौ तदधिनायकैरग्रहणात् प्रचारो न जायते। वत एव च हतोत्साहा ग्रन्थकर्तारो न पुनर्ग्रन्थनिर्माणे प्रवर्तन्ते इति साहित्यस्याप्यभिवृद्धिः स्थगिता। प्राक्तनानां च ग्रन्थानां समयेऽस्मिन् दुरूहत्वात् पद्धतिभेदाच्च तेभ्यस्तथा व्युत्पत्तिरपि न जायते। यद्यपि नूतना ग्रन्था न तथा मर्मस्पृशो भवन्ति, इदानीन्तनानां ग्रन्थकर्तॄणां पण्डितानां तथा विज्ञानाभावात्, अत एव बह्व्यस्त्रुटयोऽपि तेषु लक्ष्यन्ते इति अस्ति केषाञ्चिदाक्षेपः। बहुषु अंशेषु तथ्यतामप्ययं भजते, परं तथाभूतानां विदुषां सर्वथा नास्त्यभावः। नैव सम्भवन्तीदानीं निर्दोषा उपयुक्ता ग्रन्था इति नेदं सारवद्वचः। अभिनवग्रन्थानामादरे क्रियमाणे सोत्साहं विद्वद्भिस्तथा ग्रन्था निर्मास्यन्ते। ते च विचार्य युक्ताश्चेन्नियोज्याः शिक्षापद्धतौ, अयुक्ताश्चेत्परित्याज्याः। त्रुटयस्तु प्राचीनेष्वपि ग्रन्थेष्वेकस्य ग्रन्थकारस्यापरेणोद्भाविता एवेति। मनुष्यमात्रे हि सुलभास्ताः। यदीयमेव प्रवृत्तिः पुराप्यभविष्यत्, न तर्हि संस्कृत साहित्यस्यैतावान् विस्तारोऽत्स्येऽद्रक्ष्यत। सत्स्वपि प्राक्तनेषु ग्रन्थेषु यथा प्राचीनैः समयानुसारमुपयोगं निध्याय ग्रन्था विरचिताः, त एव चेदानीं शिक्षापद्धतौ समाद्रियमाणा दृश्यन्ते-तथात्वेपि कुतो न ग्रन्थनिर्माणम्, कुतो वा निर्मितानामपि पाठ्यपद्धतिषु न ग्रहणम्। इदानीन्तनग्रन्थैरेव शिक्षापरिचालने पाण्डित्यसारभूतानां प्राक्तनग्रन्थानां विलोपप्रसङ्गे सुमहती वाङ्मयस्य हानिः संपत्स्यत इत्यपि केषाञ्चिद् भयं निरालम्बनमेव। यथा मध्यकालिकानां ग्रन्थानां शिक्षायां प्रवेशेऽप्यतिप्राक्तना ग्रन्था न लुप्ताः, तथेदानीं नवेषु गृहीतेष्वपि मध्यकालिकानां लोपो न

अप्यपरिचेतृन् इत्येव व्यवहारात् युपाति।

भविष्यतीति विश्वस्यताम्। लोपालोपयोः सारवत्त्वासारवत्त्वे एव निदाने। यदि सन्ति वस्तुनि गुणास्तर्हि न तस्य लोपः स्यात्। यथा प्रचलितायामपि सिद्धान्तकौमुद्यां काशिका, धातुवृत्तिर्वा न लुप्ता, तथा सिद्धान्तकौमुद्यपि सत्यपि नवीनग्रन्थप्रचारे न लुप्येत। अथ लुप्तप्राया एव काशिकादयः, हन्त! तर्हि प्राक्तनग्रन्थविलोपनपातकं यन्मध्यकालिकैर्ग्रन्थैरुपार्जितम्, तस्य फलं तैर्भोक्तव्यमेव, किमस्माकं चिन्तया सिद्ध्येत। वस्तुतस्तु सारवद् वस्तु न विलुप्यत इति निश्चय एव साधीयान्, न तु रक्षामिषेण वाङ्मयाभिवृद्धिस्थगनम्। 'वृद्धाः सन्ति रक्षणीयाः इति नोत्पाद्यन्तां बालाः'—इति नीतिर्न कुत्रापि दृष्टचरी। तस्मादार्षग्रन्थानपरिवर्त्यापि विद्वद्भिरचिततत्तद्विषयकनिबन्धस्थाने आधुनिका अपि ग्रन्थाः सन्निवेश्या एव। समयोपयोगिनीं पद्धतिमवलम्ब्य प्रकटनीयाश्च नवीनास्तत्तद्विषयका ग्रन्था इत्येतदप्यावश्यकम्।

## अथ प्रारम्भिकशिक्षायाः काठिन्यं

## षष्ठः सुदृढः शिक्षादोषः

वैज्ञानिकेऽस्मिन् युगे शिक्षाविज्ञानगवेषकैः सुस्पष्टमिदं सिद्धान्तितम्—यत् प्रारम्भिकी शिक्षा यावदेव सरलत्वं रुचिकरत्वं च प्राप्येत—तावदेव शिक्षाप्रचारसौकर्यं भवेत्। तत एवाङ्ग्लादिभाषाशिक्षाधिनायकाः प्रत्यहं प्रारम्भिकशिक्षायां सरलतां रोचकतां चाधातुं प्रयतन्ते, भवति च तासां भाषाणां प्रत्यहमेवाधिकाधिकः प्रचारः। अस्माकं तु प्रारम्भिकी शिक्षा अद्यापि तथैव कठिना। प्रायेण संस्कृतशिक्षामन्दिरे प्रविविक्षूणामेव च्छात्राणामग्रे पाणिनीयमन्यद्वा किमपि सूत्रनिबद्धं व्याकरणमस्माभिरवस्थाप्यते, कोषश्च केवलं घोषणार्थम्। तच्चेदं दृढतरार्गलायमानं प्रवेशमेव तेषां निवारयति। पूर्वं भाषापरिचयः, तदनु तद्व्याकरणज्ञानम्, इत्ययं युक्तियुक्तोऽप्याधुनिकानां विदुषां घण्टाघोषो नाद्यावधि संस्कृतशिक्षकैः कर्णे क्रियते, अपरिचितसंस्कृतभाषाणां छात्राणां बुद्धिः संस्कृतव्याकरणे कथं प्रवेशमासादयेत्। बहवस्तु हिन्दीभाषाया अप्यपरिचितान् बालान् संस्कृतव्याकरणे कोषे च नियोजयन्ति। कुतः खल्वपक्वप्रज्ञानां छात्राणां तथाविधे गहने विषये प्रवेशो भवतु। ततः किल ते च्छात्रा अध्यापकैस्ताड्यमानाः शुकत्वमवलम्ब्य ग्रन्थाक्षराणि कण्ठे कुर्वन्ति, न तु शिक्षाया मुख्यं प्रयोजनं प्रज्ञापरिष्कारो नाम तेषां लेशतोऽपि सिद्ध्यति। एवं प्रतिशतं सप्ततिरशीतिर्वा च्छात्रा प्रविविक्षव एव अनया द्वारपिधायिन्या दृढतरार्गलया बहिरेव निष्कास्यन्ते। तेषामेव कृते "केचिद् भ्रष्टाः सुदुध्युपास्यप्रयोगे" इत्यादय आभाणका अस्मद्देशे प्रसिद्ध्यन्ति। ताँश्च संस्कृतभाषाया महत्त्वं ख्यापयन्तः सगर्वं वयमुदाहरामः, इत्थं च प्रकारान्तरेण शिक्षायाः काठिन्यमेव वयं प्रशंसामः—इत्यहो अस्माकं वैचित्र्यम्। कथमित्थं संस्कृतभाषायाः प्रचारः सेत्स्यति, कथं वा कोषो निलीनेयं जीविता रक्षिष्यतीति नैव

शिक्षाकर्णधारा मनागपि विचारयन्ति । दृश्यन्ते बहवश्छात्राः संस्कृतशिक्षायां प्रविष्टाः, ततो निराशा भूत्वा प्रतिनिवृत्ताश्च आङ्गलभाषायां प्रविश्य पाटवमासादितवन्तः स्वल्पेनैव कालेन अहो सप्तसमुद्रान्तरितदेशभाषा येषां सुग्रहा, स्वीया देशभाषा-स्वकीयमातृभाषा तेषां दुर्बोधेति महच्चित्रम् । यद्यपि राजभाषेति विशिष्टफललाभप्रत्याशया आङ्गलभाषां बहवोऽधीयते इति सत्यम्, तथापि शिक्षापद्धतिकाठिन्यमपि संस्कृतमध्येतुमिच्छतां सुमहत् प्रतिबन्धकमित्यपि नासत्यम् । प्राक्तने च संस्कृतशिक्षाप्रचारकाले संस्कृतशिक्षायाः सरलत्वाय प्रायतन्त विशिष्टप्रज्ञा इति प्रत्यक्षं पश्यामः । क्रमेण जनानां बुद्धिह्रास इत्यस्माकं दार्शनिकः सिद्धान्तः । तत एव महाभाष्यादिदुरूहग्रन्थेभ्यो व्याकरणशिक्षां कठिनामवेद्य काशिका—धातुवृत्तिप्रभृतयो ग्रन्थास्तैस्तैर्विद्वद्भिर्निरमायिषत शिक्षासौकर्यार्थम् । अथ ततोऽपि बोधे कालेन काठिन्यमालक्ष्य सिद्धान्तकौमुदी भट्टोजिदीक्षितमहाशयेन सौकर्यमेवोद्दिश्य विरचिता, तत्रापि काठिन्यं निध्याय तत्र भवान् वरदराजो लघुकौमुदीं निर्ममे । इदानीन्तु कालक्रमेण साप्यतिकठिनेवाभाति च्छात्राणाम्, परं नेदानीमाधीयते सौकर्यार्थं विद्वद्भिः प्रयत्नः ।

वस्तुतस्तु प्राथमिकशिक्षार्थं कोऽपि प्रयत्नोस्माकं नास्तीति सुस्पष्टं शक्यते वक्तुम् । आङ्गलादिभाषाशिक्षाक्रमे प्राथमिकशिक्षणालया एव (प्राइमरी स्कूल्स्) वाहुल्येनोद्घाटयन्ते, तदर्थमेव प्रचुरं द्रव्यं व्ययीक्रियते, उच्चशिक्षिताः प्राप्तानुभवाश्च तत्राध्यापकपदे विनियोज्यन्ते । संस्कृतस्य तु केवलप्राथमिकशिक्षाशाला विरला एव भवेयुः । यः कश्चिदेकस्मा अपि विदुषे विंशतिमुद्रामितं पञ्चदशमुद्रामितं वाऽत्यल्पमपि वेतनं दातुं शक्नोति, सोऽपि स्वीयायां पाठशालायामाचार्यपर्यन्तं छात्रान् संग्रहीतुमभिकाङ्क्षते । मध्यमापर्यन्तं त्ववश्यमेव संगृह्णाति । पाठशालानियुक्तो विद्वानपि चोच्चकक्षाच्छात्राणामध्यापनेनैव स्वीयां प्रतिष्ठां गणयति । ततश्च प्राप्तेषु शाब्दिकद्वयाच्छात्रेषु मध्यमाच्छात्रेषु वा तेषामेवाध्यापने तस्य विदुषः समयव्ययो भवति, प्रथम-शिक्षाच्छात्रास्तु मध्यमाच्छात्राणामेव गले पात्यन्ते 'अरे दीयतामेभ्यः 'सन्था' (पाठः) ।' किं ते वराका मध्यमाच्छात्राः पाठयितुं जानीयुः, कथं वा प्रथमकक्षाच्छात्राणां मानसभावविकासनाय शिक्षां दद्युः? केवलं घोषणार्थं कतिचित् पङ्क्तीस्तदग्रे वाचयन्ति । तेऽपि चानन्यगतिका घोषणमात्रशरणा मानुषतां विहाय शुकत्वमवलम्बन्ते । तेनैव च घोषणबलेन ते च्छात्राः परीक्षा अप्युत्तरन्ति, पदवीरप्यधिगच्छन्ति, अध्यापकपदान्यपि लभन्ते परं तिष्ठन्ति 'यथाजाता' एवेति शतशो दृष्टचरम् । केवलं घोषणप्रवणतया विचारशक्तिस्तेषां विलुप्तप्राया भवति, ततः प्राप्तयौवना यदि ते वस्तुतः किञ्चन विज्ञातुं विचेष्टेरन्नपि तथापि न शक्नुवन्ति विज्ञातुम् अनतुशीलनेन तादृशशक्तेरेवोच्छिन्नप्रायत्वात् । नेदं सर्वं कल्पनाप्रसूतम्, अपि तु बहून्येवंविधानि

× प्रभवेयुरित्येव साधु।

निदर्शनानि मया दृष्टानीति सशपथं ब्रवीमि। समये समये बह्वीः पाठशाला विलोकयतो दुरवस्थां चेमां निध्यायतो मम मनसि भाव एवंविधोऽनेकधा प्रादुरभवद्यन्नैवंविधाभिः पाठशालाभिर्देशस्य समाजस्य वा कोऽप्युपकारः, प्रत्युत मनुष्याणां तिर्यक्तापादनरूपो महानपकारः। तत एव नेमाः पाठशालाः, अपि तु सूनागृहाण्येतानि, यानीयतां बहूनामायुर्व्यर्थतां नयन्ति कदर्थयन्ति। कटूक्तिरियं येषां हृदि क्षोभमुत्पादयेत्, तान् सविनयं क्षमां याचे। परमेवंविधया शिक्षादुरवस्थया परःसहस्राणां छात्राणां वृथायुःक्षपणं भवति न वेति ते दरमुकुलितनेत्रं मनाङ् निध्यायन्तु। या अपि प्रतिष्ठिताः पाठशाला बहूनामाचार्याणामुत्पादनाभिमानं दधति, तासामपि यदीतिहासो ऽवलोक्येत, कति च्छात्रा आरम्भादद्यावधि तत्र प्रविष्टाः, कति च साफल्यमाप्ताः, तत्रापि कति वस्तुतो व्युत्पन्ना इति, तदाऽधिकाधिकं प्रतिशतं पञ्चषाणामेव च्छात्राणां साफल्यं विदितं स्यात्, व्युत्पन्नता तु सहस्रेष्वप्येकस्य कदाचिद्भवेत्। तदेवं शेषाणान्तु च्छात्राणां जीवनं व्यर्थतामेव गतम्। आङ्ग्लादिपाठशालास्वपि सर्वे सफला न भवन्तीति सत्यम्, परं संस्कृतपाठशालापेक्षया प्रतिशतं माध्यमम् (औसत) तत्र बह्वधिकं भवति। तदेतत्तारतम्यं प्राथमिकशिक्षानवधानमूलकमेव। अलमधिकजल्पनेन। प्राथमिकशिक्षायां यावदस्माकं पूर्णमवधानं न स्यात्, तावत्सुदुष्करा संस्कृतरक्षा। एतदर्थं धनिनः सादरमभ्यर्थ्यन्ते, यदुच्चशिक्षाप्रचारणप्रतिष्ठालालसां परित्यज्य देशोपकारलक्ष्येण संस्कृतस्य प्रारम्भिकशिक्षणालयास्तैः कृपया प्रतिष्ठाप्यन्ताम्। विद्वांसश्चापि सानुरोधं प्रार्थ्यन्ते-यत्तैः प्राथमिकशिक्षायामेव सयत्नैर्भाव्यम्, तदर्थमेव च स्वाश्रयदातारो धनिकाः सम्यक् प्रबोध्य प्रोत्साहनीयाः। यथा चारम्भादेव शिक्षार्थिनां मतिर्विकासमासादयेत्, तथा सपरिश्रमं प्रयतनीयम्। अन्यभाषाशिक्षका द्रष्टव्याः, अनुकरणीयाश्च। संस्कृतमधिजिगांसवश्छात्रा आदौ हिन्दीभाषाद्वारेण सुशिक्षणीयाः. हिन्दीभाषाव्याकरणेऽपि तेषां पाटवं संपाद्यम्। ततः संस्कृतस्य लघुपुस्तिकाः (पाठावलीः, रीडरपदवाच्याः) द्वारीकृत्य भाषापरिचयस्तेषां संपादनीयः। भाषां व्यवहर्तुं च ते प्रोत्साहनीयाः। व्याकरणमपि चार्वाचीनक्रमेणादौ तद्बुद्धौ संनिवेश्यम्। एवं प्रायेण पञ्चवत्सरानधिगतशिक्षाणां तेषां सूत्रनिबद्धे व्याकरणे प्रवेशः संपादनीयः तेन पूर्वं सूत्रघोषणम्, तदनु वृत्तिघोषणम्, तदुत्तरं चापि हिन्दीभाषायां तदनुवादघोषणमिति शुकारटनप्रक्रिया तैर्न शरणीक्रियेत, 'इकः स्थाने यण् स्यात्' इत्येतावदुक्त्यैव ते बोध्यांशं ज्ञातुं प्रभवेरन्। 'इकके स्थान में यण् होय' इत्यपि घोषयितुं नापद्येत। एवमारम्भिकशिक्षायां परिष्कृतायां व्युत्पत्तिश्छात्रेष्वग्रे सम्यगुदयमासादयिष्यति, शिक्षाफलं च प्रज्ञापरिष्कारः सेत्स्यतीति निश्चप्रचम्। तदस्यां दिशि तूर्णमेव विद्वद्भिर्विधीयतां प्रयत्न इति सानुरोधं मदीयाभ्यर्थना।

## एवं कलानामत्यन्तमुपेक्षा शिक्षायां सप्तमो दोषः

इदानीं तादृशं युगमुपस्थितम्--यज्ज्ञानार्थं विद्याध्ययनम, आजीवननिर्वाहार्थन्तु कलाभ्यास इत्ययं सिद्धान्तः सर्वथा सर्वैरपि स्वीकार्यः स्यात्। अन्यथा उदरभरणसमस्या, कुटुम्बपालनसमस्या वा प्रत्यहं जटिलायिष्यते। 'अधीतम्' 'अध्यापितम्' इत्येतावता न कथमपीदानीं कृतार्थता संभवति। यदि पूर्वकाल इवाध्यापनवृत्तिर्ब्राह्मणमात्रनियताऽस्थास्यत्, तदाध्ययनाध्यापनाभ्यां सिद्धिः समभविष्यत्। कालेन विप्लुतायां वर्णाश्रमस्थितौ मनुष्यसामान्ये चाध्यापनवृत्तिलोलुपतां गते कथं सर्वेषां निर्वाहोऽध्यापनेन संभवेत्। न ममायमभिप्रायः स्वप्नेऽपि संभावनीयः—यद्वर्णाश्रममर्यादाविलोपेऽस्माभिरपि सहयोगिभिर्भाव्यमिति। परं शिरसि निपतितेयं विपत् कथंचित्तु प्रतीकार्या। वर्णाश्रमव्यवस्थामद्यैव यथावत्प्रतिष्ठापयितुं नास्त्यस्माकं सामर्थ्यमिति सर्वेऽपि स्वस्वमनसि जानन्ति। ब्राह्मणानाम्, विशेषतश्च संस्कृतज्ञानां वृत्तिदौर्लभ्यमनुदिनं दुःसहतामुपगच्छति। तदापद्धर्मं स्मृतिप्रवक्तृभिरनुमोदितमनुसृत्य व्यापारव्यवसायं कलानैपुणं वा यदि न वयमुरीकरिष्यामः, तर्हि 'वर्धास्कीम' नाम्नि भयंकरापदावर्तपतिताः सुरभारतीं विलोपयिष्यामः, कलङ्कभाजश्च भविष्याम इति मुहुरिदं विचार्यताम्। आङ्ग्लादिविद्यालयेषु च कलाशिक्षणं प्रायेण सर्वत्रैव प्रवृत्तमिदानीम्। सविनोदं पाटवं बालैरत्रासाद्यत इति महच्छिक्षासौकर्यमत्र। अस्ति च बह्वीभिः कलाभिरस्माकं शास्त्रशिक्षाया अपि सुदृढः संबन्धः, परं ता अपीदानीमस्माभिरुपेक्षिताः संस्कृतज्ञेभ्यो दूरीभूता एव। यथा आलेख्यकला (ड्राइङ्ग) (Drawing) अस्माकं फलितज्यौतिष—रेखागणित—कर्मकाण्डादिशिक्षासु नितरामुपयुज्यते। चित्रणकला, संगीतकला च साहित्याध्ययनस्याङ्गभूते एव। सर्वेऽपि गणनार्हा नायका नायिकाश्चापि कलाभ्यामाभ्यामशून्या आसन्निति नाटकादिभ्यः प्रतीयते। मृत्प्रतिकृति-(माडल्स्) निर्माणकला, वक्षणादिकला वेद्यादिचयनकला च वर्णाश्रमिणां सर्वस्वभूते यज्ञे प्रतिपदमुपयुज्यन्त एव।

> वीणावादनतत्त्वज्ञः स्वरजातिविशारदः।
> तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति॥

इत्येवं महर्षिभिः स्तुता गीतवाद्यकला आङ्ग्लादिमहाविद्यालयेषु प्रचारमासादयन्त्यपि कुतोऽस्माभिरुपेक्ष्यत इति न वयं विवेक्तुं प्रभवामः। छायाचित्रग्रहणम् (फोटोग्राफी) सीसकाक्षरयोजनम् (कम्पोजिंग्) पुस्तकादिमुद्रणम्, मुद्रणलेखः (टाइपराइटिंग्) संक्षिप्तलेखप्रक्रिया (शार्ट राइटिंग्) वस्त्रनिर्माणशिल्पम्, सूचीकर्म, घटीयन्त्रपरिष्कारश्चेत्याद्याः कला आपद्धर्ममनुसृत्य यदि संस्कृताध्यायिभिः शिक्ष्येरन्; तर्हि जीविकाप्रश्न एषां बहुष्वंशेषु समाहितः स्यात्। संस्कृतशिक्षां च युगेऽस्मिन् रक्षयितुं शक्येत। अभिनवक्रीडाश्चापि सभ्यसमाजे प्रतिष्ठाधिगमार्थं संस्कृतच्छात्रैः शिक्षणीया एव। नहि

+ छात्रान् इति वाच्यम्। प्रयोज्यकर्मे नेड्। नी यतोऽकम्।

लोकात् बहिर्भूत्वा लोके प्रतिष्ठालाभः सुकर इति मुहुरेतच्चिन्तनीयम्।

सेयं 'दूषणसप्तभङ्गी' संस्कृतशिक्षापद्धतिमर्दयन्ती सुविविच्य विद्वद्भिर्मार्गाद्दुत्सारणीया। नात्रालस्यवशादेकस्यापि दिनस्य विलम्बः सोढुमर्हः। उद्देश्यं च संस्कृतशिक्षायाः सुविचार्य स्थिरीकरणीयम्। मन्मतौ 'भारतीयसंस्कृतिरेव' संस्कृतशिक्षाया एकमात्रमुद्देश्यमिदानीं भवितुमर्हति, अस्य संस्कृतभाषाध्ययनमात्रसाध्यत्वात्, उद्देश्यान्तराणां च भाषान्तरैः सुसाधत्वात्। तस्मादिदमेवोद्देश्यं स्थिरीकृत्य तद्दिशि सर्वे संस्कृतशिक्षाभिलाषुकाश्चालनीयाः। पूर्वमार्यसभ्यताया मर्मज्ञानम्, अन्याभिः सभ्यताभिस्तदीया तुलना; किं किमस्मत्सभ्यतायां महत्त्वास्पदम्; कया च प्रक्रियया समयेऽस्मिंस्तन्महत्त्वमस्माभिः प्रतिष्ठापयितुं शक्यते; केन च प्रयत्नेन नव्यशिक्षितानां भारतीयानां प्राक्तनभारतीयसभ्यतायां रुचिः संपादनीया—इत्येतदद्यैव मुख्यत इदानीं शिक्षणीयं वस्तु। वेददर्शनपुराणादिमर्मज्ञाः, धर्मप्रचारकाः, कर्मकाण्डकोविदाः, कथाप्रवक्तारश्च शिक्षयानया समुत्पादनीयाः। सामयिकी विचारपद्धतिश्च तैः प्राधान्येन शिक्षणीया। 'पञ्चावयववाक्यप्रक्रिययैव वयं विचारे प्रवर्तिष्यामहे' इत्येवंप्रकारको हठ इदानीमुपहासास्पदतां गतः। एवंविधैर्हठैर्वयं समाजाद्दूरीभवामः। न चार्षेषु ग्रन्थेषु पञ्चावयववाक्यप्रक्रिययैव प्रतिपादनीयमिति नियमो दृश्यते। यया कयापि प्रक्रियया प्रतिपादनं भवतु, पर्यवसाने पञ्चैवावयवास्तत्र फलिष्यन्तीति सत्यम्, परं नव्यन्यायरीत्यैव पञ्चावयवा वक्तव्या इति दुराग्रहमात्रं परित्याज्यमेव। यादृशी प्रवचनशैली समयेऽस्मिन् लोके समादृता, सैवास्माभिश्छात्रेभ्यः+ शिक्षणीया। नवीनं मार्गमवलम्ब्य प्राचीनमर्यादामहत्त्वं प्रतिष्ठापनीयमिति सारः। एवं प्रक्रियाभेदे सामयिकशैलीभेदेऽपि वा ये धर्मविरोधमुद्घाटयन्ति, ते श्रद्धया प्रणम्याः, न त्वनुगमनीयाः। संस्कृतिरक्षणरूपस्योद्देश्यस्य नवीनमार्गाश्रयणमन्तरेणासिद्धेः। शिक्षापद्धतिपरिवर्तनं च देशकालानुरोधेन सदैव भवति, नानेन धर्मविप्लवप्रसङ्ग इति सुदृढं विचार्य मनसि करणीयम्, एवं प्रवर्तमानानां संस्कृतज्ञानां जीविकाप्रश्नोऽपि बहुष्वंशेषु समाहितः स्यात्। कर्मकाण्डकोविदानां धर्मप्रचारशैलीविदुषां कथाप्रवाचकादीनां चाद्यापि जीवनोपयोगिधनलाभदर्शनात्। आयुर्वेदज्यौतिषाद्यपि जीविकानिर्वाहाय शिक्षणीयम्। न तु सर्वैरेकवृत्त्युन्मुखैर्भवितव्यम्, एकया वृत्त्या सर्वेषां जीवननिर्वाहासंभवात्। कलाज्ञानमप्येतदर्थं परमोपयोगीत्यनुपदमुपपादितं न विस्मरणीयम्। भारतीयसभ्यतासर्वस्वभूतमाडम्बरशून्यमल्पव्ययसाध्यं च जीवनमभ्यसनीयं संस्कृतज्ञैः। तदेवं विभिन्नैः प्रकारैः सारल्येन लोकयात्रां निर्वहन्तो वयं प्राक्तनसभ्यतासंरक्षणे सर्वेऽपि यदि बद्धलक्ष्याः स्याम, तर्हि सुनिश्चितं साफल्यं प्राप्नुयाम, संस्कृतभारतीं द्रढयेम, सनातनं धर्मं च भा-



साहित्यरत्न पं० शिवदत्तशास्त्री, तुमसर सी० पी०

P. P. E. Press, Jaipur.

## साहित्य-रत्नपण्डितश्रीशिवदत्तशर्मशास्त्रिमहाभागः तुमसर ।

( ले० श्रीवृद्धिचन्द्रशर्मा शास्त्री, व्याकरणाचार्यः, जयपुरम् )

अयं हि महाभागः जयपुरराज्यान्तर्गतखेतडीसामन्ताधिकारे वर्तमानस्य कोटपुतलीप्रान्तीय-( निजामत )व्यवस्थायां स्थितस्य बनेटीग्रामस्य वास्तव्यो भारद्वाजगोत्रीयगौडब्राह्मणस्य श्रीगणेशरामशर्ममहोदयस्य पुत्रः । अनेन हि महाशयेन भारतप्रसिद्धवैदुष्यस्य महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदमहाभागस्यान्तेवासित्वमुररीकृत्य लवपुर- ( लाहौर ) स्थप्राच्यविद्याविभागे ( ओरिएिटयल कॉलेजे ) अधीत्य पञ्चाम्बुविश्वविद्यालयस्यान्तिमोपाधिपरीक्षां दत्त्वा शास्त्रीति पदवी प्राप्ता । हिन्दीभाषां च सम्यगधीत्य तत्रविषये 'साहित्य-रत्नमि' ति विरुदपि लब्धा ।

एष हि बरडोदनगरस्याधिनायकानां राणेत्युपाधिधारिणां क्षत्रियतज्ञजानां सामन्तानां वंशपरम्परयैव राजगुरुत्वेन संमानितो भूसुरः, स्वर्गीय-काश्मीरनरेशश्रीप्रतापसिंहमहोदयेनापि सबहुमानमर्चितः ।

नातिचिरात् एष महाभागो मध्यप्रदेशस्य तुमसरनगरे निवसति । अस्य पितृचरणाः पण्डितश्रीगणेशरामशर्ममहोदयास्तत्रत्यैर्नागरिकैः सफलचिकित्सकत्वेन परिगण्यन्ते । एभिश्शतशश्चिररोगिणस्तत्रत्या उल्लाघतां नीता एतेषां यशोगानं कुर्वन्तो निवसन्ति ।

वर्तमाने युगे धर्म्मपरिज्ञानार्थं तत्परिपालनार्थं भारतीयप्राचीनसंस्कृतिरक्षणार्थञ्च संस्कृतसाहित्याध्ययनमतीवोपयोगि किन्तु न निर्वाहार्थमिति गुरुचरणेभ्यः सम्यगवबुध्य तदेव कार्यरूपेण परिणमयन्नयमध्यापनादिवृत्तिष्ववधानमददद् व्यवसाय एव दत्तवान् दृष्टिम् । प्रचलत्सु नैकविधव्यापारेषु संलग्नेनाप्यनेन आर्यसंस्कृतिं लक्ष्यीकृत्य ब्राह्मणोचितव्यवसायेप्यवधानं ददता यन्त्रालय (छापाखाना) एकस्तुमसरनगरे संस्थापितः । यन्त्रालयस्यास्य नामास्ति "महावीर-यन्त्रालयः" यत्र कश्चिदपि त्रैवर्णिको बालकः शुल्कं विनैव मुद्रण-शीशाक्षरयोजनादिशिक्षणं शक्नोति ग्रहीतुम् । सेयमुदारता श्रीमतः प्रशंसार्हा । अन्योपि व्यवसायः श्रीमतः "गणेशराम भगवानदास' नाम्ना प्रचलति । तदेवं लक्ष्मी-सरस्वत्योः संमेलनं कस्य वा मनुजस्य मनसि नामन्दानन्दसन्दोहमुद्भावयेत् । अस्तु,

वर्तमानेस्मिन् युगे, यस्मिन् संस्कृत-साहित्य-रक्षार्थं भारतीयसंस्कृतिरक्षणार्थञ्चोदासीने राजवर्गे ताटस्थ्यं भजमाने च श्रेष्ठिसमूहे, आतश्च अव्यवहारतां गते संपूर्णेपि संस्कृत-साहित्ये, न कश्चिदेतदतिरिक्तः शोभनः पन्थाः, यमवलम्ब्य प्रचलन् भारतीयो ब्राह्मणवर्गः उदरभरणचिन्तया विनिर्मुक्तः स्वसंस्कृतिरक्षां विदध्यात् । मन्ये, आदर्शमिमं परिगृह्य भारतीया भूसुराः संस्कृताध्ययने प्रवर्तेरन संस्कृत-साहित्य-रक्षापि संभवेत, निर्वाहचिन्ता च न बाधेतेति शम् ।

---

रतीयानां जीवनेष्वनुस्यूतं पुनरपि विधातुं प्रभवेम। पूरयतु जगन्नियन्ता जगदीश्वरः सुखस्वप्नमिमम्, प्रवर्तयतु च स एव विषयेऽस्मिन् विदुषां विचारप्रवाहमिति संप्रार्थ्य बहुजल्पनापराधकृते पाठकेभ्यः क्षमामभियाच्य च निबन्धोऽयमिदानीं पूर्णतां नीयत इति।

---

# उपसंहारः

सुरभारतीसेविनः पाठकमहाभागाः! शिक्षाङ्कोऽयमियता परिसमाप्यते नाम, परं न तावत्परिसमाप्यतेऽधिगतानां निबन्धानां संख्या। बहवः किल निबन्धाः साम्प्रतमप्यवशिष्यन्त एव। कामं ते निबन्धा विषयस्पर्शाद्दूरगामिनः, केवलं संस्कृतसंबन्धे लिखिताः संस्कृतभाषामयाश्चेत्येतावानेव यद्यपि प्रकृतेन बादरायणः संबन्धस्तथापि प्रेषकमहाभागानामस्मास्वनुग्रहातिरेकमवश्यमभिनन्दामः। परं परिमितवसुसारेण पत्रेणानेन कियद्वा पराक्रम्यतां नाम। वर्षं यावन्निःशब्दं पत्रमङ्गीकुर्वतां मूल्यसंग्रहार्थं V. P. प्रेषणे तु निरनुरोधं तत्परावर्तयतां महानुभावानां संख्या हन्त प्रतिवर्षमुपचीयमानैवाऽस्ति। अस्तु, नायमाक्रोशः समाप्तिमङ्गलावसरमर्हति। येषां महाभागानामार्थिकेन साहाय्येन कार्यमिदमपूर्यत नूनमेतेषां वयमत्यर्थं कृतज्ञाः। सत्यवसरे नामानि तेषां प्रकाश्येरन् कृतज्ञतया।

ये तु महानुभावा निबन्धलेखं मुहुः प्रतिजानन्तोपि, पाञ्चालीचीरमिव प्रेषणावधि मुहुर्दीर्घ–दीर्घतरीकुर्वन्तोऽपि, 'अस्यां भाषायां लेखिष्यामः' अनेन [1] समयेन प्रेषयिष्यामः' इत्यादिनानाधाऽस्मान्नर्तयन्तोऽपि, पर्यन्ते शून्यमेवाऽदर्शयँस्तेषामपि वयं कृतज्ञा एव। यतो हि '[2]शनैरनुष्ठितं कार्यं नानुबध्नाति दूषणम्' इति विलम्बवशात्स्वतः संभूतम्। एवमेव चित्रादिप्रेषणविषयेऽपि बहुभिः प्रतिज्ञाय केवलं विलम्ब एव संपादितो नाऽस्माकमवलम्बः। अत एवाऽनुग्राहकमहाभागा अपि स्वल्पसंपत्साराणां संस्कृतकार्यकर्तॄणां सहजसुलभमिदंविधं संकटमनुमाय क्षाम्येयुरेवेति विश्वसिमः।

शिक्षासमस्यां सरलीकर्तुमधिगता इमे निबन्धास्तु कीदृशा इति तु विचारः पाठकायत्त एव, नास्माकमवसरोऽत्र वाचाम्। किन्तु नास्मिन्स्तोकोऽपि संदेहो यदेकस्मिन् विषये, तत्रापि च तादृशे विषये यस्मिन् हि निखिलसंस्कृतसेविनां जीवनमरणयोः प्रश्नो निगूढोऽस्ति, इयतां पण्डितानां लेखनी प्रवृत्ता भवेत्सुरभारत्यामयं प्रथमोऽवसरः। महदिदं च गौरवमस्माभिरेवाऽधिगतं यद् येषां काश्यादिस्थप्रत्नपण्डितमहाभागानां सर्वसमर्था वागेव केवलं यत्र प्राभवत्तत्र तेषां

---

१–'शर्तें'। २–'देर आयद दुरुस्त आयद'।

लेखन्यपि प्रकटक्षेत्रे दर्शनं ददाति, वयं च तत्कृतिसंपादनसौभाग्यं लभेमहीति । अस्तु. पाठकानां सौकर्यार्थं बहूनामेकान्ताऽनुरोधाद्थाऽयं यथाशक्यमाविष्क्रियते—

## निखिलनिबन्धनिष्कर्षस्तद्विमर्शश्च ।

तत्राऽऽहुः—

म० म० श्रीप्रमथनाथभट्टाचार्याः–( पृ० ३ )

'आर्याणां दृष्ट्या मानवजन्मनः साफल्यं भगवतः साक्षात्कार एव । साम्प्रतिकसभ्यजनेषु प्रसृतेन जडविज्ञानेन तु न दुःखनिवृत्तिः । अत एव यया तत्संपद्येत सैव शिक्षा' इति सारम् ।

विद्वद्वरचण्डीप्रसादसुकुलाः–( पृ० ७ )

श्रावण्यां प्रौष्ठपद्यां वेत्यादिमनुस्मृतिचतुर्थाध्यायस्थः अध्ययनकालः, साङ्गचतुर्वेदरूपोऽध्ययनीयविषयश्च निर्दिष्टः (आर्षशिक्षापद्धत्याम्)। पुरा वेदा एवाध्येया आसन् । ततस्तर्क-शङ्कासु प्रसृतासु पूर्वोत्तरमीमांसादिशास्त्राणामध्ययनं प्रवृत्तम् । अध्ययनस्थानं च काशी तक्षशिला वाऽऽसीत् । सरस्वतीमासिकपत्रोद्धृततक्षशिलाविद्यालयपरिचयः ( पुरातनशिक्षापद्धत्याम् ) ।

श्रीदामोदरगोस्वामिनः ( पृ० १० )

अधीतिबोधाचरणप्रचारणान्येव न शिक्षाया अङ्गानि, अपि तु प्रत्येकं पुनश्चत्वारो भेदा इति संहृत्य षोडशाङ्गानि शिक्षाया इत्येतावन्मात्रं वक्तव्यं 'शिक्षधात्वर्थतावच्छेदकविद्योपादानात्मकफलस्यैव .... संपनीपद्यमानतां बिभर्ति । पठनस्यैव तार्तीयीकं लिखन' मित्यादिनरीनृतद्भिः पदैरुपनिबद्धम् ।

देवर्षिभट्टश्रीरमानाथशास्त्रिणः ( पृ० १३ )

पूर्वतः प्रसृताया अत्युपयोगिन्या अपि संस्कृतभाषायाः साम्प्रतं प्रचारो लोकानामर्थापेक्षित्वाद्दुःसंभवः । तदर्थं बह्वर्थव्ययेन साम्प्रतिकविज्ञानादिपुस्तकानि भाषायामस्यां निर्मेयाणि । तदभावे तु संस्कृतशास्त्राध्ययनेन साकं जीविकोपयुक्तविद्या वैद्यक-ज्यौतिष-राजभाषादिरवश्यमुपादेया ।

राजगुरुश्रीगोपीनाथशास्त्रिद्राविडाः M. A. (पृ०२३)

हिन्दुजात्यै संस्कृतमपरिहार्यम् । विना तदध्ययनं संस्कृतसंपृक्तानि व्यवहारादिकार्याणि न सम्यग्भवन्ति । संस्कृताध्ययनं सम्प्रत्युपलभ्यमानमपि केवलं काव्यसाहित्य एव । दर्शनादिशास्त्राध्ययनं विरलीभवति । छात्रवृत्त्यादिद्वारा तत्प्रोत्साहनीयम् । प्राक्तनपद्धत्या संस्कृताध्ययनमेव शास्त्रेषु सफलं नाङ्ग्लरीत्या । किन्तु साम्प्रतं संस्कृताध्ययनेन नोदरपूर्तिः । अत एव संस्कृताध्यायिभिः कार्यालयादिषु प्रवेशाय हिन्दी शिक्षणीया । तदुपायश्च-संस्कृतपरीक्षासु हिन्दीनिबन्धलेखादिविषय आवश्यकः क्रियेत । आंग्लभाषाप्येभिः सारल्येनाध्येतुं शक्या, आङ्ग्लैस्तु न सारल्येन हिन्दी संस्कृतं वा (प्राक्तनदृष्टान्तैः) । रामायणमहाभारतादीनि सर्वैरध्येयानि । मानसिकदृष्टिविकासाय सामयिकपत्रादीन्यवश्यमध्येयानि । जीविकार्थं पुराणवाचनाद्यभ्यासः कार्यः । बाल्यविवाहश्च प्रान्तेऽस्मिन्प्रचलितो निरोद्धव्यः । स्त्रीणां कृते संस्कृतविद्यालया निर्मेयाः । धर्मविश्वासदा—

ढ्यर्थं भाविसंततिहितार्थं च तासां संस्कृताध्ययनमावश्यकम् ।

भारतं च संस्कृतशिक्षा च

( भट्टश्रीमथुरानाथशास्त्री )( पृ० ४१ )

प्राक्तनी आर्षविज्ञानशिक्षा शास्त्रार्थयुगेन विपर्यस्ता । साम्प्रतं प्रचलिताः संस्कृतोच्चशिक्षाग्रन्थाः शास्त्रार्थयुगस्य । व्यावहारिकमर्थं गुणीकृत्य केवलं शब्दोपर्येव संरम्भं प्रकाशयद्भिर्न तैरस्माकमैहलौकिकः पारलौकिकश्च लाभः । तर्के व्याकरणे च अवच्छेदकतायुगेन वादः प्रचारितः, नाद्य तस्याऽऽवश्यकता । अत एवाऽनुभविभिः संभूय युगोपयुक्तः शिक्षाक्रमो निर्धारणीयः, अन्यथा सेयं शिक्षा येन क्रमेणापचीयते तदनुसारं शीघ्रमेव लयमियात् । पण्डिताः शिक्षासंशोधने कलहायन्तेऽवश्यं किन्तु प्रतिदिनं राजविद्यालयेभ्यो निःसार्यमाणां संस्कृतशिक्षां पण्डितानां नियुक्तिं च निर्दुःखं सहन्ते ।

डा० लक्ष्मणस्वरूप M. A. डी० फिल्० (पृ०४२)

शास्त्रार्थः पाण्डित्यस्य परा काष्ठा । शास्त्रार्थस्योल्लेखो वेदे दृश्यते । विना शिक्षां न शास्त्रार्थः । नैदाना याज्ञिका इत्यादिसंप्रदायोल्लेखो यास्केन कृतः । अत एव ततः पूर्वमपि अध्ययनाध्यापनयोः प्रचार आसीदिति ज्ञायते । युरोपादिषु प्रारम्भिकशिक्षा निःशुल्का । प्राचीनभारते तु समावर्तनात्पूर्वं शास्त्रशिक्षापि निःशुल्का, प्रत्युत निर्भोजनव्ययाऽऽसीत् । साम्प्रतिककालेजानां शिक्षा केवलं 'सांस्कृतिकी' । केवलं व्यावसायिक्यपि संस्कृतिमिश्रणाभावादपूर्णा । प्राचीनभारते तु नीरक्षीरयोरिव द्वयोर्मिश्रणमनुपममासीत् ।

पं० श्रीगिरिजाप्रसादद्विवेदिनः ( पृ० ६५ )

सिद्धान्त–संहिता-होरात्मकस्य ज्योतिःशास्त्रस्य प्राचीनाचार्यैर्नानानिबन्धैः स्थिरीकृतस्य गणित-फलितेतिविभागेन न साम्प्रतं प्रचारः संभवीति समुचितैर्ग्रन्थैस्तत्पाठ्यक्रमो निर्धार्यः । परीक्षासु काव्य-धर्म-हिन्दी–ग्रन्थाः प्रधानविषयसहकारिणो निर्धारिताः, प्रत्यहं प्रवर्द्धन्ते । योगक्षेमदुर्बलानां नायं भारः सह्यः । अत एव पुरा मुख्यग्रामेषु चतुष्पाठीवत् प्राक्तनैः शीघ्रबोध–मुहूर्तगणपत्यादि-क्षेत्रमिति-सिद्धान्तशिरोमण्यादिग्रन्थैर्विभज्य त्रिधा परीक्षा कल्पनीया । किन्तु नवीनयुगोचितगणितविज्ञानादिग्रन्थप्रणयनस्य बह्वयावश्यकता । अत एव शिक्षापरिष्काराय सर्वैः परिकरो बन्धव्यः ।

व्याकरणाचार्याः सूर्यनारायणशास्त्रिणः ( पृ० ६६ )

मनुष्यसमाजायाऽस्त्यर्थमावश्यक्याः शिक्षाया माध्यमं वर्तमानयुगानुसारं नागरी भाषाऽस्तु, आधारभाषा तु संस्कृतम् । एतत्प्रचाराय च नवीनलेखकानामपि ग्रन्थाः पाठ्यक्रमे निवेश्याः ।

नरदेवशास्त्रिणः ( पृ० ७१ )

संप्रति गुरुशिष्यव्यवहार उद्वेगकरः, मूल्येन पठनपाठनसंबन्धो न पवित्रः, परेशानुकम्पया उज्जीवितया पुरातनशिक्षया पुनर्देशः 'पुनीतः' भवतु । इत्येतावन्मात्रः सारः ।

लेखन्यपि प्रकटत्वेत्र दर्शनं ददाति, वयं च तत्कृतिसंपादनसौभाग्यं लभेमहीति । अस्तु. पाठकानां सौकर्यार्थं बहूनामेकान्ताऽनुरोधादथाऽयं यथाशक्यमाविष्क्रियते—

## निखिलनिबन्धनिष्कर्षस्तद्विमर्शश्च ।

तत्राऽऽहुः—

म० म० श्रीप्रमथनाथभट्टाचार्याः-( पृ० ३ )

'आर्याणां दृष्ट्या मानवजन्मनः साफल्यं भगवतः साक्षात्कार एव । साम्प्रतिकसभ्यजनेषु प्रसृतेन जडविज्ञानेन तु न दुःखनिवृत्तिः । अत एव यया तत्संपद्येत सैव शिक्षा' इति सारम् ।

विद्वद्वरचण्डीप्रसादसुकुलाः-( पृ० ७ )

श्रावण्यां प्रौष्ठपद्यां वेत्यादिमनुस्मृतिचतुर्थाध्यायस्थः अध्ययनकालः, साङ्गचतुर्वेदरूपोऽध्ययनीयविषयश्च निर्दिष्टः (आर्षशिक्षापद्धत्याम् )। पुरा वेदा एवाध्येया आसन् । ततस्तर्क-शङ्कासु प्रसृतासु पूर्वोत्तरमीमांसादिशास्त्राणामध्ययनं प्रवृत्तम् । अध्ययनस्थानं च काशी तक्षशिला वाऽऽसीत् । सरस्वतीमासिकपत्रोद्धृततक्षशिलाविद्यालयपरिचयः ( पुरातनशिक्षापद्धत्याम् ) ।

श्रीदामोदरगोस्वामिनः ( पृ० १० )

अधीतिबोधाचरणप्रचारणान्येव न शिक्षाया अङ्गानि, अपि तु प्रत्येकं पुनश्चत्वारो भेदा इति संहत्य षोडशाङ्गानि शिक्षाया इत्येतावन्मात्रं वक्तव्यं 'शिक्षधात्वर्थतावच्छेदकविद्योपादानात्मकफलस्यैव.....संपनीपद्यमानतां बिभर्ति । पठनस्यैव तार्तीयीकं लिखन' मित्यादिनरीनृतद्भिः पदैरुपनिबद्धम् ।'

देवर्षिभट्टश्रीरमानाथशास्त्रिणः ( पृ० १३ )

पूर्वतः प्रसृताया अत्युपयोगिन्या अपि संस्कृतभाषायाः साम्प्रतं प्रचारो लोकानामर्थापेक्षित्वाद्दुःसंभवः । तदर्थं बह्वर्थव्ययेन साम्प्रतिकविज्ञानादिपुस्तकानि भाषायामस्यां निर्मेयाणि । तदभावे तु संस्कृतशास्त्राध्ययनेन साकं जीविकोपयुक्तविद्या वैद्यक-ज्यौतिष-राजभाषादिरवश्यमुपादेया ।

राजगुरुश्रीगोपीनाथशास्त्रिद्राविडाः M. A. (पृ०२३)

हिन्दुजात्यै संस्कृतमपरिहार्यम् । विना तदध्ययनं संस्कृतसंपृक्तानि व्यवहारादिकार्याणि न सम्यग्भवन्ति । संस्कृताध्ययनं सम्प्रत्युपलभ्यमानमपि केवलं काव्यसाहित्य एव । दर्शनादिशास्त्राध्ययनं विरलीभवति । छात्रवृत्त्यादिद्वारा तत्प्रोत्साहनीयम् । प्राक्तनपद्धत्या संस्कृताध्ययनमेव शास्त्रेषु सफलं नाङ्ग्लरीत्या । किन्तु साम्प्रतं संस्कृताध्ययनेन नोदरपूर्तिः । अत एव संस्कृताध्यायिभिः कार्यालयादिषु प्रवेशाय हिन्दी शिक्षणीया । तदुपायश्च-संस्कृतपरीक्षासु हिन्दीनिबन्धलेखादिविषय आवश्यकः क्रियेत । आंग्लभाषाप्येभिः सारल्येनाध्येतुं शक्या, आङ्ग्लैस्तु न सारल्येन हिन्दी संस्कृतं वा (प्राक्तनदृष्टान्तैः) । रामायणमहाभारतादीनि सर्वैरध्येयानि । मानसिकदृष्टिविकासाय सामयिकपत्रादीन्यवश्यमध्येयानि । जीविकार्थं पुराणवाचनाद्यभ्यासः कार्यः । बाल्यविवाहश्च प्रान्तेऽस्मिन्प्रचलितो निरोद्धव्यः । स्त्रीणां कृते संस्कृतविद्यालया निर्मेयाः । धर्मविश्वासदा—

द्धर्यर्थं भाविसंततिहितार्थं च तासां संस्कृताध्ययनमावश्यकम्।

भारतं च संस्कृतशिक्षा च

( भट्टश्रीमथुरानाथशास्त्री )( पृ० ४१ )

प्राक्तनी आर्षविज्ञानशिक्षा शास्त्रार्थयुगेन विपर्यस्ता। साम्प्रतं प्रचलिताः संस्कृतोच्चशिक्षाग्रन्थाः शास्त्रार्थयुगस्य। व्यावहारिकमर्थं गुणीकृत्य केवलं शब्दोपर्येव संरम्भं प्रकाशयद्भिर्न तैरस्माकमैहलौकिकः पारलौकिकश्च लाभः। तर्के व्याकरणे च अवच्छेदकतायुगेन वादः प्रचारितः, नाद्य तस्याऽऽवश्यकता। अत एवाऽनुभवविभिः संभूय युगोपयुक्तः शिक्षाक्रमो निर्धारणीयः, अन्यथा सेयं शिक्षा येन क्रमेणापचीयते तदनुसारं शीघ्रमेव लयमियात्। पण्डिताः शिक्षासंशोधने कलहायन्तेऽवश्यं किन्तु प्रतिदिनं राजविद्यालयेभ्यो निःसार्यमाणां संस्कृतशिक्षां पण्डितानां नियुक्तिं च निर्दुःखं सहन्ते।

डा० लक्ष्मणस्वरूप M. A. डी० फिल्० (पृ०४२)

शास्त्रार्थः पाण्डित्यस्य परा काष्ठा। शास्त्रार्थस्योल्लेखो वेदे दृश्यते। विना शिक्षां न शास्त्रार्थः। नैदाना याज्ञिका इत्यादिसंप्रदायोल्लेखो यास्केन कृतः। अत एव ततः पूर्वमपि अध्ययनाध्यापनयोः प्रचार आसीदिति ज्ञायते। युरोपादिषु प्रारम्भिकशिक्षा निःशुल्का। प्राचीनभारते तु समावर्तनात्पूर्वं शास्त्रशिक्षापि निःशुल्का, प्रत्युत निर्भोजनव्ययाऽऽसीत्। साम्प्रतिककालेजानां शिक्षा केवलं 'सांस्कृतिकी'। केवलं व्यावसायिक्यपि संस्कृतिमिश्रणाभावादपूर्णा। प्राचीनभारते तु नीरक्षीरयोरिव द्वयोर्मिश्रणमनुपममासीत्।

पं० श्रीगिरिजाप्रसादद्विवेदिनः ( पृ० ६१ )

सिद्धान्त-संहिता-होरात्मकस्य ज्योतिःशास्त्रस्य प्राचीनाचार्यैर्नानानिबन्धैः स्थिरीकृतस्य गणित-फलितेतिविभागेन न साम्प्रतं प्रचारः संभवीति समुचितैर्ग्रन्थैस्तत्पाठयक्रमो निर्धार्यः। परीक्षासु काव्य-धर्म-हिन्दी-ग्रन्थाः प्रधानविषयसहकारिणो निर्धारिताः, प्रत्यहं प्रवर्द्धन्ते। योगक्षेमदुर्बलानां नायं भारः सह्यः। अत एव पुरा मुख्यग्रामेषु चतुष्पाठीवत् प्राक्तनैः शीघ्रबोध-मुहूर्तगणपत्यादि-क्षेत्रमिति-सिद्धान्तशिरोमण्यादिग्रन्थैर्विभज्य त्रिधा परीक्षा कल्पनीया। किन्तु नवीनयुगोचितगणितविज्ञानादिग्रन्थप्रणयनस्य बह्वयावश्यकता। अत एव शिक्षापरिष्काराय सर्वैः परिकरो बन्धव्यः।

व्याकरणाचार्याः सूर्यनारायणशास्त्रिणः ( पृ० ६६ )

मनुष्यसमाजायाऽत्यर्थमावश्यक्याः शिक्षाया माध्यमं वर्तमानयुगानुसारं नागरी भाषाऽस्तु, आधारभाषा तु संस्कृतम्। एतत्प्रचाराय च नवीनलेखकानामपि ग्रन्थाः पाठ्यक्रमे निवेश्याः।

नरदेवशास्त्रिणः ( पृ० ७१ )

संप्रति गुरुशिष्यव्यवहार उद्वेगकरः, मूल्येन पठनपाठनसंबन्धो न पवित्रः, परेशानुकम्पया उज्जीवितया पुरातनशिक्षया पुनर्देशः 'पुनीतः' भवतु। इत्येतावन्मात्रः सारः।

साहित्याचार्यपुरुषोत्तमचतुर्वेदिनः ( पृ० ७३ )

सर्वतः प्रशस्यापि संस्कृतभाषा साम्प्रतमस्माकमुपेक्षया वैरल्यमुपयाति । तत्र कारणं लौकिकविद्याशून्यत्वं पण्डितानाम् । साम्प्रतिकपरीक्षाभिरेकैकदेशपाण्डित्येन नैहलौकिको न पारलौकिको लाभः । बहव आचार्यपदवीधराः पुराणादिग्रन्थानां संस्काराणां च नामान्यपि न विदन्ति । तर्क-व्याकरणयोरनावश्यकः शब्दजालः प्रसारितः । साहित्यायुर्वेदादिष्वपि न प्रायोगिकी शिक्षा । अत एव प्राक्तनशैल्या सर्वविधविद्याप्रावीण्याय प्रचारः प्रारभ्यताम् ।

म० म० श्रीबालकृष्णमिश्रमहाभागाः ( पृ० ७८ )

कोष-स्वस्वशाखीयवेद-कौमुदी-मुक्तावली-चन्द्रालोक-काव्यीयकतिपयगद्यपद्यांश-श्रुतबोध-गुणनभाजनादिगणितं च सर्वैरध्ययनीयम् । ततः प्रतिभानुसारं वेद-व्याकरण-न्यायादीनामन्यतमस्य प्रधानतयाऽध्ययनम्, इतरेषु शास्त्रेषु च परार्ध्यस्यैकस्य निबन्धस्य । पञ्चविंशवर्षाच्चार्वाक् तदेतत्पठनं समाप्येत । दैवबलमवलम्बमानैर्धर्मशास्त्राविरोधेन व्ययमल्पीकुर्वद्भिर्भगवदाराधनादिना पोषणचिन्तातिरस्करणं विधेयम् । प्राचीनशैलीपण्डितानामिदानीमप्यादरः । येऽत्र विप्रतिपन्नास्ते साम्ना बोध्यन्ताम्, यदि तथापि न तेषां बोधस्तर्हि तेषां बुद्धिशोधनाय परमेश्वरः प्रार्थ्यताम् ।

श्रीजयरामदासस्वामिनः ( पृ० ८३ )

पुरा ह्याचार्यः शिष्यश्च परस्परं सम्यक्परीक्ष्य मिथः समबध्येतामिति सुश्रुतोक्तप्रकारोद्धरणम् । साम्प्रतिका आयुर्वेदशिक्षायां नवीनपद्धतिमभिरोचयन्ति किन्तु प्रचिचारयिषिता नवीनप्रकारा आर्षग्रन्थेषु सर्वे सूत्ररूपेणोपलभ्यन्ते । अत एवाऽस्माकं सा आर्षपद्धतिरेव युगानुसारं परिष्कृत्य, सूत्रेभ्यो विवृतिरूपतया परिवर्ध्य चावलम्बनीया ।

भट्टश्रीबलभद्रशर्माणः ( पृ० ८८ )

शिक्षाया उद्देश्यं शिक्षैव । उदरचिन्ता तु आनुषङ्गिकी । केवलं जीविकाप्रयोजनतयोपादीयमाना शिक्षा साम्प्रतं न फलेग्रहिरिति प्रत्यक्षम् ।

पं० योगीन्द्रझामहोदयाः ( पृ० ६१ )

मनुचतुर्थाध्यायस्थोऽध्ययनक्रमः कालश्च वर्णितः । आनुषङ्गिकरूपेण-स्त्रीणामुपनयनं चाप्युक्तं न वेति पूर्वपक्षीकृत्य भर्तुः सकाशाद्रामायणादेरध्ययनमेव तत्कृते स्वाध्यायः साधितः । अपररात्राध्ययनं वेतनेनाध्यापनं चेत्यादिविषयेऽप्यनौचित्यं पूर्वमाशङ्क्य ततः शास्त्रेण तत्समाधानम् । आयुर्वेद-व्याकरण-साहित्येष्वेव सम्प्रति छात्राणां प्रवृत्तिः । अत एव शास्त्ररक्षायै सर्वासु परीक्षासु निम्नाङ्कितग्रन्था आनुषङ्गिकरूपेण क्रमान्निवेश्याः—१ रुद्राष्टाध्यायी २ मन्त्रसंहिता ३ ऋग्वेदभाष्यभूमिका ४ मनुस्मृतिः ५ निरुक्तम् ६ न्यायप्रकाशः ७ सांख्यतत्त्वकौमुदी ८ मुक्तावली ९ मुहूर्तचिन्तामणिः १० वेदान्तसारः ।

पं० पूर्णानन्द बी० ए० ( पृ० १०२ )

पाश्चात्यसभ्यता-पराधीनतेत्यादिकार-

णैः संस्कृतभाषा व्यवहारेऽनुपयुक्ता जाता। न ह्यस्यां प्रचारसाधनानि मासिकपत्रादिप्रकाशन-परस्परसंभाषा-पत्रलेखादीनि पण्डितैरवलम्ब्यन्ते। शिक्षाप्रकारोऽपि न यथार्थः। अनुवाद उपेक्षितप्रायः। परीक्षाप्रश्ना अपि रटनमात्रस्पर्शिनो नाऽऽलोचनाप्रधानाः। ग्रन्था अपि अतीतकालरचनायुक्ता इत्यादि। अतः शिक्षणपद्धतिः रचनाप्रधाना, परीक्षाप्रश्नाः कल्पनाप्रधाना इत्यादिः परिष्कारः कर्तव्यः। बालानां हृदये हास्यरसप्रधानया सरलरचनया, अन्येषां हृदये उपन्यासकाव्यनाटकादिमरसरचनया मासिकपत्रादिभिश्च संस्कृतभाषां प्रत्युत्कण्ठा जनयितव्या।

श्रीधूरश्रामहोदयाः ( पृ० १ ४ )

पारमार्थिक-धार्मिक-व्यावहारिकेतित्रिविधापि शिक्षा प्राचरत्पुरा यथाकालं भारते। वैदेशिकराज्याश्रिताऽस्माकं संस्कृतिः साम्प्रतं स्वरूपरक्षणेऽनाथेव। तदिदानीं नवीनापि शिक्षा भारतीयशौचाचारधर्मकर्मनीतिरीतिप्रवणाऽस्माभिरादरणीया, यया हि एकदेशिज्ञानशालितादिकलङ्करूपान्परकीयाक्षेपान् प्रक्षिपेम। परीक्षापिशाचो हन्त संप्रति ब्रह्मचारिणो गृहस्थान् वानप्रस्थान् यतीनपि च निर्विशेषमाविशति यया प्राक्तनपद्धतिर्नष्टा।

सम्प्रति-सर्वैरेव संस्कृतच्छात्रैः श्रेणिक्रमेण स्वल्पः सार्थो वेदभागोऽध्येयः ( तदर्थं नवीनपद्धत्या ग्रन्था निर्मेयाः ), एवं सुगमप्रक्रियया लिखिता धर्मशास्त्रपुराणेतिहासगणितग्रन्थाः, प्राचीनार्वाचीनविज्ञानानां विज्ञानसिद्धान्तामाधृत्य सुरभारत्यां लिखिताः ( कोष्ठे पाश्चात्त्यभाषाप्रतिशब्दैर्युक्ताः ) विज्ञानग्रन्थाश्चानिवार्यरूपेण पाठ्याः स्युः। सर्वेषु विद्यालयेषूच्चकक्ष्यासु संस्कृतेनैव गुरुशिष्ययोर्व्यवहरणं स्यात्, कार्यालयकार्यमपि संस्कृत एव स्यात्। परिषदः स्युः, वादादि-( डिबेट् )सभाः स्युर्यत्र पुरस्कारो दीयेत। युरोपादिषु ये आविष्काराः स्युस्ते संस्कृतेऽनूद्य पाठ्यप्रणाल्यामनिवार्यरूपेण स्थाप्येरन्। दैनिकव्यायामसंस्थाः प्रतिविद्यालयं स्युः। सुरभारत्यां दैनिकमारभ्य त्रैमासिकपर्यन्तानि चित्रादिचमत्कृतानि समाचारपत्राणि प्राचुर्येण प्रकाश्येरन्। पत्रसंपादकानामेका परिषत्स्यात् यस्यां ते महानगर-सागरादीनां नाम-परिभाषाश्चैकमत्येन स्थिरीकुर्युः। समस्तभारतव्यापिनी तत्तत्प्रान्तीया वा विशिष्टविदुषामेका समितिः स्यात् यस्यां वेददर्शनव्याकरणादिशास्त्रीयग्रन्थलेखकेभ्यः, काव्यनाटकादिकर्तृभ्यः, कलाकुशलेभ्यः, शास्त्रार्थविजेतृभ्यः, समाचारपत्रसंपादकेभ्यः, ज्यौतिष-चिकित्साचमत्कारदर्शकेभ्यः पुष्कलं पारितोषिकं विरुदादिकं च प्रदीयेत।

एतस्य मनोराज्यस्य संपत्तये समस्तस्यैव भारतस्य महामहिमशालिनां संस्कृतपण्डितानामेको महीयान् समवायः स्यात्, यस्य सर्वप्रान्तेषु शाखाः स्युः। एतस्य निर्धारितसदस्यैः समस्तभारतव्यापि भ्रमणं विधाय राज-महाराज-श्रेष्ठिभ्यः प्रचुरधनसंग्रहः क्रियेत। संगृहीतस्य धनस्य च राजेष्टीकरणं विधीयताम्। अस्यै परिषदे च भारतशासकेन संस्कृतशिक्षापद्धतेः कृते प्रमाणीकरण-

परिवर्तन-परिवर्धनोनीकरणनूतनांशनिवेशादयः सर्वेप्यधिकारा दीयेरन् । [यदि भामहाभागाः क्षाम्येयुस्तर्हि सविनयं सेवायां निवेदये यत् मनोराज्यस्य सिद्धये संस्कृतज्ञमण्डले सेयमेकतापि मनोराज्यमात्रमेव । यावदहं स्मरामि-वाराणस्यां वर्णाश्रमस्वराज्यसंघस्य यद् गतमधिवेशनमभूत येन सह छात्रसंमेलनस्याप्यधिवेशनमासीत्, तत्र भामहाभागस्यापि नाम कार्यकर्तृषु प्रकटितमदृश्यत । तत्र संस्कृतज्ञानां यादृशी एकतासीत्सा प्रत्यक्षं तु विलोकितैव, परं प्रकटपत्रैर्दिग्दिगन्तरेष्वपि सडिण्डिमघोषमघोष्यत—'ये हि संस्कृतशिक्षायां परिवर्तनमिच्छन्ति ते धर्मबहिर्भूताः' इत्यादि ] ।

पं० वृद्धिचन्द्राचार्यः ( पृ० ११५ )

शिक्षा हि शक्तिसंपादनम् । 'साक्षात्कृतधर्माण ऋषयो बभूवु' रित्यादियास्कवाक्यात् वेदकालमारभ्य ऋषिभिः शिक्षाद्वाराऽन्ये शक्ताः संपादिताः । आसीत्पूर्वमर्थप्रधाना, अत एव वेदकाले नानाविज्ञानस्य प्रचारोऽभूत, यत्रत्यं वनस्पतीन्द्रियविज्ञानं महाभारताज्जगदीशचन्द्रवसुरुपजिजीव । अत एव वेदे प्राणधारणोपयोगि-अग्न्यादिपदार्थानामेव स्तुतिरवाप्यते । 'आ ब्रह्मन्०' इत्यादिमन्त्रेपि राष्ट्रे राजन्यादीनां शूरत्वादि संप्रार्थ्य योगक्षेममाशास्ते । ततो जीवनव्यवहारोपयोगिपदार्थान्वेषणे पर्यवसिते आत्मादिसंबन्धिविचाराणां जन्म, यो भाग उपनिषन्नाम्ना ख्यातः । ततो धर्मार्थकामेत्यादि जीवनस्य लक्ष्यचतुष्टयं स्थिरीकृत्य गुणादानकाङ्क्षया लोकस्य ऋषीणां सविधे गमनम्—येन हि उपनयनसंस्कारस्य जन्म । इत एव शनैः शनैरध्ययनं प्रवृत्तं यस्य हि आर्ष-बौद्धादिकालेषु नानारूपं सत् वर्तमानं रूपं भृतकाध्यापकत्वपर्यन्तं जातम् । बौद्धकालं यावत् पदार्थगुणदोषान्वेषणप्रधाना शिक्षा प्राचरत । बौद्धकाले त्वहिंसाया अतिप्रचारेण यज्ञविद्या--शल्यशास्त्रादिभारतीयविज्ञानानां मुखमुद्रणं जातम् । आर्यसभ्यतारक्षणार्थं बौद्धैः सह शास्त्रार्थः प्रावर्तत । वादग्रन्थानां पठनपाठनप्रचारेण आर्यसिद्धान्तेष्वपि वादकलहः प्रारब्धः, येन हि प्रशान्तेपि बौद्धविप्लवे स्वपथाद्विच्युता विप्राः पूर्वस्मिन्पथि न गत्वा काव्यादिनिर्माणे प्रवृत्ताः । यवनराज्यकालपर्यन्तं बहवः काव्यनाटकग्रन्थाः प्रादुर्भूताः । यवनसम्राजां विलासवासनापूर्त्यै कलात्मकशिक्षणं प्राचरत । किन्तु यवनकाले अर्थप्रधानशिक्षां पराहत्य शब्दप्रधानशिक्षायाः प्राधान्यमभूत् । तत आरभ्य मोक्षरूपधर्ममासेवमाना अपि अन्तस्तले अर्थेन च कामेन च संबन्धमस्थापयन् । विना ह्यर्थं न तेषां जीवनम्, केवलं भारतीयसंस्कृतिरक्षानाम्ना प्रवञ्चयन्तो भाविसंततिं दारिद्र्ये पातयन्ति । यया शिक्षया जीवनव्यवहारोपि न सा कथं शिक्षा ( शक्तत्वसंपादिका ) ? वादग्रन्थैः शृङ्गारादिकाव्यैर्वा न संस्कृतसाहित्यस्य सर्वाङ्गीणता । अत एव सर्वेपि विषया भाषान्तरोपयोगेन निर्मितैर्नवीनपुस्तकैरस्याधेयाः ।

सारस्वत पं०दीनानाथशास्त्रिणः ( पृ० १२६ )

पूर्ववत्संस्कृतभाषाया व्यावहारिकत्वार्थम्—संस्कृतभाषाया राजकीयविश्वविद्यालयेषु प्राधान्याय तदध्यापकपण्डितानां वेतनवृद्धयै च यत्नः, छात्राणामुत्साहनम्, समाचारपत्रवृद्धिः, बृहत्कोषद्वय–( संस्कृतात् हिन्दी, हिन्दीतः संस्कृतम् ) निर्माणम्, प्रारम्भिकशिक्षायां सारल्यम्, संस्कृतसंमेलनानां सृष्टिः, नानारूपैः संस्कृतविदुषां संमाननम्, संस्कृतव्याकरणप्रचारः, संस्कृतविदुषामेकता, इति दशोपाया आस्थेयाः ।

पं० द्रव्येशझामहाशयाः ( पृ० १३२ )

अध्ययनमितिहासमुखेन पूर्वमासीदित्युपनिषत्सु श्वेतकेतूपाख्यानादिना ज्ञायते । इदमेवालोचनात्मकपाठनम् । अधुना सा पद्धतिर्लुप्ता । परीक्षकेण एकमात्रेऽप्यालोचनात्मके प्रश्ने कृते संस्कृतविद्यार्थिषु कलकलः प्रसरति । ततश्चैवंविधपद्धत्या विदुषां चैकमत्येन संस्कृतोन्नतिः कार्या । हिन्द्यादिभाषान्तरपुस्तकस्थापनेन संस्कृतोन्नतिर्न स्यात् । यथा वेदान्तशास्त्रस्य निरीश्वरवादत्वप्रतिपादकोपि हिन्दीग्रन्थः संस्कृतपरीक्षायां प्रचारितः ।

तारादत्तपन्तशास्त्रिणः ( पृ० १३० )

संस्कृतावनत्या संस्कृतपण्डितसमाजस्यैव दुःखम् । पूर्वमीश्वरचन्द्रविद्यासागरेण, काशीस्थैः पण्डितैश्चास्योद्धारस्य सूत्रपातो विहितः, संस्कृतसाहित्यसंमेलनेनापि प्रचार आरब्धः परं हिन्दीसंमेलनेन स्वोद्देश्यस्य यावदुन्नतिः कृता न तथाऽनेन । संस्कृतपण्डिता नैकमत्येन कदाचित्संमिलन्ति । 'राजपूताना-बोर्डेन' संस्कृतविदुषां वृत्तिविच्छेदः ( संस्कृतमादाय दत्तबी० ए०आदिपरीक्षा एव 'स्कूलेषु' पाठकाः स्युरिति नियमात् ) कृतो न कैश्चित्तस्य प्रतिवादो यथावत्कृतः । 'व्यावरकेन्द्रात्' प्रतिवादः कृतो नाद्यापि फलम् । पण्डितानां संघटनम्, संस्कृतमाहात्म्यपरिचायकं भारतीयात्मविद्यादिविद्योतकं हिन्दीपत्रप्रकाशनं च कर्तव्यम् ।

पं० बदरीनाथशास्त्रिणः M A. ( पृ० १४० )

अनादिकालान्मनुष्येतरे प्राणिनस्तस्यामेवाऽनुन्नतदशायाम्, किन्तु मनुष्यः शिक्षाप्रभावादद्यपर्यन्तं क्रमेणोन्नतदशायाम् । शिक्षयैव च निवृत्तिमार्गमभ्यस्य मोक्षरूपां परां काष्ठामाप्नोतीत्येव तस्या महदुद्देश्यम् ।

शिक्षासंस्कारो वा आर्यसंस्कृतेर्दाहसंस्कारो वा

( भट्टश्रीमथुरानाथशास्त्री ) पृ० १४१ )

सर्वादौ मानवसभ्यताप्रवर्तिकया संस्कृतभाषयैव संप्रति विज्ञानयुगेऽस्मिन् मस्तकमुन्नतं भारतस्य । किन्तु महात्मगान्धीप्रभृतयो भारतोन्नतिकामुका अपि नेमां प्रति दृशमपि क्षिपन्ति । 'वर्धास्कीम'मध्ये संस्कृतस्य न समादर इत्येव न, किन्तु हिन्दीभाषाया हिन्दुसंस्कृतेश्चापि सर्वनाशः प्रारब्धः । यवनानग्रसरीकृत्य हिन्दुसभ्यतास्थाने यावनधर्मस्य यावनेतिहास-सभ्यतयोश्चापि प्रचारः स्यादिति 'बुनियादी राष्ट्रीय शिक्षा' दर्शनेन स्पष्टं ज्ञायते । तन्त्रादिसंबद्धां वैज्ञानिकीं नागरीं लिपिं विलोप्य तत्स्थाने अन्यान्यक्षराणि प्रचारयितुमिष्टानि, येन हि प्राची-

नलिपिलिखित-मुद्रितानां संस्कृतग्रन्थानां शनैर्विलोप एव स्यात् । यतो ह्ययमेव राष्ट्रीयः शिक्षाप्रकारः सर्वभारतव्यापी स्यादग्रे । अत एव धर्माभिमानिभिर्द्रुततरं प्रतिविधेयम्, अन्यथा हिन्दुत्वाय जलाञ्जलिरेव प्रदेयः स्यात् ।

वैद्यमणिरामशर्मभिषगाचार्याः ( पृ० १४६ )

जनिताऽनेकभाषा सेयं परमोन्नता संस्कृतभाषा । अस्या व्यावहारिकत्वाय संस्कृतसाहित्यमण्डलेन ( मन्ये संमेलनार्थमयं व्यपदेशः ) 'गवर्नमैण्टराज्यं स्टेटराज्यं श्रेष्ठिवृन्दं' चार्थयित्वा धनसाहाय्यं भूमिसाहाय्यं च प्राप्यैको ग्रामो वासयितव्यो यत्र केवलं पण्डिताः संस्कृतमेव व्यवहरन्तो वसेयुः । तेषां पुत्रपौत्रप्रपौत्रैः संस्कृतभाषणं प्रसरेत् । सरलश्चायमुपायः—मातापितृभ्यां जन्मत एव बालः संस्कृतभाषामभ्यासनीयः । प्रत्येकसंस्कृतविद्यालये छात्राध्यापका मिथः संस्कृतेन व्यवहरेयुरिति दृढतरं प्रबन्धनीयम । सरलसंस्कृतपुस्तकैः पत्रैः सचित्रैर्लोकरुचिर्जननीया । व्यावहारिकशब्दानां नवीनः कोषः संपाद्यः । संस्कृताध्येतॄणां कृते छात्रवृत्ती राजकीया नियमनीया । संस्कृतभाषाध्ययनस्याऽनिवार्यत्वनियमः कारयितव्यः । अन्यविषयाः संस्कृतेऽनूद्य पाठ्यपुस्तकैः प्रचार्याः ।

पं० मायादत्तपाण्डेयाः ( पृ० १२३ )

स्वप्ने दृष्टम्—वेदोद्धारायैकेन राज्ञा भूयसी भूमि-धनसंपत्तिर्वैदिकपद्धतेः प्रचाराय दत्ता । तद्द्वारा पाण्डेयमहाभागेन गङ्गातटे क्रोशद्वयमिते भूभागे सभाभवन-पुस्तकालय-मुद्रायन्त्र-कारुनिवास-क्रीडाङ्गण- फलपुष्पाराम-अध्यापक-छात्रनिवास—ब्रह्मचर्याश्रमादयो निर्मापिताः । कार्यनिर्वाहकसमितिश्च करपात्री-गङ्गानाथझादिसप्तपुरुषाधिष्ठिता कृता । एतेन व्यवसायेन चतुर्दिक्षु भारतानुराग-वैदिकयुगादयः प्रवृत्ताः ।

वाराणसेय-सभापतिपण्डिताः ( पृ० १२८ )

प्राग्वत् आन्वीक्षिक्यादिशिक्षा साम्प्रतं नष्टा । वर्तमानपद्धतिस्त्ववनतिकारिणी । संस्कृतोन्नतये विभागत्रयं स्थाप्यम्—एकत्र धार्मिकशास्त्रालोचकाः प्रगाढपण्डिताः संनिवेश्याः, अपरत्र संस्कृतसाहित्यज्ञानपूर्वकं देशकालानुसारिज्ञानापेक्षाः, तृतीये संक्षिप्तसंस्कृतज्ञानेन सह तत्तत्कार्यक्षेत्रीय-स्वकार्यविधायकाः । एतदर्थं नूतनाधुनिकसर्वविधाविष्कृताङ्गलादिभाषागतविषयपुस्तकानि' मुद्राप्याणि । "विशेषरूपेणाऽस्माकं मतमेतद्विषये यू० पी० प्रान्तीयराजकीयसंस्कृतशिक्षासमित्या यन्निर्धारितं तत एवागतं स्यात्" । अर्थात् शिक्षासमितेर्यन्मतं तदेवैषामित्याशयः ।

पं० प्रभुनारायणसाहित्यरत्नम् ( पृ० १२६ )

आत्मोन्नतिं व्यवहारपरत्वं चादाय द्विधा शिक्षा । वर्तमानयुगीयाः शिक्षासिद्धान्ता वैदेशिकेभ्यो गृहीताः । उदरपूर्तिः शिक्षायाः फलम । किन्तु भारतस्य प्राचीनो दृष्टिकोणः आत्मशान्तेरुपरि । वैदेशिकशासकसभ्यता, अस्माकं संस्कृतिश्चेति मिथो भिन्ने । अत एव द्वयोः सामञ्जस्यं कठिनमिति सूक्ष्मं विचार्य एवायं प्रश्नः

कमलादेवी गुल्लानीशास्त्री ( पृ० १६३ )

संस्कृतविद्यार्थिनो नित्यनूतनात्संसारादपरिचिताः । वार्तालाप-वस्त्रपरिधान-भोजनादिकं किमपि न जानन्तीत्यन्ये गदन्ति । ते व्यवहारतो दूरगानि प्राचीनशैलीपुस्तकानि पठित्वा परीक्षामात्रमुत्तरन्ति । अतः पाठ्यविधिः परिवर्तनीयः । आधुनिकविज्ञानविषयकाणि पुस्तकान्यवश्यं लेखितव्यानि ।

प्रतापदुर्गीयश्रीरामस्वामिनः ( पृ० १६४ )

यादृशः शिक्षकस्तादृशा एव शिष्ये भावाः समाविशन्ति । छात्रशिक्षकयोरुदारः पवित्रश्च प्राक्तनः संबन्धो वैदेशिकसंसर्गलब्धेन वित्तोपार्जनभावेन वाणिज्यव्यवसायवत् संपादितः । अध्यापकस्य यमादर्शं छात्र उपजीवति सोपि वैदेशिकः ।

कथाभट्ट पं० नन्दकिशोरशर्मणः ( पृ० १६८ )

संस्कृतभाषाया लोकोपयोगाय—हिन्दीभाषया यथा ह्यावश्यकविषया भाषान्तरेभ्योऽनूद्य प्रचारितास्तथा संस्कृतेपि विधेयम् । नन्दलालदेमहाशयेन महाभारत—पुराणादिगतभौगोलिकस्थानानि सांप्रतं कैर्नामभिः ख्यातानीत्येतद्विषये पुस्तकं निर्मितं तथा संस्कृतेपि संपाद्यम् । आधुनिकशासकस्वीकृत-मन्वादिगतन्यायालयनियमाः प्राचीननवीनशैलीसमालोचनसहकृताः संस्कृते परिवर्तनीयाः । नवीनाविष्काराणां वृत्तान्तपुस्तकानि व्यावहारिकशब्दाश्च यथाऽन्यैः संपाद्यन्ते तथाऽस्माभिरपि । अवर्तमानविषयसंग्रहः संस्कृते पूर्वतश्चलितः । यथा-ज्यौतिषायुर्वेदादिषु पूर्वमभूत् । पी० वी० काणे डा० सुशीलकुमारदेमहाशयाभ्यां धर्मशास्त्रसाहित्यशास्त्रयोरितिहास आङ्गलभाषायां संकलितस्तद्वत्संस्कृतेऽपि किं न ? शिक्षायां वस्तुपाठादिना प्रत्यक्षपरिचय आवश्यकः । त्रिवृत्करण-पञ्चीकरणयोः प्रत्यक्षप्रदर्शनं कुतो न व्यावहारिकम् । प्रारम्भिकशिक्षायामपि चित्र-मृण्मयप्रतिमादिभिर्वस्तुपाठ आरब्धव्यः ।

साहित्यशास्त्रस्य कीदृशी शिक्षा साम्प्रतमुपयुक्ता

( भट्टश्रीमथुरानाथशास्त्री ) ( पृ० १७२ )

साहित्यशास्त्रस्य फलं काव्यनिर्माणपाटवम् । तद्धि शास्त्रार्थयुगीयैः पुस्तकैर्न भवति, केवलं ग्रन्थलापनपण्डिताः साहित्यज्ञा उत्पद्यन्ते । अत एव-पूर्वैर्यथा स्वसमये नवनवा विषयाः साहित्ये संनिवेशितास्तथा साहित्यविषयविमर्शार्थं रसगङ्गाधरसदृशा ग्रन्थाः सरलभाषया प्रचार्याः । अन्ये चावश्यका विषयाः संयोज्याः । यथा-उपन्यासकथादीनां प्रकाराः । निबन्धलेखविद्या, तुलनात्मकसाहित्यग्रन्थाः, संगीतशास्त्रस्य समायोगः, नवीनभूगोलेतिहासग्रन्थाः, इत्यादयः ।

पं० विद्याधरशास्त्री M. A. ( पृ० १८४ )

येयमैकदेशिकी शिक्षापद्धतिः सा न पारमार्थिकी नापि वा व्यावहारिकी । ये केचन पण्डिताः शिक्षासुधारस्य विरोधं 'निष्कारणं षडङ्गो वेदोऽध्येयः' इति वदन्तः कुर्वन्ति तत्र षडङ्गपदस्यापि स्वारस्यं नास्ति । व्यवहारशब्दो राज्यशासन-समाजशास्त्र-सैनिकविधि-वैज्ञानिकभौगोलिकादिविषयकज्ञा-

नविषयः। अतः पण्डितैरेतद्विषयकप्राचीन-नवीनपुस्तकान्वेषणार्थं यत्यताम्।

टैगोरानुवक्ता पं० लक्ष्मीकान्तत्रिपाठी ( पृ० १८६ )

आर्षं ज्ञानमिमामनन्तां प्रकृतिमवलम्ब्य प्रवृत्तम्, किन्तु साम्प्रतिकं ज्ञानमचेतनानि पुस्तकान्यालम्ब्य प्रवृत्तम्। अध्येतॄन् परितः साम्प्रतं पुस्तकानामरण्यानी। अत एवाचेतनशिक्षया अचेतनमेव तेषां हृदयम्। ततश्च यावच्छक्यं घातुकपुस्तकव्यूहाक्रमणादध्येतारस्त्राणीयाः। पुस्तकस्थस्यानुमानिकतर्कस्यापेक्षया प्राकृतिकसत्यमेव प्रामाणिकतया बोधनीयास्ते।

म० म० पं० गिरिधरशर्मचतुर्वेदाः ( पृ० १८१ )

शिक्षा हि शक्तत्वसंपादनम्। किन्तु वर्तमाना तत्पद्धतिर्निरुद्देश्या। पाणिनिसूत्रे इदं पदमेवोचितमावश्यकं चेत्यादिचरमविचारमयव्याकरणाद्युच्चशिक्षाभिः किमैहलौकिकः किं वा पारलौकिको लाभः? अस्यां हि अर्थदृष्टेरभावः, केवलं शब्दमात्रप्रवणतेति प्रथमः, विज्ञान-भूगोलेतिहास-गणित-भाषाशास्त्रेत्यादीनां समयोपयोगिनां विषयाणां नास्यां निवेश इति द्वितीयः, व्याकरणं न्यायादिकं वाऽवलम्ब्य प्रवृत्तोऽन्तपर्यन्तं तस्मिन्नेवाध्ययनोचितं कालं समापयति, शास्त्रार्थविस्तरात्। अत एवापेक्षितमप्यन्यशास्त्रसंबद्धं विषयं न किञ्चिद्वेत्तीति एकदेशितारूपस्तृतीयः, व्याकरणन्यायवेदान्तादयः कतिपय एव संप्रति पाठ्यविषयाः। व्यवहार-जीविकादिसाधनभूताः कला-राजनीति-तन्त्र-पुराणवाचनादयो विषयास्तु लुप्ता लुप्यन्ते चेति विषयदारिद्र्यं चतुर्थः, समयानुसारेण हि शिक्षाग्रन्थाः सर्वत्रोपयुज्यन्ते किन्त्वस्यां नवीनग्रन्थानामनादर इत्युन्नतिनिरोधः प्रबलः पञ्चमः, पाणिन्यादिसूत्रग्रन्थैरेवास्माकं प्रारम्भिकी शिक्षा प्रचलतीति प्रारम्भिकशिक्षाकाठिन्यं सुदृढः षष्ठः, केवलं शास्त्रशिक्षैवाऽस्माकं पाठ्यक्रमभुक्ता। जीविकाव्यवहारपाटवदायिनी कलादिशिक्षा तु नात्रान्तर्भवतीति सप्तमो दोषः। इत्येवं दूषणसप्तभङ्गी शिक्षाक्रमेऽस्मिन्नर्गलीभूता। तामेतां निरस्य भारतीयसंस्कृतिरक्षामात्रचरमोद्देश्या सेयं शिक्षा तथा प्रवर्तनीया यथाऽस्यां वेददर्शनपुराणादिमर्मज्ञाः, धर्मप्रचारकाः, कर्मकाण्डकोविदाः कथाप्रवक्तारश्च सुसिद्धजीविकोपायाः स्नातकाः संपद्येरन्। न केवलं दूषणान्येवोपन्यस्तानि, सहैव तेषां निरासोपाया अपि चिरादनुभूता निर्दिष्टा महामहोपाध्यायमहाभागैरिति भूयानुपकारः। सर्वथा मननीयोयं निबन्ध इति किं बहुनोक्तेन।

## सारनिवेदनम्

पाठकमहाभागाः! नानाप्रान्तीयानाममीषां पण्डितमहाभागानां संस्कृतशिक्षाविषये स एष निष्कर्षः संनिकर्ष एव श्रीमताम्। वितण्डां पराहृत्य तत्त्वविचारे कृते परीक्षासु प्रचलितो वर्तमानशिक्षाक्रमो न कस्यचिदविकलमनुमत इति परिज्ञायेत। ये किल प्राचीनशिक्षापद्धतेरनुमोदकास्तेऽपि प्रचलितं शिक्षाक्रमं तु परिवर्तयितुमेवेच्छन्ति। यथा

हि-वाराणसेया म० म० पं० श्रीबालकृष्ण-मिश्रमहोदयाः प्राचीनशैलीपाण्डित्यमनुमोदयन्तोऽपि संमन्यन्ते यत्–'कोप-स्वस्वशाखीयवेद-कौमुदी-मुक्तावली-चन्द्रालोक-काव्य-सम्बन्धिकतिपयगद्यपद्यांश-श्रुतबोध-गुणन-भाजनादिगणितं च सर्वेषामनिवार्यमध्ययनीयम् । ततः परं यथेच्छं व्याकरण-न्यायादिकमध्येयमिति' । वेद-कौमुदी-श्रुतबोध-गणित-साहित्याद्यावश्यकविषयसंवलितः काद्यत्वे पाठ्यक्रमः ? ततश्च न किं परिवर्तनमावश्यकम् ? श्रद्धेयैः श्रीचण्डीप्रसादसुकुलमहाभागैरार्षी–पुरातनी च शिक्षापद्धतिः स्मृता, यत्र हि साङ्गानां चतुर्वेदानामध्ययनमादिष्टम् । कस्यां वा परीक्षायां साम्प्रतमङ्गशास्त्रेण सह वेदानामध्ययनं दृश्यते ? न किं तर्हि परिवर्तनावश्यकता ? अन्यैस्तु यैः शिक्षाविषयको विचारः कृतस्तैः स्फुटमेवोदीरितो वर्तमानपाठ्यक्रमेऽसंतोषः । यैस्तु केवलं प्रकाशकानां प्रार्थनोपरि विशेषाङ्केऽस्मिन् यत्किञ्चिल्लेखितव्यमित्येव कृपा कृता तेषां तु कथैवाऽन्या ।

कीदृशः संप्रति संस्कृतपाठ्यक्रमः स्यादिति शिक्षासंशोधने संमतिः स्वस्वविचारानुसारं दत्तैव बहुभिः । एतद्विषयापेक्षिणः पाठकमहाभागाः कुर्युरेव तदुपरि मार्मिकं विचारम् । किन्तु तदिदं साञ्जलिबन्धमावेद्यते यदयं प्रश्नो न तादृक् सूत्तरो यत्सर्वैरेव झटिति 'इदमित्थमिति' निर्धारणीयः स्यात् । अस्माकं न्याय-व्याकरणादीनां मार्मिकविचारपद्धतिर्भूमण्डलेप्यद्वितीया । भाषाऽस्माकं भुवि सर्वतः प्रथमं ज्ञानालोकजननी, सर्वभाषाणां मातृभूता । वाङ्मयमेतस्याः सर्वथाऽनुपमं सर्वोपजीव्यं च । सर्वमिदं सत्यम् , वज्रसत्यम् । किन्तु व्यवहारतः पृथग्भूताया अस्या अस्य च सेविनां न लोकयात्रा निर्वहति । धर्मबुद्ध्या सेव्यतामित्युपदेशस्तु जर्जरभाण्डे दुग्धमिव निर्जीविकानां हृदये नाधुनाऽवतिष्ठते ।

'वर्तमानविज्ञान( साइन्स )–भूगोल–कृषिशास्त्रादिसाम्प्रतिकविषयाणामनुवादादिना संस्कृतभाषायां निवेशः कार्यो येन व्यावहारिकता स्यादिति' बहव उपदिशन्ति किन्तु सोयं द्रविडप्राणायामादपि महाद्रविडप्राणायाम इति न समीक्षितं तैः । त एव विषयाश्चेत्तस्य ज्ञातव्यास्तर्हि यस्यां भाषायां ते विषया अद्यावधि बहोः कालात्कार्यरूपेण प्रचलितास्तस्यामेव भाषायां तद्विषयाणामध्ययनं लोकस्य सुकरं सर्वाङ्गपूर्णं च स्यादाहोस्वित् संस्कृतभाषायाम् ? यस्यां हि पूर्वमनुवाद एव न सुकरः । प्राचीनग्रन्थास्तु न सुलभा नापि च साम्प्रतं सुबोधा एव । कल्प्यताम्-गृहनिर्माणकला कस्यचित्साधारणजनस्य शिक्षणीया । तत्कृते संस्कृतेऽनूदिता ग्रन्था उपयोगिनो भवेयुरथवा वर्तमानशिल्पिभ्यः प्रत्यक्षशिक्षणम् ? अपेक्षिते च पुस्तकसाहाय्ये हिन्दीभाषाग्रन्था उपयुक्ताः स्युरथवा संस्कृतेऽनूदितानि पुस्तकानि ? ततश्च व्यावहारिकत्वसंपादनार्थं नायमुपायो हृदि पदं लभते ।

बहुभिश्च तादृशा उपाया उपदिष्टा ये

केवलं विचारमात्ररमणीयाः, न तेषां कार्यरूपे परिणमनं संभवि। अत एव हास्यरसोपकरणभूता एव। सर्वमन्यत्तिष्ठतु-"समस्तभारतव्यापिनी एका महामहती विद्वत्परिषत्स्यात्, यस्या हस्ते भारतशासकेन संस्कृतशिक्षापद्धतेः कृते प्रमाणीकरण-परिवर्त-परिवर्द्धनोनीकरण-नूतनांशनिवेशादयः सर्वेप्यधिकारा दीयेरन्।" अपि नेदं गगने बीजाकरणम्? भारतशासको यद्यस्माकं हस्तगत एव तर्हि भारतीयविद्यालयेषु राजाज्ञया संस्कृतशिक्षैव कुतो न प्रवृत्ता स्यात्? किमिति शाखाचङ्क्रमणमारभेमहि? समपेक्षितो निधिरेव चेद्धस्तगतः स्यात्तर्हि वनाद्वनमाहिण्डमाना निध्यञ्जनौषधिमूलं किमिति खनेम? "पृथग् ग्रामा एव पण्डितानां निवासनीया येषु मिथः संस्कृतमेव सर्वैर्व्यवह्रियेत। ततश्च तेषां पुत्र-पौत्र-प्रपौत्रैर्व्यवह्रियमाणा संस्कृतभाषा शनैः शनैर्व्यावहारिकी स्यात्।" यदि संस्कृतसेवितां हस्ते ग्रामादीनामावासनिरासशक्तिरेवाऽभविष्यत्तर्हि परितः क्रन्दनमेव किमित्यभविष्यत्? आम्, 'शास्त्रशिक्षया सह जीविकार्थमर्थोपार्जनविद्याग्रहणमपि किंचिदस्त्विति' केषाञ्चित् (देवर्षिभट्टश्रीरमानाथशास्त्रिप्रभृतीनाम्) संमतिरवश्यं शक्योपायेति सर्वैरुपादेयैव।

'राजकीयविश्वविद्यालयाधिकारिणः संप्रार्थ्य संस्कृतभाषा सेयं प्राधान्यं प्रापणीया' 'संस्कृतपरीक्षासु एवमिव संशोधनं कारणीयम्' इत्याद्याः संमतयः प्रायो बहूनामेव समवाप्येरन्। "भारतसर्वस्वभूतापि सेयं भाषा हा हन्त सांप्रतं पराभवं गता गमिता वा" इत्याद्याक्रोशोपि पारतन्त्र्यं वा समयं दैवं वा निमित्तीकृत्य प्रायः सर्वैरेव सकरुणमाविष्कृत एव। अवश्यमापाततः श्रवणे ता इमाः सूक्तयो वक्तुः संस्कृतभाषानुरागं सूचयन्ति, उपायप्रावीण्यं वा निर्देशकमहाभागस्य परितो घोषयन्ति, किन्त्वासां मूले सूक्ष्मैका वाणी कर्णयोरनयोर्निभृतमागुञ्जति यत् 'संस्कृतभाषाया भाग्ये नाधुनापि भारतीयजनतायां विहरणं दैवानुमतमिति'।

प्रवाहानुगामिनीनां पङ्क्तीनां संमुखे कटूक्तिरपि सत्यसम्बन्धवशात्किञ्चिदाकर्णयितुं काम्यते चेन्निर्भ्रममहं निवेदयिष्ये यत्सर्वमिदं दुराशामात्रम्। स्वस्वार्थसिद्धये एकार्णवं जगत्कर्तुमुद्यतेषु प्रभुत्वशालिषु, युगेऽस्मिन् दुर्बलस्य परस्य हस्ते प्रभोः स्वाधिकारसमर्पणं किं शिक्षितनामधारिभिरपि विश्वसितुं शक्यते? स्वभाषां दूरे कृत्वा संस्कृतभाषायाः प्रधानीकरणं भारते किं संप्रत्येवमेव संभवेत्? सुदूरं गम्भीरं च विचार्य या भूमण्डलव्यापिनी भाषाऽत्र प्रचारिता सा किमेवमेवाऽऽपसारिता स्यात्? माऽस्तु विस्तरः, पुरःस्थितपर्वतस्य कृते किं वा दूरवीक्षणयन्त्रेण? अस्माकमार्याणां धर्मभाषायाः संस्कृतभाषायाः संरक्षणाय धर्मोऽस्मान् यदि प्रेरयति तर्हि पूर्वोक्तान् सुखस्वप्नान् विस्मृत्य स्वयं पण्डितैरेवोत्त्थातव्यं स्यात्। धर्मं वा कर्मकाण्डं वा जीविकां वाऽवलम्ब्य संस्कृतभाषातः संस्कृतपण्डितानामेव स्वार्थसंबन्धः। संस्कृतभाषया किं राजा जीवति, येन

संस्कृतभाषाप्रचाराय स व्याकुलो भवेत् ?

किञ्च–विवाहादिधार्मिककृत्येषु यदि राजशक्तेः स्वल्पोपि हस्तक्षेपो भवति तर्हि धार्मिकपण्डितसमाजः सहसैवाऽग्निशर्मा भवति। उचितं चाप्येतद्धर्मप्राणानां भारतीयानाम्। किन्त्वद्यत्वे सर्वस्यापि धर्मस्य मूलभूतायाः संस्कृतभाषायाः सर्वंहारे प्रसक्तेऽपि धर्मप्राणाः पंडितपुरन्दरास्तद्रक्षणाय सर्वथा परस्य परस्य मुखमवेक्षन्ते इत्यहो वलवती भवितव्यता। वेदाऽक्षरश्रवणाधिकारादपि येऽस्माभिश्च्याविताස्तेषामुपर्येव सांप्रतं वेदरक्षाया भारोऽप्यस्माभिर्विनिहित इत्यहो विरोधालंकारस्य व्यापकत्वम्। सर्वविषयेषु निर्जीवानामपि संस्कृतपण्डितानां नाडी धर्मविषयेष्वद्यापि किञ्चित्स्फुरतीति जाने। किन्त्वधुना धर्ममूलस्य निर्मूलनप्रसङ्गेऽपि यदि निश्चेष्टता स्यात्तर्हि किमनेन बुध्यताम् ?

ननु अन्यभाषासमर्थकस्य राजतन्त्रस्य संमुखे धार्मिकपण्डितानां कियती वा संस्कृतप्रचारे शक्तिरिति चेत्, यावती शक्तिस्तावर्तिक पण्डितैः प्रयतितम् ? धर्मस्थानानां देवमन्दिराणां च रक्षणं यथा वयं राजप्रातिकूल्येऽपि स्वजीवनध्येयं मन्यामहे तथा किं दृष्टिर्धर्मभाषायामस्यां देववाण्यामस्माकं निपतति ? यानि किल कार्याणि राजायत्तानि, राजसाहाय्यं तेष्वपेक्षितं स्यात्। किन्तु येषु कार्येषु राज्ञा न संबन्धस्तेषु किं भाषासंबन्धिकार्येषु संस्कृतभाषायै दीयतेऽस्माभिरधिकारः ? संस्कृतशिक्षितैर्मौखिके लेख्यव्यवहारे वा किमुपादीयते देववाणी ? गृहे किं व्यवह्रियते संस्कृतम् ? निजौरसपुत्रा भ्रातृव्या वा किं पाठ्यन्ते संस्कृतमेव ? [ सूचकाः सूचयन्ति यत्–शुद्धसंस्कृताध्ययनं दूरे, जीविकार्थं राजभाषाध्ययने-उपभाषा-(सैकिण्डलैंग्वेज) रूपेणापि सेयं वराकी संस्कृतभाषा नोपादीयते संप्रति पण्डितपुत्रैः ] मिथो मिलितेषु संस्कृतज्ञेषु किं प्रचलति संस्कृतेनैव भाषणम् ? अवकाशसमये चित्ताह्लादनाय भाषान्तरमयम् उपन्यासा–(कथाकाव्य)दि यथा प्रणयतः पठ्यते तथा संस्कृतपुस्तकान्युपादीयन्ते कच्चित ? संस्कृते किञ्चिदानन्दजनकमेव वा नास्ति ? नास्ति चेत्कस्यायं दोषः ? साहित्यवृद्धिः कस्य कर्तव्यम् ? धार्मिकमन्दिरेषु धार्मिककृत्येषु च किं संस्कृतस्यैव सर्वथा प्रवर्तितोऽस्माभिर्व्यवहारः ?

सर्वमन्यद्दूरेऽपयातु, येषु स्थानेषु संस्कृतसंरक्षणस्याऽभावे स्वयमस्माकं स्वार्थहानिर्जीवनहानिर्वा प्रसज्यति तेष्वपि किमस्माभिर्वराकी सेयं संस्कृतभाषा संरक्ष्यते नाम ? अन्यप्रमाणापेक्षया प्रत्यक्षस्य सर्वैरपि प्राबल्यमङ्गीक्रियते नूनम्। प्रत्यक्षतो दृश्यते यत्–'राजपूतानाबोर्ड'सदृशीभिः संस्थाभिः सेयं संस्कृतगवी चक्षुषोरस्माकं संमुख एव निर्दयं विशस्यते, धार्मिकैरस्माभिश्चाऽव्याकुलं स्थीयते ! अपि यथाशक्ति निर्वाहितं संस्कृतपण्डितैः स्वकर्तव्यम् ?

अस्तु. एवमिव संस्कृतभाषासेवनविषये सर्वतः प्रसिद्धिमुपगतेऽस्माकं कर्तव्यपालनपाटवे संमुखोपस्थितं शिक्षासंशोधनमिदमति-

तमामवधानेन मननीयम्, नानाप्रान्तेषु शिक्षाव्यवसाय एव जन्म यापितवतां महानुभवशालिनामेव निर्धारणीयं चेति सुस्पष्टमेव। म० म० श्रीगिरिधरशर्मचतुर्वेदसदृशैश्चतुरस्रविद्भिः प्रदर्शितानुपायान्मार्मिकदृष्ट्या विचारयेयुः पाठकमहोदयाः। एभिर्हि बहोः कालात्पुरस्तादयं प्रश्नः सूक्ष्मेक्षिकया न केवलं विचारित एव अपि तु एतद्विषयकविचारान् भारतीयप्रसिद्धप्रसिद्धपण्डितानां सविधे संप्रेष्य संस्कृतशिक्षासम्बन्धे सुनिश्चितं पाठ्यक्रमं निखिलभारतीयसंस्कृतसाहित्यसंमेलनद्वारा निर्धारयितुमाचेष्टितमपि। किन्तु पण्डितदिग्गजानां नैसर्गिकनिमीलिकया यावत्साध्यं संभवि तावदेव निष्पन्नम्। एतत्संशोधनस्य कश्चिदंशो हिन्दुविश्वविद्यालयेनाङ्गीकृत्य कार्यरूपेण प्राचालितोऽपीत्यपि स्मर्यते।

तत्त्वतो विचारणेन सत्यं त्विदं यद्भारते संप्रति संस्कृतशिक्षासंशोधनाधिकारिणो गवेषिता अपि भूयस्तरां विरलायन्त एव, न च सहसा सर्वैर्निर्धारणीया एव। अत एवैवंविधानां समर्थानामेव संमतीः संगृह्य तादृशानामेव समितिः शिक्षामिमां चेत्संशोधयेत्तदा स्यात्किञ्चित्फलम्। अन्यथा-विभिन्नविभिन्नमस्तिष्कशालिनां महाविदुषामधिकसंमत्याऽपि नाभीष्टफललाभसंभावना। शास्त्रपाण्डित्यं वावदूकत्वं वाऽन्यत्, शिक्षोपायपरीक्षकता चाऽन्येति स्थूलस्थूलतमं सत्यम्।

पाठकमहोदयाः! विशेषाङ्कोऽयमङ्कगत एव संप्रति श्रीमताम्। परं दुर्बलयोः स्कन्धयोरुपर्ययमारोपितोऽभूद्भारो नूनम्। अत एव विषयसंकलने, संशोधने, चित्रादीनां निवेशने च यास्त्रुटयः संजाताः, प्राप्तनिबन्धानामप्रकाशने च योऽयमपराधः संवृत्तस्तदर्थमयमहमाबद्धाञ्जलि क्षमामभियाचे, प्रार्थये च—

दददती मुदाक्षयदीक्षा—
उभय१परीक्षासु सफलतां सृजती।
सेयं संस्कृतशिक्षा
सकलसुभिक्षाय जायतां पठताम्॥

भट्टश्रीमथुरानाथशास्त्री।



१—ऐहलौकिकी ( प्रसिद्धा ), पारलौकिकी ( परलोकोपयुक्तसुकृतसंचय-भगवत्तोषणादिरूपा ) च

॥ श्रीः ॥

# सहायकानां नामावली

| | | | | |
|---|---|---|---|---|
| १००) | राजाबलदेवदासजी बिडला | ... | ... | बनारस |
| १००) | पं० रामचन्द्रजी शास्त्री, संस्थापक-संस्कृत-प्रचारक-विद्यालय | | ... | मुंबई |
| ५१) | वैद्य नन्दकिशोरजी भिषगाचार्यः | ... | ... | जयपुर |
| ५१) | स्वामी जयरामदासजी, ,, | ... | ... | ,, |
| ५१) | दीवानबहादुर दीवान कृष्णकिशोरजी, रईस | | ... | लाहौर |
| ५१) | बंसीधरजी बैजनाथजी जालान | ... | ... | कलकत्ता |
| ५०) | पं० शिवदत्तजी शास्त्री | ... | ... | तुमसर |
| ५०) | सेठ रामकृष्ण रामनाथजी | ... | ... | तुमसर, |
| २१) | कन्हैयालालजी तिवाडी पुरोहित एम्० ए० विशारद | | ... | जयपुर |
| १५) | श्रीमान् से० सूरजमलजी नागरमलजी, | ... | ... | रतनगढ |
| १०) | गांगेयनरोत्तम शास्त्री, | ... | ... | कलकत्ता |
| ६) | मणिरामजी वैद्य भिषगाचार्य | ... | ... | रतनगढ |

५) मुद्रादातारः प्रतिवर्षमेवैतत्पत्रस्य सहायका यथा—

| | | | | |
|---|---|---|---|---|
| ५) | बुलाकिरामजी शास्त्री | ... | ... | किशनगढ |
| ५) | एन्० माधव मेनोन | ... | ... | मद्रास |
| ५) | सीताराम शास्त्री | ... | ... | कलकत्ता |
| ५) | हरिहरशास्त्री, | ... | ... | हैदराबाद |
| ५) | वैद्य नन्दकिशोरजी भिषगाचार्यः | ... | ... | जयपुर |

५८१) रु०



प्रेमप्रकाश इ० प्रेस, जौहरी बाजार जयपुर ।